भुवनेशलौकिकन्यायसाहस्री 1



# BHUVANEŚA LAUKIKANYĀYASĀHASRĪ

*by*

Pt. Thakuradatta Sharma

**VYASA PRAKASHAN**

VARANASI - 221001

# BHUVANEŚA LAUKIKANYĀYASĀHASRĪ

*by*

Pt. Thakuradatta Sharma

1989

**VYASA PRAKASHAN**

VARANASI - 221001

पण्डितठाकुरदत्तशर्मविरचिता-

# भुवनेशलौकिकन्यायसाहस्री ।


व्यासप्रकाशन

वाराणसी

मकरसंक्रान्ति १९८९

॥ श्रीः ॥

# भुवनेशदत्तवृत्तान्तः ।

श्रीमदखिलललामभूरिभरभर्तुर्भारतस्य नानानादनदन्नदीनदपञ्चक-पञ्चाम्बुनामावच्छिन्नजनषदान्तर्गतेऽसङ्ख्यश्रीवाच्यभक्तभीभञ्जकभगवदा-त्तनृसिंहावतारे गाढगुणगणप्रगुणगणकगायकाद्यग्रगणनीये धर्म्म-धैर्य्यधनधान्यधामत्राणीभूते मूलत्राणनामनगरे किलासीच्छास्त्रशासितशमा-दिशोभितज्योतिर्विद्याविवरणवरीयान्विप्रवरवत्सवंशाऽवतंसो विद्याध्ययना-ध्यापनधारितधीरध्यवधारितधर्मकृताधर्म्मसमूलविध्वंसो वेदविहितषट्कर्म्मचे-क्रियतासादितकीर्त्तिधवलीकृतकाष्ठाभागभ्रामितक्षीरधीविमोहितहंसः सारस्व-तसेतुपालोपाह्वकुलकमलदिवाकरः श्रीमदाशानन्दाभिधो ब्राह्मणाग्रगण्यः । तस्मात्सद्भावविभवभावितात्मेष्टदेवप्रभावेण षट्शास्त्रनिष्णातो दिवाकरः को-मलकान्तकमलकुलानाम्, निशाकरः सान्त्वसत्स्वभावसौम्यसुसच्चकोराणा-म्, आकरोऽग्रेगणितव्यगुणरत्नानाम्, रत्नाकरो विविधधरेलिमधवलधैर्य्य-धर्म्मधनानाम्, अन्तर्वाण्यग्रेसरः श्रीमान् ठाकुरदत्ताख्योऽजनि । अनेन व्राजंव्राजं काशीन्द्रप्रस्थवृन्दावनेषु विद्यापाठि । अयं निजदेशदशदिक्षु रा-राज्यमानराजद्वारेषु सुस्वधर्म्मसंसत्सु सम्मानं लेभे । अनेन विद्याचुञ्चुना विद्ययर्ष्यृणं कर्मठेन ब्रह्मसत्रादिकर्मणा देवर्णश्च निवर्त्याऽवशिष्टतृतीयपितृण-मोचनकान्तिकेन हरिवंशश्रवणाद्युपायकदम्ब आरब्धः । अथ व्रजत्यनेहसि तस्य श्रीविश्वम्भरदेवदयया चतुस्त्रिंशदुत्तरोनविंशतिशततमे ( १९३४ ) श्रीविक्रमादित्याब्दे कुलभूषणमात्मज आविरभूत् । यो नाम्ना भुवनेशदत्तो दीपोऽनात्मजत्वान्धकारितोदवसितानाम्,रत्नं किलासङ्कसुकक[1]कान्तककाञ्चन-कुलानां भवति स्म । अयं सितपाक्षिकप्रतिपत्प्राप्तः क्षपाकर इव पितृवे-श्मनि वरीवृध्यमानोऽताराम्पतिरपि चन्द्रोऽल्पीयसि काले सिंहस्कन्ध आयतोरस्को विशालदोः सिंहसंहननो बभूव । अनेन वरीवृत्यमानमही-

---

१ असङ्कसुका निरपवादा ।

क्षित्प्रचालितेऽध्ययनागारेऽधीत्य परीक्षोत्तीर्णा । एतस्मिन्काले इष्टदेवदयर्यो-च्चवंशावतंसेन श्रीरामनगरवास्तव्येन कन्यादित्सुना सुप्रसिद्धेनैकेन विप्रेण वाग्दानमकारि । अथ गणितगणकगणगुणिते सुमुहूर्त्ते सुलग्ने पीतरक्ताद्यनेकवर्णैर्वस्त्रैर्विविधझङ्कारिशिञ्जताभूषणैर्माणवकवयस्यप्रवेयीभिर्विविधविषयाहूतान्तर्वाणिभिर्वरानुयायिभिः प्रमोदेनोत्साहेन समारोहेण पञ्चसहस्ररूप्यकव्ययेन पितोद्वाहं चकार । तस्य गच्छाति समये मातृङ्कभूषणं पितृयशोवर्द्धकः पल्यङ्कशोभशुभो नरेन्द्रनामाऽऽत्मजः प्रादुर्बभूव । अयं पितामहप्रभृतीन् नानाकिलकिलकल्लोलस्वनैर्बालभावसुलभैः क्रीडनैः समतोषयत् । अथ गुणलुब्धो भुवनेशोपि इन्ट्रेन्साख्यपरीक्षामारब्धवान् । पश्चात्र दैववशात्परीक्षायामनुत्तीर्णता जाता । तदापि लवपुरे त्रिंशद्रूप्यकमासिकं जग्राह । ततः प्रायो रूप्यकाणि जनकोपचर्यायां प्रेषयांचकार । तत्रत्यनिवासेन हिन्दी-भाषायां सुलेखको भूत्वा सत्यश्रीसनातनधर्मलेखानलिखत् । इंग्लिशभाषायामपीदृक्षाँल्लेखाँल्लिलेख, यानवलोक्याऽदभ्रतज्ज्ञा अपि विसिष्मियिरे । ततः कियत्कालोत्तरमनेन पितुः सेवाऽसौलभ्यात्पितुराज्ञावशाच्च तस्मान्निवृत्य मूलत्राण एव स्थितिरकारि । अयं देशोन्नतिचेक्रियः श्रीसनातनधर्मोपदेदिशो ज्योतिश्शास्त्रशाश्वतपरिश्रमश्रमितं पितरमवलोक्य तदसाधारणश्रममपाचिकीर्षुर्ज्योतिश्शास्त्रमारभ्याल्पीयोऽनेहसाऽधिगतराद्धान्तोऽपरसिद्धान्ते च चकितकारिसिद्धान्तसाधितप्रक्रियः (भूत्वा) इन्ट्रेन्साख्यपरीक्षायामल्पपठितगीर्वाणगीरपि सरित्सागरादिग्रन्थेषु सुवदावदो बभूव । अनेन सत्यवक्त्रा प्रियंवदेन सदाचारिणा सत्सङ्गतिपरेणाभक्ष्याभोजकेन त्रिकालसन्ध्यायां शिवार्चने शिवादिस्तोत्रादिषु च दृढा भक्तिरकारि । स्तोत्रपाठानेहसि घनगम्भीरगर्ज्जनमिव दश दिशो गुञ्जयति स्मेति किमधिकेन । अथवा—निलयो धैर्य्यादिगुणानाम्, दीपोऽधैर्य्यादिदोषपतङ्गानाम्, प्रेमा प्रियतमानाम्, चक्षुः पित्रोः, आश्रयो भ्रातुः, चन्द्रश्चकोरबान्धवानाम्, शृङ्गारो योषिताम्, कमलं दर्शकषट्पदानाम्, सेनापतिर्नीतीनाम्, नन्दनः कुलस्य, चन्दनः सुहृदयानाम्, ईशो भुवनानामासीत् । येनास्यारम्भः कारितः स प्रियदर्शनः पुत्रस्तं कर्मशूरं तेन कर्म्मणा श्रांतं पितरमसन्तोष्य कुतस्तस्मा आश्वासन-

मप्यकृत्वा तस्मै वियुक्ततां दर्शयन्, तस्य दशामगणयन्, तस्मिन्बद्ध-श्रद्धोऽप्यश्रद्धां प्रकटयन्, किम्भूतः किं कृतवानिति वक्तुं न क्षमा वयम्, येन देशस्य धर्म्मस्य कुलस्य चोन्नतिरासीत्, स क्वास्ति, इति लेखितुं लेखनी न क्षमा, करो वेपते, लेखन्यवस्रंसते, गात्राणि शिथिलन्ति, हृदयं ज्वलति, कण्ठः कफेन रुध्यते, अश्रूणि पतन्ति, मनसश्चक्षुषश्चांधकारो दृश्यते, हा! अद्य कः परिचितो गदितुं क्षमः, यद्भूतले नास्ति भुवनेशः, केनाहूतः कुत्र गतः, हा दुर्दैव! कस्मात्पृच्छामः? शतधा भवति हृदयम्, भित्तयोपि रुदन्ति, किं पुनः परिवारः, किं पितरौ, हा हा हा!!! यस्य पितुरमृतफलं नेत्रानन्दो हृदयनन्दनः पुत्रः, यस्य भ्रातुः शासकः रक्षकः अग्रजः, यस्या विंशतिवर्षायाः सगर्भाया धर्म्मपत्न्याः प्रियः स्वामी, यस्य 'पितःपितः' चाकथ्यमानस्य वर्षचतुष्टयस्य पुत्रस्य लालनस्थानकस्तत्रभवान् पिता; गतः, तेषां दशां को गदितुं समर्थः। ईदृशे क्षते जातेऽपि ईदृशे वज्रप्रहारेऽपि दुर्दैवं न विश्रान्तम्। तद्दुर्विपाकि पुनः क्षतेऽङ्गारं लवणधारं वज्रप्रहारं च युगपत्पातयामास, यत् 'पितःपितः' चाकथ्यमानो नरेन्द्रोपि पितुः सन्निधौ शिवलोके गतः! कष्टम्! अवशिष्टाधारोऽपि पितामहस्य मात्रादीनां च विहाय तान्दिवि विलीनः। अकाले षड्विंशतिवर्षायुषि भुवनेशस्वर्गारोहणं, चतुर्वर्षायुषि नरेन्द्रानुगमनं कस्य परिचितस्य सहृदयस्य गुणज्ञस्य शोकाय न भवति। यस्योद्योगेन यस्यार्थमयं ग्रन्थ आरब्धः स भूतले नास्ति किं कुर्मः परिश्रममथ वा सदाशिवलोके तस्यात्मसंतोषार्थमारभामहे। तस्योद्योगसाफल्येहया 'भुवनेशन्यायसाहस्री' नाम्ना तस्य स्मरणे प्रकाश्यते ग्रन्थः। अस्यावलोकनजन्यलाभोप्यलमपरलोकस्थभुनेशस्य साहाय्यं क्रियादिति विज्ञापयति श्रीमद्गुरुठाकुरदत्तचरणशरणतासादितयथामत्यक्षरबोधो विद्यया जन्मना च तद्वंश्यस्तेजोभानुश्शास्त्रीति शम्॥

---

॥ श्रीः ॥

# अथ भुवनेशलौकिकन्यायसाहस्रीन्यायानुक्रमणिका ।

## सा.



## सि.



## सु.

इति भुवनेशलौकिकन्यायसाहस्रीन्यायानुक्रमणिका समाप्ता ।

॥ श्रीः ॥

# भुवनेशलौकिकन्यायसाहस्री।

श्रीगणेशाय नमः॥वन्दे श्रीगणनायकाङ्घ्रिकमलं लोके सदा वन्दितं भक्तस्वान्तसरोवरेषु सततं सल्लँग्नमानन्ददम् ॥ हैमाभूषणकेसरं सुललितं सौन्दर्य्यगन्धान्वितं नित्यं निर्ज्जरषट्पदैश्च कमलं पेपीयमानम्मुहुः ॥ १ ॥ श्रीमद्गुरुं विभवराममुमेशमूर्त्तिं नानादिशागतसुशिष्यसुगीतकीर्त्तिम् ॥ वाराणसीवसतिवासितवामदेवं षट्शास्त्रपाठनवशीकृतदेवदेवम् ॥ २ ॥ भाष्ये फणीन्द्ररचिते विहितश्रमन्तं वंदे विदग्ध्यवरवन्दितपादपद्मम् ॥ विद्योपकारकरणाय कृतावतारं ब्रह्मावबोधमुनिवर्य्यमहानुभावम् ॥ ३ ॥ तत्कृपालेशमात्रेण कृतकृत्यो द्विजः सुधीः ॥ कुर्व्वे ठाकुरदत्ताख्यः सेतुपालाह्वजातिजः ॥ ४ ॥ स्मृतये भुवनेशस्य ज्येष्ठपुत्रस्य धीमतः ॥ लौकिकन्यायसाहस्रीनाम्ना ग्रन्थं सुसंग्रहम् ॥५॥ ये चात्र लौकिकन्यायाः प्रोक्तास्तेषामुदाहृतिः ॥ वेदान्तशास्त्रगा काचित्काचिच्च शब्दशास्त्रगा ॥ ६ ॥ काचिन्न्यायानुगा काचिन्मीमांसाशास्त्रगा तथा ॥ लौकिकोक्तिर्य्यथा तद्वत् प्रायः प्रोक्तापरापि वा ॥ ७ ॥ अर्थमात्रं क्वचित्तेषामर्थे स्पष्टे स्फुटं स्मृतम् ॥ प्रायः संक्षेपतः प्रोक्तं विस्तरादपि च क्वचित् ॥ ८ ॥ अथ तावन्मङ्गलार्थं परिनिर्विघ्नसमाप्त्यर्थं च गणपतिन्याय उदाह्रियते—

# अथ गणपतिन्यायः ॥ १ ॥

"गणः प्रमथसङ्ख्यौघे चण्डासैन्यप्रभेदयोः" इति मेदिनी ॥ गुणस्य प्रमथाख्यरुद्रानुचरस्योद्भूताऽवयवभेदक-समुदायस्य प्रत्येकस्य पतिर्वा—अनुद्भूताऽवयवभेदात्मकसमूहस्य पतिरिति गणपतिशब्दार्थः—इत्यर्थद्वयविवक्षायां यथा गणपतिशब्दश्चरिताऽर्थस्तथा प्रकृतेऽपि ॥ किञ्च ॥ गाणपत्यास्तु—तुरीयः परमः शिवः श्रीगणपतिरेव, स एव वैष्णवैर्व्वासुदेवशब्दाभिधेयो महाविष्णुरित्युच्यते न तु शिवद्वयं विष्णुद्वयं वाऽस्ति येनैकः शिवो विष्णुर्वा मूर्त्तित्रयमध्यगो द्वितीयस्तदतिरिक्त इत्युपगम्येत । एवञ्च स एव साक्षात्परम्ब्रह्म ब्रह्मादीनान्तु तदंशत्वेन ब्रह्मत्वं व्यपदिश्यते विष्णवंशानामिव विष्णुत्वम् । तथा च श्रुतिः—"नमस्ते गणपते त्वमेव प्रत्यक्षं ब्रह्मासि"इत्यादि । अत्र विशेषसम्बन्धत्वादन्ययोगव्यवच्छेदिनैवकारेण 'पार्थ एव धनुर्द्धरः' इत्यत्र एवकारेण पार्थादन्यत्राऽधनुर्द्धरत्वस्येव गणपतेरन्यत्र साक्षाद्ब्रह्मत्वयोगो व्यवच्छिद्यते । अतः श्रेयस्कामैस्सर्व्वैरपि सर्व्वदा स एवाराध्यस्तदाराधनं विनाऽन्यदेवपूजावैयर्थ्य स्मरणेन फलजनकत्वात् । सूर्य्याद्याराधनफलारोग्यादि-मोक्षान्तकथनानन्तरं "सर्व्वमिच्छेद्गणाधिपात्" इति स्मरणमप्यत्र मानम् । "गणानां त्वा"इति शुक्लयजुर्व्वेदवाजसनेयिसंहिताऽध्याय २३ मंत्रो १९ ऽपि प्रमाणम् । तद्यथा-"गणानां त्वा गणपति ँ हवामहे प्रियाणां त्वा प्रियपति ँ हवामहे निधीनां त्वा निधिपति ँ हवामहे वसो मम

आहमजानिगर्ब्भधमात्वमजासि गर्ब्भधम्"॥ अस्याऽर्थो यथा—वसन्ति सर्व्वभूतानि यत्र,—सर्व्वस्मिन् वसतीति,— सर्व्वत्रोष्यतेऽनेन वा,वस्ते,वस्यते,वा स वसुः । 'वस निवासे' 'वस आच्छादने' वा । "शृस्वृस्निहित्रप्यसिवसिहनिक्लिदि- बन्धिमनिभ्यश्च" इत्युः । तत्सम्बोधने हे वसो परमेश्वर ! वामहेममवसो मदीयधन श्रीगणेशदेव गणाना पतिं त्वा त्वां हवामहे, आवाहयामः 'ह्वेञ् आह्वाने, स्पर्द्धाया च" भ्वादिगणीयो धातुः ह्वयतीत्यादिरूपं, दृशेः पश्यादेशवत् ह्वयतेर्हवादेशेन 'हवामहे' इति प्रयोगनिष्पत्तिः ॥ गण्यन्ते प्रशस्तत्वेनेति गणाः श्रेष्ठाः "गण सङ्ख्याने" घञ्, अज् वा, अल्लोपस्य स्थानिवत्त्वान्नवृद्धिःतेषां मध्ये ये गणाः प्रशस्ततरास्तेषां पतिमीश्वरमित्यर्थः॥सकलप्रशस्ततरमीश्व रमिति भावः ॥ किञ्च—प्रियाणां प्रेष्ठानामिन्द्रादिदेवानां यज्ञाधिपतित्वेन तेषां ये प्रेयांसः कार्त्तिकेयादयस्तारक दिवधजनितसुखहेतुभूतत्वात्तेषां पतिं युद्धारम्भे त्वदाराध- नेन विघ्नध्वंसपूर्व्वकविजयप्रदत्वेन पतिं फलप्रदातारमीश्वरं त्वां हवामहे॥किञ्च-निधीनां निधिपतिं त्वां हवामहे-निधयः "महापद्मश्च पद्मश्च शंखो मकरकच्छपौ ॥ मुकुन्दकुन्द- नीलाश्च खर्व्वश्च निधयो नव ॥" इति महापद्मादयो धना- दीनि तेषां मध्ये ये निधयोऽतिशयानन्तसुखभोगप्रवर्तिका योगसिद्धयस्तेषा पतिं दातारं त्वां हवामहे ॥ मदीये कार्य्ये जनितजायमानजनिष्यमाणाऽनेकविधप्रत्यूहसन्दोहविध्वं- सनपूर्व्वककार्य्यसिद्धिहेतवे गणेशावाहनमन्त्ररूपस्तुतिः

क्रियत इति ॥ किञ्च–गणपते अहं त्वया आ अजानि उत्पादितः॥ आङ्पूर्व्वकणिजन्तस्य 'जनी प्रादुर्भावे' इति धातोः कर्म्मणि रूपमाजानीति "व्यवहिताश्च" १। ४।८२ इति व्यवहिते छान्दसप्रयोगः ॥ कीदृशोऽहं–गर्ब्भधं मात्रा गर्ब्भे धीयते यस्स गर्ब्भधं "व्यत्ययो बहुलम्" ३।१।८५ इति सूत्रेण लिङ्गव्यत्ययः छान्दसः, गर्ब्भध इत्यर्थः॥ उक्तं च–"सुप्तिङुपग्रहलिङ्गनराणां कालहलच्स्वरकर्तृयङां च। व्यत्ययमिच्छति शास्त्रकृदेषां सोपि च सिद्ध्यति बाहुलकेन"इति॥ किञ्च-अजति गच्छति भक्तहृदयं,वा–अजति क्षिपति शरानसुरान्प्रति,–'अज गतिक्षेपणयोः'अच् प्रत्ययः ॥ अथवा–न जायते अजः उक्तं च–"नहि जातो न जायेऽहं न जनिष्ये कदाचन। क्षेत्रज्ञः सर्वभूतानां तस्मादहमजः स्मृतः॥" इति ॥ 'जनी प्रादुर्भावे' "अन्येष्वपि–"इति डः-तत्सम्बोधने हे अज जन्मादिविकाररहित अवयवावयविभागरहित इति यावत्,–त्वं गर्भधं गर्भधो माऽसि न भवसि, एतेन जन्मविकारकथनेन तदुत्तरत्वेन सर्व्वेषां यथाक्रमसम्भवात् । उक्तं हि यास्कर्षिणा–षड्भावविकारा भवन्तीति वार्षायणिः–जायते, अस्ति, वर्द्धते, विपरिणमते, अपक्षीयते, नश्यतीति, षड्भावविकारवान् पराधीनः शरीरवानिति ध्वन्यते, त्वन्तु विकाराऽभाववान् निर्व्विकाररूपेण स्वाधीनः परमेश्वरः"नमस्ते गणपते"इति श्रुतेरत एव सकलं कर्तुमकर्तुमन्यथा कर्तुं समर्थोऽसीति सूचितम् ॥ न चाऽस्य"गणानां त्वा–" इति मन्त्रव्याख्यान-

स्योव्वटसायणादिवेदभाष्यकर्त्तुक्तेर्भिन्नार्थकत्वेनाऽप्रामाण्यं स्यादिति वाच्यम् । वेदमन्त्राणां कामधेनुरूपत्वात्, एकस्यैव मन्त्रस्याऽऽप्तोक्ताऽनेकधाऽर्थानां शास्त्रेषूपलम्भत्वाच्च । तथा हि-"चत्वारि शृङ्गा त्रयोऽस्यपादा द्वे शीर्षे सप्त हस्तासोऽस्य । त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्यां आविवेश" ॥ इति ॥ अयं मन्त्रः शुक्लयजुर्वेदवाजसनेयिसंहितायां सप्तदशाध्याये ९१ सङ्ख्यात्मकः । ऋग्वेदे च तृतीयाऽष्टकीयाऽष्टमाऽध्यायदशम १० वर्ग्गे तृतीया ऋक् । अस्य मन्त्रस्याऽर्थस्तु-सायणोव्वटमहीधरादिकृतभाष्यार्थाद्विलक्षणो महाभाष्यकारेण कृतः । निरुक्तादिषु चाऽन्यप्रकारेण यास्काचार्य्यादिभिः कृतो दृश्यते । तथाहि महाभाष्ये-चत्वारि शृङ्गाणि-चत्वारि पदजातानि, नामाख्यातोपसर्ग्गनिपाताश्च । त्रयोऽस्य पादाः-त्रयः कालाः भूतभविष्यद्वर्त्तमानाः द्वे शीर्षे-द्वौ शब्दात्मानौ नित्यः कार्य्यश्च । सप्तहस्तासोऽस्य-सप्त विभक्तयः । त्रिधा बद्धः-त्रिषु स्थानेषु बद्ध उरसि कण्ठेशिरसीति । वृषभो वर्षणाद् । रोरवीति-शब्दं करोति । कुत एतद्-रौतिः शब्दकर्म्मा । महोदेवो मर्त्यां आविवेश-महान् देवः शब्दो मर्त्या मरणधर्म्माणो मनुष्यास्तानाविवेश । महता देवेन नः साम्यं यथा स्यादिति शब्दस्य वृषत्वेन निरूपणमिति॥१॥ किञ्च-यास्काचार्य्यैस्तु-चत्वारि शृङ्गेति वेदा एव एते उक्ताः । त्रयोऽस्य पादा इति सवनानि त्रीणि । द्वे शीर्षे प्रायणोदयनीये । सप्त हस्तासः सप्तच्छन्दांसि । त्रिधा बद्ध-

त्रेधा बद्धः मन्त्रब्राह्मणकल्पैर्वृषभो रोरवीति रोरवणमस्य सवनक्रमेण ऋग्भिः-यजुर्भि-सामाभिः। यदेनमृग्भिः शंसन्ति,-यजुर्भिर्य्यजन्ति, सामभिः स्तुवन्ति, महोदेव इत्येष हि महान् देवो यद्यज्ञो मर्त्यां आविवेशेत्येष हि मनुष्यानाविशति यजनाय तस्योत्तरा भूयसे निर्वचनायेत्याह ॥२॥ किञ्च-"अभिधानेऽर्थवादः"१।२।३६ इति पूर्वमीमांसासूत्रविवरणे तु-चत्वारि शृङ्गा इति "चतुर्होत्रामृषेत" इति मन्त्राश्चतुः शृङ्गाणि। त्रीणि सवनानि पादाः।दम्पती द्वे शीर्षे।गायत्र्यादिसप्तच्छन्दांसि हस्ताः। त्रिधा बद्धः त्रिभिर्वेदैर्बद्धः। वृषभः कामवर्षी। रोरवीति शब्दैः सामादिभिः साध्यत्वादिति भाव इत्युक्तमिति ॥ ३ ॥ किञ्च-सायणाचार्य्यः-यद्यपि सूक्तस्याऽग्निसूर्य्यादिपञ्चदेवतात्मकत्वात्पञ्चधाऽयं मन्त्रो व्याख्येयस्तथापि निरुक्ताद्युक्तरीत्या यज्ञात्मकाग्नेः सूर्य्यस्य च प्रकाशकत्त्वेन तत्परतया व्याख्यायते-अस्य यज्ञात्मकस्याऽग्नेः चत्वारि शृङ्गाः-चत्वारो वेदाः शृङ्गस्थानीयाः। यद्यप्यापस्तम्बेन 'यज्ञं व्याख्यास्यामः स त्रिभिर्वेदैर्विधीयते' इत्युक्तं तथाप्पाथर्व्वणस्येतरानपेक्षयैवैकाग्निसाध्यानां कृत्स्नकर्मणामभिधायकत्वात्तदपेक्षया चत्वारि शृङ्गा इत्युक्तम्। त्रयोऽस्य पादाः-सवनानि त्रीण्यस्य पादाः प्रवृत्तिसाधनत्वात्पादा उच्यन्ते। द्वे शीर्षे-ब्रह्मौदनं प्रवर्ग्यश्च, इष्टिसोमप्राधान्येनेदमुक्तम्। सप्त हस्तासः-सप्तच्छन्दांसि हस्ता मुख्यसाधनं छन्दांस्यपि देवताप्रीणनस्य मुख्य साधनमिति हस्तव्यवहारः। त्रिधा बद्धः-मन्त्रब्राह्मणकल्पै-

त्रिप्रकारं बद्धः, बन्धनमस्य तन्निष्पाद्यत्वात्। वृषभः—फलानां वर्षिता। रोरवीति भृशं—शब्दायते, ऋग्यजुःसामोक्तैः शस्त्रयागस्तुतिरूपैर्होत्राद्युत्पादितैर्ध्वनिभिरसौ रौति। एवं महोदेवः—एष यज्ञात्ममहानुभावो देवः। मर्त्यानाविवेश-मर्त्यैर्यजमानैर्निष्पाद्यत्वात् प्रवेश उपचर्य्यते॥ अत्र यास्कः—चत्वारि शृङ्ग इति—'वेदा वा एत उक्ताः' इत्यादिना निरवोचत्तदत्रानुसन्धेयम्॥ अथ सूर्य्यपक्षे व्याख्यायते—अस्यादित्यस्य चत्वारि शृङ्गाणि चतस्रो दिश एताः श्रयणार्हत्वाच्छृङ्गाणीत्युपचर्य्यन्ते। त्रयोऽस्य पादाः—त्रयो वेदाः पादस्थानीयाः भवन्ति गमनसाधनत्वात्। तथा हि—'ऋग्भिः पूर्वाह्णे दिवि देव ईयते' इत्युपक्रम्य 'वेदैरशून्यस्त्रिभिरेति सूर्य्यः' इति हि वेदत्रयेण गणतिराम्नाता। द्वे शीर्षे—अहश्च रात्रिश्चेति द्वे शिरसी। सप्तहस्तासोऽस्य—सप्त रश्मयः षड्विधलक्षणा ऋतवः एकः साधारण इति सप्तहस्ता भवन्ति। त्रिधा बद्धः—त्रिषु स्थानेषु क्षित्यादिषु अग्न्याद्यात्मकत्वेन संबद्धः, ग्रीष्मवर्षाहेमन्ताख्यैस्त्रिभिस्त्रिधा बद्धो वा। वृषभो वर्षिता। रोरवीति शब्दं करोति वृष्ट्यादिद्वारा। स मह्रो महान् देवो मर्त्यानाविवेश तन्नियन्तृतया। "सूर्य्य आत्मा जगतस्तस्थुषश्च इति हि श्रुतम्" एवमब्रादिपक्षेऽपि योज्यम्॥ शाब्दिकास्तु शब्दब्रह्मतया व्याचक्षते। अपरे त्वऽपरतया। तत्सर्व्वमत्र द्रष्टव्यमित्याह ॥४॥ महीधरादयस्तु—यो वृषभः कामानां वर्षिता रोरवीति 'रु शब्दे' यङ्लुगन्तम्। अत्यर्थं शब्दं करोति सोऽयं महोदेवो महति पूजयति, मह्यते वा जनैरिति महो महान् देवः

ब्रह्मादिस्तम्बपर्य्यन्तानां प्राणिनामुपजीव्यो ज्ञानकर्म्मसमुच्चयकारिणां विदुषां शरीरभूतो मर्त्यान्मनुष्यानाविवेश आविशति स्म मनुष्यान् व्याप्य तिष्ठति स्म ॥ यस्य वृषभस्य यज्ञस्य चत्वारि शृङ्गा–शृङ्गाणि ब्रह्मोद्गातृहोत्रध्वर्य्युलक्षणानि । 'त्रयः पादाः–ऋग्यजुस्सामरूपाः । 'द्वे शीर्षे-शिरसी हविर्द्धानप्रवर्ग्याख्ये "शिर एवाऽस्य हविर्द्धानं ग्रीवा वै यज्ञस्योपसदः । शिरः प्रवर्ग्यः" इतिश्रुतेः अस्य वृषभस्य सप्तहस्तासः–सप्त होतारो हस्ता हस्ता इव व्याप्रियन्ते सप्त छन्दांसि वा हस्ताः । यश्च त्रिधा त्रिप्रकारैर्बद्धः प्रातस्सवनमाध्यंदिनसवनतृतीयसवनैर्बद्ध इति॥. शब्दग्रामो वा व्याख्येयः ॥ चत्वारि शृङ्गाणि–नामाख्यातोपसर्गनिपाताः । त्रयः पादाः–प्रथमपुरुषमध्यमपुरुषोत्तमपुरुषाः। त्रयः काला वा । द्वे शीर्षे–कार्य्यताऽव्यङ्गयते सप्त हस्ताः सप्त विभक्तिरूपाः । त्रिधा बद्धः-एकवचनद्विवचनबहुवचनैर्बद्धः । वृषभ इवाऽयमन्यशास्त्राणि अधः कृत्वा रोरवीति । सोऽयं महान् देवो मर्त्यानाविवेश–आविशति स्म, प्रतिपादयति स्म मनुष्येष्विति मनुष्याधिकारवच्छास्त्रस्येति न्यायादित्येवं यज्ञं शब्दश्च वृषत्वेन प्रतिपादयन्तीति॥किञ्चाऽन्ये शिष्टास्तु–वेदरूपयज्ञपुरुषस्य धर्म्माऽर्थकाममोक्षरूपाणि चत्वारि शृङ्गाणि, कर्म्मोपासनारूपास्त्रयः पादाः, व्यष्टिसमष्टिरूपे द्वे शीर्षे, सप्त स्वराः "निषादर्षभगान्धारषड्जमध्यमधैवताः । पञ्चमश्चेत्यमी सप्त तन्त्रीकण्ठोत्थितास्स्वराः"॥इत्युक्ता अस्य हस्ताः, त्रिधा

बद्धः गद्यपद्यगीतिरीतितो बद्धः। यद्वा—ईशात्मप्रतिबिम्ब-रूपैर्बद्धः वृषभश्चतुर्व्वर्गवृष्टिकर्त्ता महान् देवो मनुष्येषु जीवात्मरूपेणाऽऽविवेश इति विवर्णयन्तीति ॥ एवञ्च न पतञ्जलिपादा अनाप्ताः, न च यास्कादयो मिथ्यात्वादिनोऽतो ज्ञायते वेदमन्त्राणां प्रकरणवशादाप्तोक्ता नानार्था भवन्तीति, न त्वाधुनिकपाषण्डिजनकृता अर्थाः प्रामाणिका भवन्तीति बोध्यम्। न च श्रीगणपतिपक्षीयो "गणानां त्वा-" इति मन्त्रार्थः कुत्रचिन्न दृश्यत इति वाच्यम्। मन्त्रप्रदीपिकादिबह्वाप्तग्रन्थेषु तद्दर्शनात्। अथर्वशिरसि वरदपूर्व्वतापिन्युपनिषदि आश्वलायनगृह्यपरिशिष्टादिग्रंथेषु चास्यार्थस्य सम्मानितत्वाच्च। परम्परातश्शिष्टव्यवहाराच्चेति दिग् ॥१॥

## वृद्धकुमारीवरन्यायः ॥ २ ॥

अयं महाभाष्ये "न मुने"। ८।२।३ इति सूत्रव्याख्यानावसरे व्याख्यातः। तद्यथा—वृद्धकुमारी तपस्विनी इन्द्रेणोक्ता वरं वृणीष्वेति सा वरमवृणीत पुत्रा मे बहुक्षीरघृतमोदनं कांस्यपात्र्यां भुञ्जीरन्निति। न च तावदस्याः पतिर्भवति कुतः पुत्राः कुतो गावः कुतो धान्यं, तत्रानया एकेन वाक्येन पतिः पुत्राः गावो धान्यमिति सर्वं सङ्गृहीतं भवति। एवमिहापि नेऽसिद्धत्वप्रतिषेधं ब्रुवता नाभावोपि सङ्गृहीतो भवतीति॥ केचित्तु—यथाऽनया वृद्धकुमार्या एकेन वाक्येन पतिः पुत्रा गावो धान्यमिति सर्वं सङ्गृहीतं भवतीति तथा काशीमरणान्मुक्तिरिति श्रुत्या यद्यत्साधनमन्तरेण मुक्त्यनुत्पत्तिस्ता-

दसर्वं सङ्गृहीतं भवतीति युक्तमस्य वृद्धकुमारीवरन्यायस्यो-दाहरणमिति वदन्ति । वृद्धकुमारी०, वृद्धकुमारीवाक्य०, वृद्धकुमारीवर० इति पर्याया इति बोध्यम् ॥ २ ॥

## वृद्धब्राह्मणवरन्यायः ॥ ३ ॥

यथा—आसीत्कश्चिज्जन्मान्धोऽत्यन्तदरिद्रोऽजातविवाहो वृद्धो ब्राह्मणः स च नानाविधैर्दुःखैर्बलवत्पीडितस्तीव्रतपश्चरणेन परमेश्वरमाराधयामास। तस्य तपसा प्रीतः परमेश्वरस्स्वाभीष्टमेकं वरं याचस्वेति तं प्रेरयामास। ततः स ब्राह्मणो यदि चक्षुष्मत्वं याच्यते तर्हि दारिद्र्यपीडा स्यादेव तथा भार्यायां याचितायामपि दारिद्र्यान्धत्वसन्तत्यभावाः पुनर्दुःखं जनयेयुरेवं धने याचितेप्यन्धत्वादीति किं याचनीय मिति चिन्तासमाकुलो भूयो विचार्येदं प्रार्थयत्—स्वपौत्रं राजसिंहासनस्थितमीक्षितुमिच्छामीति। अथ च तस्य बुद्धिकौशलतः परमप्रीतेन परमेश्वरेण वरप्रदानेनानुगृहीतो धनं चक्षुषी मनोज्ञां भार्यां सन्ततिं च प्राप्यात्यन्तमानन्देति। तथा प्रकृतेपीति ॥ ३ ॥

## फलवत्सहकारन्यायः ॥ ४ ॥

यथा—आपस्तम्बसूत्रम्, तद्यथा—आम्रे फलार्थे निर्म्मिते छायागन्धे अनूत्पद्येते। एवं धर्म्मे चर्यमाणे अर्थादयोऽनूत्पद्यन्ते ॥ यथा "आम्रश्चूतो रसालोसौ सहकारोतिसौरभः" इत्यभिधानादतिसौरभ आम्रवृक्षोऽतिमधुरपक्वफलनमितशाखस्समुत्पसन्नाय छायार्थिने जनाय फलं परमलञ्चाप्रा-

र्थितमपि ददाति, तथैकफलाकांक्षया स्वेष्टदेवताराधनमन्यदपि फलं प्रयच्छतीति ह्येतत्समानविषयकलौकिकव्यवहारान्तरेष्वपि बोध्यम् ॥ ४ ॥

## कण्ठचामीकरन्यायः ॥ ५ ॥

कृतस्वराख्याऽऽकरविशेषचामीकरपदवाच्यस्तत्र भवं चामीकरम्।यद्वा—चमनं चामिः 'इणजादिभ्यः' इतीण्, 'अनाचमेः' इति आङोऽविवक्षितत्वाद्वृद्धिः "कृदि०" ङीष्। चामीं करोति चामीकरं "चामीकरं जातरूपं महारजतकाञ्चने", इत्यभिधानात् चामीकरं सुवर्णं, तेन निर्मितं भूषणमपि चामीकरं, यथा—कण्ठगतं हेमभूषणमज्ञानादप्राप्तमिव कण्ठे तत्पश्येत्युपदेशाज् ज्ञातं प्राप्तमित्युपचर्य्यते, तथा प्रत्यगात्मतया ब्रह्मणः प्राप्तत्वेपि मायोपहितत्वादप्राप्तमिव स्वहृदि तत्पश्येति गुरूपदेशाज् ज्ञातं प्राप्तमिति निश्चीयते ॥ उक्तञ्च—"प्रत्यगात्मया तस्य प्राप्तत्वेपि च सर्वदा ॥ कण्ठचामीकरन्यायात्तत्प्राप्तिरुपचर्यते ॥" इति ॥ ५ ॥

## अङ्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत् ।
## इष्टार्थस्य च संसिद्धौ को विद्वान् यत्नमाचरेत्६॥

अङ्के गृहकोणे स्पष्टमन्यत् । तथा यदि निजगृहकोणे माक्षिकं विन्देत तर्हि तल्लाभाय पर्वतं प्रति गमनं व्यर्थम्, तथा स्वात्मनि ब्रह्म विज्ञाय ब्रह्मवेत्ता तदन्वेषणाय तीर्थादिषु न प्रयतत इति भावः । एवमन्यत्रापि यत्राल्पायासेनाभी-

१ कृतस्वर इति नाम्ना प्रसिद्ध आकरः खनिविशेष इत्यर्थः ।

ष्टसिद्धिर्जायते तत्र बह्वायाससाध्ये प्रेक्षावतां न प्रवृत्तिरिति प्रदर्शनायाऽस्य न्यायस्य प्रवृत्तिरिति ॥ ६ ॥

## मज्जनोन्मज्जनन्यायः ॥ ७ ॥

यथा नद्यादौ पतितस्तरणानभिज्ञः कदाचिन्मज्जति कदाचिदुन्मज्जति, तथा—संसारसमुद्रे पतितो ब्रह्मतत्त्वानभिज्ञो जीवः कदाचिन्मज्जति कदाचिदुन्मज्जति शान्तिसुखं न प्राप्नोति यावद्भगवच्चरणारविन्दाश्रयो न भवेत् उक्तं हि—"अपारसंसारसमुद्रमध्ये निमज्जतो मे शरणं किमस्ति। गुरो कृपालो कृपया वदैतद्विश्वेशपादाम्बुजदीर्घनौका ॥ १ ॥" गर्भस्तुतौ—"त्वय्यम्बुजाक्षामलसत्त्वधाम्नि समाधिनावेशितचेतसैके । त्वत्पादपोतेन महत्कृतेन कुर्वन्ति गोवत्सपदं भवाब्धिम् ॥ स्वयं समुत्तीर्य सुदुस्तरं द्युमन् भवार्णवं भीममदभ्रसौहृदाः । भवत्पदाम्भोरुहनावमत्र ते निधाय याताः सदनुग्रहो भवान् ॥" इति ॥ ७ ॥

## जलतुम्बिकान्यायः ॥ ८ ॥

यथा पङ्कलिप्ता तुम्बिका नदीसमुद्रादौ मज्जन्ती पङ्कक्षयेऽवकाशे आगत्य तिष्ठति, तथा जीवो देहक्षये लोकादाकाशे गत्वा तिष्ठति। अयमेव तस्य मोक्ष इति दिगम्बरजैना मन्यन्ते ॥ अनेनैव न्यायेन रेफस्योर्ध्वगमनमिति वैयाकरणाः ॥ एवम्—

## जलतैलन्यायोपि

व्याख्यात इति बोध्यम् ॥ ८ ॥

## पञ्जरमुक्तपक्षिचालनन्यायः ॥ ९ ॥

यथा पञ्जरान्मुक्ताः पक्षिणः सदोर्ध्वमेव चलन्ति एवमेव जीवो देहान्मुक्तस्सदोर्ध्वमेव गच्छाति इति स एव तस्य मोक्ष इति दिगम्बरैकदेशिनो मन्यन्ते । ते च प्रष्टव्याः-पञ्जरान्मुक्तस्य शुकादेः पक्षिण इवात्मनस्सततोर्ध्वगमनं मुक्तिरिति चेत्तदा वक्तव्यं किमयमात्मा मूर्तोऽमूर्तो वा । प्रथमे निरवयवः सावयवो वा। निरवयवत्वे निरवयवो मूर्तः परमाणुरिति परमाणुलक्षणापत्त्या परमाणुधर्म्मवदात्मधर्माणामतीन्द्रियत्वं प्रसज्जेत ॥ सावयवत्वे यत्सावयवं तदनित्यमिति प्रतिबन्धबलेनानित्यत्वापत्तौ कृतप्रणाशाकृताभ्यागमौ निष्प्रतिबन्धौ प्रसरेताम् ॥ अमूर्तत्वे गमनमनुपपन्नमेव चलनात्मिकायाः क्रियाया मूर्तप्रतिबन्धादिति ॥ ९ ॥

## तृणजलौकान्यायः ॥ १० ॥

यथा तृणजलौका तृणान्तरमाश्रित्य पूर्वं तृणं त्यजाति तथा जीवस्स्वाविद्यादिभिर्देहान्तरं निष्पाद्यैव पूर्वं देहं त्यजतीति भावः ॥ १० ॥

## एकसम्बन्धिदर्शनमपरसम्बन्धिस्मारकमिति न्यायः ॥ ११ ॥

यथा हास्तिपकदर्शनं हस्तिनः स्मारकं भवति तथा—हस्तिपकदर्शनस्य हस्तिस्मारकत्ववन्नद्यादिज्ञानस्य तत्सम्बन्धिकुशादिकस्मारकत्वम्भवतीति भावः ॥ ११ ॥

## स्थूणानिखननन्यायः ॥ १२ ॥

"स्थूणा स्तम्भेपि वेश्मनः" इत्यमरः। अपिशब्दाल्लोहप्रतिमायामपि। स्थूणा यथाऽसकृत्सञ्चाल्य निखनने क्रियमाणे दृढा भवति तथोत्तरग्रन्थेन प्रागुपपादितार्थदार्ढ्यं भवतीत्यर्थः ॥ १२ ॥

## सिंहावलोकनन्यायः ॥ १३ ॥

यथा सिंहः कश्चिन्मृगं हत्वाऽग्रे गच्छन्नन्योपि चेत्स्यात्तमपि हन्यामिति धिया पश्चात्पश्यति हन्ति च दृष्टिपथमागतम्, तथाबुद्धिपथागतस्वपक्षपरिपन्थिपरिकल्पितयुक्त्याभासान्तरनिरासायाप्युत्तरग्रन्थप्रवृत्तिरित्यर्थः ॥ १३ ॥

## अस्थूलारुन्धतीन्यायः ॥ १४ ॥

यत्रातिसूक्ष्मार्थज्ञापनाय तत्क्रमेण तत्समीपः समीपतरः समीपतमश्चार्थस्तत्तयोच्यते तत्रायं न्यायोऽवतरति। यथाऽस्तमिते ध्रुवमरुन्धतीञ्च दर्शयतीति विधिद्वारा वध्वास्तद्दर्शने प्राप्तेऽतिसूक्ष्माया अरुन्धत्या झटिति प्रदर्शयितुमशक्यतया तावच्चन्द्रं तत्त्वेन वदति, ततश्चन्द्रेतरास्तत्समीपस्थास्तारिकास्ततस्तत्समीपस्थाः सप्तर्षिसञ्ज्ञिताः समीपतरास्तत्समीपतमं वसिष्ठं तत्त्वेनोपादिश्य तामेव तत्तया वोधयन्तीति तथा गृहादीनामात्मानमिव मन्यमानाः प्राकृता गृहे नष्टे नष्टा वयमिति क्रोशन्तो दृश्यन्ते, तान्वारयन्ती "आत्मा वै जायते पुत्रः" ॥१॥ "स एष पुरुषोन्नरसमयः" ॥ २ ॥ "अन्योन्तरात्मा प्राणमयः" ॥ ३ ॥ अन्यो-

न्तरात्मा मनोमयः" ॥ ४ ॥ "अन्योन्तरात्मा विज्ञानमयः" ॥ ५ ॥ "अन्योन्तरात्माऽऽनन्दमयः" ॥६॥ इत्यादिका श्रुतिः पुत्रद्याऽऽनन्दमयान्तानामनात्मत्वं दर्शयन्ती निर्विशेषात्मतत्त्वमेवात्मत्वेन दर्शयतीति भावः ॥ क्वचिच्च स्थूलाऽरुन्धतीति विनाऽकारं न्यायस्वरूपमुक्तम् ॥ केनचित्—अरुन्धतीप्रदर्शनन्यायत्वेनोदाह्रियतेऽयमिति ॥ १४ ॥

## पारिषदन्यायः ॥ १५ ॥

'समज्या परिषद् गोष्ठी सभा' इत्यभिधानात् परिषदि सभायां साधुः "पारिषदो ण्यः" ४।४।१० इत्यत्र 'परिषदः' इति योगविभागाण्णोऽपि, पारिषदः सभ्यः। तैषामेकस्मिन कृतेप्यवशिष्टैस्तत्कार्यनिर्वाहो यथा भवति तथा प्रकृतेऽपीत्यर्थः ॥ १५ ॥

## नाऽन्यदृष्टं स्मरत्यन्य इति न्यायः ॥ १६ ॥

यथा कस्यचिदुत्तरवृन्दस्य पूर्वस्माद्भिन्नतया पूर्वेणानुभूतस्योत्तरेणाऽस्मरणापत्तिस्तथा प्रकृतेऽयं न्यायः।"शरीरस्य न चैतन्यं मृतेषु व्यभिचारतः । तथात्वं चेदिन्द्रियाणामुपघाते कथं स्मृतिः ॥ इति कारिकाव्याख्यानावसरे भाषापरिच्छेदकृता ध्वनितः । तथाहि—ननु चक्षुरादीनामेव ज्ञानादिकं प्रति करणत्वं कर्तृत्वञ्चास्तु विरोधे साधकाभावादत आह—तथात्वमिति, चैतन्यमित्यर्थः । उपघाते नाशे सति अर्थाच्चक्षुरादीनामेव कथं स्मृतिः । पूर्वं चक्षुषा साक्षात्कृतानां चक्षुषोऽभावे स्मरणं न स्यादनुभवितुरभावादन्यदृष्टस्याऽन्येन स्मरणासम्भवादिति "सव्यदृष्टस्ये-

तरेण प्रत्यभिज्ञानात्" ३ । १ । ७। इति गौतमसूत्र-भाष्येपि तमेवैतर्हि पश्यामि यमज्ञासिषं सव्येन चक्षुषा दृष्टमथेतरेणापि चक्षुषा प्रत्यभिज्ञानाद्यमद्राक्षं तमेवैतर्हि पश्यामीति ॥ इन्द्रियचैतन्ये तु—नान्यदृष्टमन्यः प्रत्यभिजानातीति प्रत्यभिज्ञानुपपत्तिः। अस्त्विदं प्रत्यभिज्ञानं तस्मादिन्द्रियव्यतिरिक्तश्चेतन इति ध्वनितश्चेति ॥ १६ ॥

## विनिगमनाविरहन्यायः ॥ १७ ॥

एकतरपक्षपातिनी युक्तिर्विनिगमना, वैकल्पिके वस्तुन्येकस्मिन्नवधारणा शक्तिरिति यावत्, तस्या विरहो वियोग इत्यर्थः ॥ यथा—केचित्सूर्यसिद्धान्तानुयायिगणितस्य सम्यक्त्वादतिसूक्ष्मत्वम्। अपरे बहवस्तु दृग्गणितैक्यापन्नत्वस्यैवाऽतिसूक्ष्मत्वमतो बहुसम्मतत्वाद्विनिगमनाविरहेण वैपरीत्यापत्तौ दृग्गणितस्यैव विनिगमकस्यैतैरपि वक्तव्यत्वेन सौरा एवाऽतिसूक्ष्मा इति रिक्तं वच इति भावः ॥ १७ ॥

## बहुवृकाकृष्टमृगन्यायः ॥ १८ ॥

यथा बहूनां वृकाणां प्रत्येकं भोक्तृत्वे बहूनामैकमत्यासम्भवेन विरुद्धादिक्रियया मृगदेहस्योन्मथनप्रसङ्गस्तथा प्रकृतेपि ॥ १८ ॥

## बहुराजकपुरन्यायः ॥ १९ ॥

यथा एकस्मिन्पुरे यदा बहवो राजानस्तदा तेषामैकमत्याभावेन प्रजानां क्लेशस्तथा एकस्मिन्देहे नाने-

न्द्रियाणां कर्तृत्वे स्वीकृते मिथो विरोधान्नैकमपि सिध्येत् ।
तथाहि—यदा चक्षुर्दर्शनाय प्रवर्तमानं भवति तदाऽन्यानि चे-
न्द्रियाणि स्वस्वक्रियया निर्वाहोद्यतानि भवन्ति चेत्तदा दर्श-
नादि नैकमपि जायते, एवं विवक्षायामस्य प्रवृत्तिरिति॥१९॥

## वरगोष्ठीन्यायः ॥ २० ॥

गोष्ठी—गावोऽनेका वाचस्तिष्ठन्त्यत्र 'गोष्ठी सभा' इत्य-
मरः। अन्योन्यवार्तालापस्थानविशेष इति। वरलाभाय गोष्ठी
वरगोष्ठी। तया यथा वरवधूबन्धूनामैकमत्ये सति विवाहादि-
रूपमेकं कार्यं निष्पाद्यते तथा प्रकृतेपि ॥ २० ॥

## स्वामिभृत्यादिन्यायः ॥ २१ ॥

यथा भृत्यादिः सर्वो जनः स्वाम्यादिकं सर्वं स्वप्रयोज-
नाय वाञ्छत्येवं स्वाम्यादिरपीति भावः ॥ २१ ॥

## मुञ्जादिषीकोद्धरणन्यायः ॥ २२ ॥

यथा मुञ्जाख्यतृणादिषीकाख्यं गर्भस्थं मृदु तृणं बहि-
रावरणकतया स्थितानां मुञ्जाख्यतृणानां विभजनेन समुद्ध्रि-
यते तथाऽऽत्मापि युक्तयान्वयव्यतिरेकलक्षणोपायेन शरीर-
त्रितयाद् ब्रह्मचर्य्यादिसाधनसम्पन्नैः पृथक् कृतश्चेत्स पर-
ब्रह्मैव जायते, चिदानन्दरूपत्वस्य लक्षणस्योभयोरविशि-
ष्टत्वात् । उक्तञ्च पञ्चदश्याम्—"यथा मुञ्जादिषीकैवमात्मा
युक्त्या समुद्धृतः । शरीरात्त्रितयाद्धीरैः परम्ब्रह्मैव जायते ॥"
इति ॥ २२ ॥

## गड्डुलिकाप्रवाहन्यायः ॥ २३ ॥

यथा गड्डुलिकानामवीना गणादेका चेत्कूपे पतिता तदा वार्यमाणा अपि सर्वास्तत्र पतन्तीति तथा प्रकृतेऽपि ॥ २३ ॥

## अन्धपरम्परान्यायः ॥ २४ ॥

यथा अन्धेन नीयमाना अन्धाः पतन्ति तथा प्रकृतेपि । अयं प्राक्तनन्यायसदृशोप्यूर्ध्वमुख्येऽनवस्थास्थले एवोदाह्रियते ॥ २४ ॥

## वटे यक्षन्यायः ॥ २५ ॥

यदि वक्तृपरम्परोपदेशस्य मूलभूतोऽनुभवो नास्ति तदा सोप्येतादृशः, सत्त्वे तु विलक्षण इति बोध्यम् । इममेवैतिह्यप्रमाणविशेषतया वदन्तीति केचित् ॥ २५ ॥

## मल्लग्रामन्यायः ॥ २६ ॥

यथान्येष्वपि जनेषु सत्सु मल्लानां बहुत्वान्मल्लग्राम इत्युच्यते तथा प्रकृतेपि ॥ २६ ॥

## ब्राह्मणग्रामन्यायः ॥ २७ ॥

अयं पूर्वसदृशः स्फुटः ॥ २७ ॥

## आम्रवणन्यायः ॥ २८ ॥

अयं पूर्वसदृशः स्फुटः । एतादृशा अन्येपि विवृता ज्ञेयाः । "प्रनिरन्तःशरेक्षुप्लक्षाम्रकार्ष्यखदिरपीयूक्षाभ्योऽसंज्ञायामपि" ८।४।५। इति सूत्रेण वननकारस्य णत्वम् ॥ २८ ॥

## नहि त्रिपुत्रो द्विपुत्र इति न्यायः ॥ २९ ॥

त्रित्वस्य द्वित्वव्यापकत्वेपि वाक्यस्य सावधारणत्वात् पुत्रत्रयवतः पुत्रद्वयवत्त्वेपि न तस्य द्विपुत्रशब्दवाच्यता। न्यूनसंख्याव्यवच्छेदकत्वेन त्रिशब्दस्य न यथा द्विपुत्रवाचकतेत्येवं यत्र विवक्षा तत्रास्य प्रवृत्तिरिति ॥ २९ ॥

## देवदत्तापुत्रन्यायः ॥ ३० ॥

यथा नहि देवत्ताया एव पुत्रः किन्तु देवदत्तस्यापि,मातुः प्राधान्यविवक्षायां देवदत्तापुत्र इत्युच्यते। यथा च दाक्षीपुत्रः पाणिनिः। अत एव यजुर्वेदे वंशकीर्तने स्त्रीप्राधान्येनैव निर्देशः। यथा—"अथ वꣳशस्तदिदं वयं भारद्वाजीपुत्राद्भारद्वाजीपुत्रो वात्सीमाण्डवीपुत्राद्वात्सीमाण्डवीपुत्रः"इत्यादि श० ब्रा० १४।३।४ ॥ ३० ॥

## देवदत्तपुत्रन्यायः ॥ ३१ ॥

अयं पितुः प्राधान्यविवक्षायां ज्ञेयः ॥ ३१ ॥

## व्यपदेशिन्यायः ॥ ३२ ॥

एकस्मिन्नुभयारोपो व्यपदेशः। यथा—देवदत्तस्यैक एव पुत्रः स एव ज्येष्ठस्स एव कनिष्ठः। किञ्च—निमित्तसद्भावाद्विशिष्टोऽपदेशो मुख्यो व्यवहारो व्यपदेशः,सोऽस्यास्ति तेन तुल्यमित्यर्थः। व्यपदेशिवद्भावेन धात्ववयवत्वाद्भष्भावः, जश्त्वचर्त्व धुक् ॥ ३२ ॥

## देवदत्तहन्तृहतन्यायः ॥ ३३ ॥

यथा देवदत्तस्य हन्तारि हते देवदत्तस्योन्मज्जनं न भवतीति तथा अज्ञानबाधके ज्ञाने विनष्टे पुनरज्ञानोदयेन बन्धप्रसङ्गो न भवतीति। अयं न्यायः "अचः परस्मिन् पूर्वविधौ" १।१।५७। इति सूत्रमहाभाष्येपि ॥ ३३ ॥

## देवदत्तहननोद्यतहतन्यायः ॥ ३४ ॥

यथा देवदत्तहननोद्यतस्य हनने तु भवत्येवोन्मज्जनम्, तथा रामावित्यत्र पूर्वसवर्णदीर्घेण न वृद्धेर्हननं किन्तु हननोद्यतसजातीयस्य प्रसक्तिमात्रं, प्रसक्तस्यैव निषेधात् ॥ ३४ ॥

## भ्रष्टावसरन्यायः ॥ ३५ ॥

यथा--केनचित्कश्चित्प्रत्युक्तं त्वयाऽमुकावसरेऽत्रागन्तव्यं तवाऽभीष्टसिद्धिर्भविष्यति ह्यन्यथा न। एवं प्रतिज्ञातावसरे स नायातो भ्रष्टावसरत्वात्तस्याभीष्टसिद्धिर्न जाता तथा प्रकृतेपि। किञ्च--अयं न्यायो व्याकरणशास्त्रे नाश्रीयते "तौ सत्"३।२।१२७इत्यादिनिर्देशात्। ध्वनितञ्चेदम् "इको गुणवृद्धी" १।१।३।इति सूत्रमहाभाष्ये। भाष्यप्रदीपोद्योते तु निरूपितं, विस्तरभयान्नेह प्रपञ्चितमिति ॥ ३५ ॥

## प्रासादवासिन्यायः ॥ ३६ ॥

यथा एक एव देवदत्तः कालभेदेन प्रासादोपर्यधश्च वसन्नपि प्रासादवासप्राधान्येन प्रासादवासीत्युच्यते

तथा "मुखनासिकावचनोनुनासिकः" १।१।८। इति सूत्रस्थमहाभाष्ये "तु मुखग्रहणं शक्यमकर्तुं, केनेदानी-मुभयवचनानां सिद्धिर्भविष्यतीति, प्रासादवासिन्याये-नेति। तद्यथा—केचित्प्रासादवासिनः, केचिद्भूमिवा-सिनः, केचिदुभयवासिनः। ये प्रासादवासिनो गृह्यन्ते ते प्रासादवासिग्रहणेन, ये भूमिवासिनो गृह्यन्ते ते भूमिवा-सिग्रहणेन, ये तूभयवासिनो गृह्यन्ते ते भूमिवासिग्रहणेन प्रासादवासिग्रहणेन च, एवमिहापि केचिन्मुखवचनाः केचिन्नासिकावचनाः, केचिदुभयवचनाः। तत्र ये मुखव-चना गृह्यन्ते ते मुखग्रहणेन , ये नासिकावचना गृह्यन्ते ते नासिकाग्रहणेन, ये तूभयवचना गृह्यन्ते ते मुखग्रहणेन नासिकाग्रहणेन चेत्युक्तम्॥ ३६॥

## सर्वं कार्यं सकारणमिति न्यायः॥ ३७॥

कार्य्यं प्रागभावप्रतियोगि, कार्य्यनियतपूर्ववृत्तिकारण-मिति सर्वं कार्य्यजातं घटादिज्ञानं सकारणं मृदादिज्ञान-पूर्व्वकं भवति। उक्तञ्च—" कारणज्ञानतः कार्यविज्ञानञ्चा-पि सोवदत्" इति॥ उक्तञ्च—"जगतां यदि नो कर्त्ता कुलालेन विना घटः। चित्रकारं विना चित्रं स्वत एव भवे-दिति॥" ॥ ३७॥

## कार्य्येण कारणसम्प्रत्यय इति न्यायः॥ ३८॥

यथा—घटादिरूपकार्येण कुलालादिरूपकारणस्य सम्प्र-ययो भवतीति स्पष्टम्॥ ३८॥

## तद्धेतोरेव तदस्तु किन्तेनेति न्यायः ॥ ३९ ॥

तस्य कपालादेर्हेतोर्मृदादेरेव तद्घटादिकारणत्वमस्तु किन्तेनान्तर्गडुना कपालादिरूपकार्येणेत्यर्थः । "गडुश्च स्वल्पपात्रे स्याद्गडुर्विश्वम्भरे पुमान्" इति कोशः । अत्र गडुशब्देन वृथात्वमेव ॥ ३९ ॥

## कारणगुणप्रक्रमन्यायः ॥ ४० ॥

यथा—कारणगुणाः कार्यें स्वसमानजातीयकार्य्यगुणानारभन्ते । यथा—शुक्लतन्तुरूपादयः शुक्लपटरूपादीनिति न्यायार्थः ॥ कारणगुणाः स्वसमानजातीयकार्य्यगुणारम्भका इत्याकारकेण न्यायस्वरूपं वदन्ति वैशेषिकाः । यथा शुक्लेभ्यस्तन्तुभ्यः शुक्लस्य वस्त्रस्य प्रसवदर्शनात तद्विपर्ययाऽदर्शनाच्च, तथा चेतनस्य ब्रह्मणो जगत्कारणत्वेऽभ्युपगम्यमाने कार्यें जगत्यपि चैतन्यमत एव वदन्ति ।
"हरिरेव जगज्जगदेव हरिर्हरितो हि जगन्न हि भिन्नतनुः ।
इति यस्य मतिस्सततं स्मरति स नरो भवसागरमुत्तरति ॥"
इति॥ परश्चायं न्यायः "महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम्" २।२।११। इति ब्रह्मसूत्रशारीरकभाष्ये प्रत्युक्त इति विस्तरभिया नेह प्रपाञ्चितम् ॥ ४० ॥

## पञ्जरचालनन्यायः ॥ ४१ ॥

यथा स्वयत्नैर्दशभिः पक्षिभिरेकक्रियोत्पादनेन पञ्जरचालनं क्रियते तथा दशाभिरिन्द्रियैः प्राणरूपैकक्रियोत्पादनेन देहचालनं क्रियत इति भावः ॥ ४१ ॥

## धर्म्मिकल्पनातो धर्म्मकल्पना वरीयसीति न्यायः ॥ ४२ ॥

धर्म्मकल्पनायाः श्रेष्ठत्वञ्च लाघवप्रयुक्तमिति स्पष्टोयम् ॥ ४२ ॥

## भिक्षुपादप्रसरणन्यायः ॥ ४३ ॥

यथा कश्चिद्भिक्षुर्यथेष्टान्नाच्छादनवासगृहादिलाभाय धनाढ्यगृहे प्रविष्टो युगपत्तल्लाभं दुर्लभं मन्वानः—पूर्वमिह पादप्रसारस्तु मे भवतु पश्चात्परिचयं सम्पाद्य क्रमेण सर्व्वं सम्पादयिष्यामीति धियाऽल्पां भिक्षां स्वीकरोति तथा मातेवातिहितैषिणी श्रुतिरद्वैततत्त्वे मुमुक्षौ प्रवेशमिच्छन्ती सकृत्तमशक्यं मन्वाना पूर्वोक्तक्रमेण संसारमुक्तये तद्बोधयतीति बोध्यम् ॥ ४३ ॥

## सोपानारोहन्यायः ॥ ४४ ॥

'आरोहणं स्यात्सोपानम्' इत्यमरः । "आरोहो दैर्घ्य उच्छ्राये स्त्रीकट्यां मानभिद्यपि । आरोहणे गजारोहे" इति हेमचन्द्रः । आरोहणमारोहः, रुहेर्भावे घञ् । षष्ठीतत्पुरुषः । यथा प्रासादमारुरुक्षुर्युगपदारोढुमशक्नुवन्पूर्व्वांपूर्व्वां कक्षां परित्यजन्नुत्तरामुत्तराञ्चारोहन् क्रमेण प्रासादमारोहति तथा स्वात्मभूतमपि ब्रह्माज्ञानादव्यवहितमिवापन्नमात्मत्वेन ज्ञातुकामः सहसा ज्ञातुमशक्नुवन्नुत्तरोत्तरात्मत्वबुद्ध्या पूर्व्वपूर्व्वात्मत्वधीबाधनक्रमेण प्रपञ्चोपशमं शिवमद्वैतं चतुर्थमात्मत्वेन जानातीति भावः ॥ ४४ ॥

## सोपानावरोहन्यायः ॥ ४५ ॥

'अवरोहोऽवतरणेऽपि' इति मेदनीकारः। यथा हि येन क्रमेण सोपानमारोहन्ति तद्विपरीतक्रमेण ततोवरोहन्तीति लोके प्रसिद्धम्, तथा पञ्चकोशावतरणक्रमेणाऽद्वैततत्त्वे बुद्धिमारोहयितुमशक्तो भोग्यभोगायतनतदाश्रयचतुर्दशभुवनतदाधारब्रह्माण्डानि पञ्चीकृतपञ्चभूतमात्राणि न तेभ्योऽतिरिच्यन्तइति सम्भावयेत्, पञ्चीकृतानि भूतानि सूक्ष्मशरीराणि चापञ्चीकृतभूतेभ्यो नातिरिच्यन्ते इति जानीयात्। एवं गन्धतन्मात्रात्मिकां पृथ्वीं रसमात्रात्मकत्वेन भावयेत्। अपश्च रूपतन्मात्रात्मकतेजोमात्रत्वेन; तच्च तेजःस्पर्शतन्मात्रात्मकवायुमात्रत्वेन; तञ्च वायुं शब्दतन्मात्रात्मकाकाशमात्रत्वेन; तञ्चाकाशं स्वकारणभूतमायोपहितमहेश्वरमात्रत्वेन भावयेदिति। एवञ्च—यथा पूर्वोक्तक्रमेणावरोहरणाःसुखेन भूमिमाप्नोति तथैवानेन विपरीतक्रमेण भावनात्सुखेन भूमानमद्वितीयं शिवप्राप्नोति। प्रलयोप्यनेनैव व्युत्क्रमेण भवतीति बोध्यम् 'साक्षात्प्रकृतौ विकारलयः' इति न्यायात्। तथा च स्मर्य्यते—"जगत्प्रतिष्ठा देवर्षे पृथिव्यप्सु प्रलीयते। ज्योतिष्यापः प्रलीयन्ते ज्योतिर्वायौ प्रलीयते ॥ वायुश्च लीयते व्योम्नि तच्चाव्यक्ते प्रलीयते। अव्यक्तं पुरुषे ब्रह्मन्निष्कले सम्प्रलीयते॥" इति ॥ ४५ ॥

## साक्षात्प्रकृतौ विकारलय इति न्यायः ॥ ४६ ॥

यथा घटादेर्लयो हि कपालादावेव न तु परमाणुषु तथैवानुभवादिति तदर्थः। किञ्च साङ्ख्ये—अष्टौ प्रकृतयः षोडश

विकाराः पुरुष इति पञ्चविंशतितत्त्वानि सन्ति । तत्त्वारम्भकत्वं प्रकृतित्वं, तत्त्वानारम्भकत्वं विकृतित्वं; केवलविकारत्वमिति यावत् । प्रकृतयोऽष्टयथा—मूलप्रकृतिः १, अस्या एव सत्त्वरजस्तमसां साम्यावस्था, प्रधानञ्च, अव्यक्तञ्च, माया च, उपादानकारणञ्चेत्यादयः पर्यायाः । महान् २, अहङ्कारः ३, शब्दतन्मात्रा ४, स्पर्शतन्मात्रा ५, रूपतन्मात्रा ६, रसतन्मात्रा ७, गन्धतन्मात्रा ८ इति । विकाराः १६ यथा—पञ्च महाभूतानि, पञ्च ज्ञानेन्द्रियाणि, पञ्च कर्म्मेन्द्रियाणि, एकम्मन इति षोडश विकृतयः । शब्दादीनां सूक्ष्मत्वं तन्मात्रत्वम् "तस्मिँस्तस्मिंस्तु तन्मात्रा तेन तन्मात्रता स्मृता" इत्युक्तेः । मूलकारिका—"मूलप्रकृतिरविकृतिर्म्महदाद्याः प्रकृतिविकृतयः सप्त । षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः ॥" इति । एवं हि विकारस्य स्वप्रकृतिलयो यत्र विवक्ष्यते तत्रास्य न्यायस्य प्रवृत्तिरिति । अयमपि शास्त्रीयो न लौकिकः ॥ ४६ ॥

## अध्यारोपाऽपवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते इति न्यायः ॥ ४७ ॥

वस्तुन्यवस्त्वारोपोऽध्यारोपः । यथा—असर्पभूतायां रज्जौ सर्पारोपः, अरजतभूतायां शुक्तौ रजतारोपश्चेति वेदान्तिनः । ननु कथमवस्तुनो निरात्मकस्यारोपः क्वचिद्दृष्टपूर्वस्य सतः क्वचिदारोपदर्शनात्, यथा जवायां दृष्टस्य लौहित्यस्य स्फटिके आरोप इति चेत्सत्यम्,—

तत्सिद्धयेऽनुभवमात्रमपेक्ष्यते न तु पूर्वमनुभूतस्य तात्त्विकत्वमपि व्यतिरेकाभावात्, संदिग्धविपर्ययेष्वपि अत्र स्थाणौ मे नरो वा राक्षसो वा इति सन्देह आसीत्, अस्य रज्ज्वां सर्पोऽयमिति विपर्यय आसीदित्यादिसंस्कारकार्यस्मृतिदर्शनात्। न च सन्देहविपर्य्ययोरेवेयं स्मृतिर्न तदर्थयोरिति वाच्यम्, अर्थविरहिणोस्तयोः स्मृतिगोचरत्वायोगात्। तस्मात्तुच्छेतरस्य पूर्वपूर्वभ्रमानुभूतस्याप्युत्तरोत्तरारोपोपपत्तिः। भ्रमप्रवाहस्य च बीजाङ्कुरप्रवाहन्यायेनाऽनादितयाऽन्योन्याश्रयाऽनवस्थादिप्रसङ्गाऽनवकाशात्।

तथा च—परमार्थवति सच्चिदानन्दब्रह्मणि वस्तुन्यवस्तुनोऽनिर्वचनीयस्याज्ञानतत्कार्यादेरध्यारोपः, ब्रह्मतत्त्वसाक्षात्कारेण चाध्यारोपिताज्ञानादेर्निवृत्तिः, यथा शुक्तिकादिज्ञानेन रजतादिनिवृत्तिः। अत एवाऽज्ञानादीनां ज्ञाननिवर्त्यत्वाऽन्यथानुपपत्त्या अध्यारोपितत्वं कल्प्यत इत्याकरे स्थितमिति।

अपवादो नाम रज्जुविवर्तस्य सर्पस्य रज्जुमात्रत्ववद्वस्तुविवर्तस्यावस्तुनोऽज्ञानादेः प्रपञ्चस्य वस्तुमात्रत्वमिति।

एवमयमभिप्रायोऽस्ति—यथाधिष्ठाने भ्रान्त्या प्रतीतस्य तदतिरेकेणाभावनिश्चयोऽपवादः, यथा स्थाणवादौ भ्रान्त्या प्रतीतस्य पुरुषादेः स्थाण्वाद्यतिरेकेणाभावनिश्चयः। अयमेव बाधो विलापनमिति चोच्यते। स चायं बाध त्रिविधः—श्रौतो १, यौगिकः २, प्रत्यक्षश्चेति ३। "अथात आदेशो नेतिनेति" "नेह नानास्ति किञ्चन" इत्यादिश्रुतेः ब्रह्मातिरिक्ताभावनिश्चयः श्रौतो बाधः १। कनकाद्यति-

रेकेण कटकाद्यभावनिश्चयवान्निखिलकारणब्रह्मातिरेकेण-निखिलप्रपञ्चाभावं निर्धार्य दृश्यमानस्य मिथ्यात्वनिर्द्धारणात्प्रपञ्चस्य ब्रह्ममात्रात्मकत्वनिश्चयो यौगिको बाधः २। इयं रज्जुर्न सर्प इत्युपदेशसहकृतप्रत्यक्षेणेव तत्त्वमस्यादिवाक्यजनितेन चिन्मात्रोऽहमिति प्रत्यक्षेण ब्रह्मात्मनिश्चयः प्रत्यक्षबाधः ३। ताभ्यामध्यारोपापवादाभ्यां निष्प्रपञ्चं सच्चिदानन्दानन्ताद्वयब्रह्म प्रपञ्च्यते, विस्तार्य्यत इति भावः ॥ ४७ ॥

## रेखागवयन्यायः ॥ ४८ ॥

यथा केनचिद्ग्रामीणेन पृष्टो वन्यो हि कीदृशो गवय इति । स तं लिखित्वा दर्शयामासाऽयं गवयो भवतीति । स चर्जुबुद्धित्वाद्रेखागवयमेव गवयं मेने । पश्चाद्वने गत्वा गवयं दृष्ट्वा रेखाया तद्बुद्धिं तत्याजेति लौकिकी गाथा । तथा "एष पुरुषः" इत्यादिश्रुतेः पूर्वोक्तकार्यानभिज्ञोऽनात्मानमेवात्मतया जानीते, श्रीसद्गुरुशास्त्रोपदेशेनात्मनि ज्ञाते तदात्मबुद्धिमपवदतीति ॥ ४८ ॥

## शाखाचन्द्रन्यायः ॥ ४९ ॥

यथा शुक्लद्वितीयाचन्द्रं दिदर्शयिषुरासः आदौ दिगन्तर्गतनक्षत्रादिभ्यो दृष्टिं वारयितुं शाखायां चन्द्र इत्यधिकरणत्वेन सम्बन्धविशेषेणादौ शाखायामुपलक्षणमुपादत्ते, ततश्च दिगन्तरव्यावृत्तचक्षुषश्चन्द्रसमीपवर्तितारकादिषु चन्द्रभ्रमो मा भूदिति तत्स्वरूपं प्रकृष्टप्रकाशात्मकं बोध-

यतीत्येवं हि बाध्यधीः सुखेन चन्द्रम्पश्यतीति तथा "ब्रह्मविदाप्नोति परम्" इत्यादिश्रुतिषु ब्रह्मशब्दस्यानेकत्र दर्शनान्मुमुक्षुभिर्ज्ञेयं ब्रह्म तच्च किमिति जिज्ञासायां जगत्कारणत्वोपन्यासनयेषु जीवादिषु जगत्कारणत्वं न सम्भवति तेषां स्रष्टृत्वासम्भवात् । तेभ्यो व्यावृत्तबुद्धेः प्रधानादिषु ब्रह्मत्वभ्रममपनेतुं स्वरूपलक्षणमुपन्यस्यत इति ॥ ४९ ॥

## नानुपहत्य भूतानि भोगस्सम्भवतीति न्यायः५०

यथा-"अद्रोहेणैव भूतानामल्पद्रोहेण वा पुनः । या वृत्तिः स परो धर्म्मस्तेन जीवामि जाजले ॥" इति महाभारतशान्तिपर्वीयवचनं सङ्गच्छते ॥ ५० ॥

## क्रिया हि विकल्प्यते न वस्त्विति न्यायः ॥५१॥

यथा यत्रैकस्य वस्तुनो मतभेदेन बहूनि रूपाणि तत्तच्छास्त्रेषु प्रतिपाद्यमानान्युपलभ्यन्ते वस्तुतो न भेदस्तथा एकस्यैव परमात्मनो मतभेदन विष्णुशिवशक्तिगणेशसूर्याद्यात्मकबहूनि रूपाणि तत्तच्छास्त्रेषु प्रतिपाद्यमानानि दृश्यन्ते वस्तुतो न भेदः "एको देवः सर्वभूतेषु गुढः" इत्यादिश्रुतेरिति । किञ्च-कर्त्तुमकर्त्तुमन्यथा वा कर्त्तुं शक्यत्वाद्विकल्प्यते क्रिया न तु वस्तु, एवं नैवं वेति विकल्प्यते । तदेतदुक्तं शारीरकभाष्ये-" कर्त्तुमकर्त्तुमन्यथा वा कर्त्तुं शक्यं लौकिकं वैदिकञ्च कर्म, यथा अतिरात्रे षोडशिनं गृह्णाति, नातिरात्रे

षोडशिनं गृह्णाति, उदिते जुहोति, अनुदिते जुहोति, रथेन पद्भ्यामन्यथा वा गच्छति, न गच्छति वा" इति । न तु वस्त्वेवं नैवमस्ति नास्तीति वा विकल्प्यते । विकल्पना हि पुरुषबुद्धिसापेक्षा, न वस्तुयाथात्म्यज्ञानं पुरुषबुद्ध्यपेक्षं, किन्तर्हि—वस्तु तन्त्रमेव, न हि स्थाणावेकस्मिन् स्थाणुर्वा पुरुषोऽन्यो वा इति तत्त्वज्ञानम्भवति । तत्र पुरुषो वाऽन्यो वेति मिथ्याज्ञानम्, स्थाणुरेवेऽति तत्त्वज्ञानमेवमन्यत्राप्यूह्यम् ॥ ५१ ॥

## वृक्षप्रकम्पनन्यायः ॥ ५२ ॥

यथा वृक्षमारूढः पुमानधः स्थितैर्नरैः पूर्वमियं शाखा प्रकम्पितव्या पूर्वमियमिति भिन्नशाखाप्रचालने नियोजितस्तदधःस्थैनैव च केनचित्सर्व्ववृक्षप्रकम्पने प्रेरितः सर्वैः पूर्वप्रचालनस्याऽऽज्ञप्ततया यौगपद्यासम्भवेन क्रमविकल्पोपगमेऽपि सर्वविरोधासिद्धेस्तच्चिकीर्षया वृक्षं प्रकम्पयति, तत्प्रकम्पने च सर्वाः शाखाः प्रकम्पिताः स्युरिति भवति च सर्वैरविरोधस्तथा सर्वमतैरविरोधाय एक औपनिषदाभिमतो महेशोऽङ्गीकार्यो वीतरागैर्मुमुक्षुभिरित्यन्यत्र विस्तरः ॥ ५२ ॥

## वृक्षमूलनिषिञ्चनन्यायः ॥ ५३ ॥

यथा—"यथा तरोर्मूलनिषिञ्चनेन तृप्यन्तितत्स्कन्धभुजोऽपि शाखाः । प्राणोपहाराच्च यथेन्द्रियाणां तथैव सर्वाऽर्हणमच्युतेज्या॥" इत्यनेनायं व्याख्यातः ॥ ५३ ॥

## यः कारयति स करोत्येवेति न्यायः ॥ ५४ ॥
## कारयितुः कर्त्तृत्वमिति ॥ ५४ ॥

द्वाविमौ न्यायौ समानार्थकौ। यथा राजादिर्हि भृत्यैर्युद्धादिकं कारयन्स्वयं करोतीति प्रसिद्धं तथा प्रकृतेऽपि५४

## काकतालीयन्यायः ॥ ५५ ॥

अयं न्यायोऽष्टधोपमालङ्कारमीमांसायां धर्म्मोपमानवाचकलुप्तोपमोदाहरणे—"यत्तया मेलनं तत्र लाभो मे यश्च तद्रतेः। तदेतत्काकतालीयमवितर्कितसम्भवम् ॥" इति। 'अभवत्किम्ब्रवीमि ते' इति वा पाठः। इति पद्यं प्रकृत्योदाहृतोऽप्पयदीक्षितैः कुवलयानन्दे हीष्टाऽवाप्तौ। वेणीसंहारनाटके तु—"फलन्ति काकतालीयं तेभ्यः प्राज्ञा न बिभ्यति" इत्यत्राऽनिष्टावाप्तावुदाहृतः। काकतालशब्दौ समासविषये काकतालसमवेतक्रियावर्तिनौ। तेन काकागमनमिव तालपतनमिव काकतालमिति "समासाच्च तद्विषयात्"५। ३। १०६। इति ज्ञापकादिवार्थे समासः। इवार्थे समासाभावे तद्विषयादित्यनेन इवार्थविषयसमासानुवादस्यानुपपन्नत्वात्तज्ज्ञापकत्वमिति "सह सुपा" २। १। ४। इति सूत्रेण वा समासः। उभयत्र काकागमनतालपतनयोरुपमेयं क्रमेण स्वस्य क्वचिद्गमनं तत्रैव रहसि तन्व्या अवस्थानं तेन च काकतालसमवेतक्रियापरयोः काकतालपदयोरिवार्थसमासेन स्वस्य तस्याश्च समागमः काकतालसमागमसदृश इति फलतीति। अयं भावः-काकागमनतालपतनयोरुपमा-

नत्वेन तदुपमेययोः स्वीयगमनतन्व्यवस्थानयोः पृथगनुपात्तत्वेनोपमेयतयान्वयायोगात्काकतालसमागम एवोपमानम्। एवञ्च काकतालसमागमसदृशः काकतालपदार्थः। तस्य चाभेदेन स्वीयतन्वीसमागमरूप उपमेये अन्वय इति। तादृशसमासानन्तरञ्च काकतालमिव काकतालीयमिति द्वितीयस्मिन्निवार्थे "समासाच्च तद्विषयात्" ५।३।१०६। इति सूत्रेण "इवे प्रतिकृतौ" ५।३।९६। इत्यधिकारस्थेन छः प्रत्ययः। तथा च—पतनदलितं तालफलं यथा काकेनोपभुक्तमेवं रहोदर्शनक्षुभितहृदया तन्वी स्वेनोपभुक्तेति तदर्थः। न च 'सकृदुच्चरितः शब्दः सकृदेवाऽर्थमवगमयति इति न्यायात् सकृदुच्चरिताभ्यां काकतालपदाभ्यां कथमुपमानद्वयावबोध इति वाच्यम्, अनुभवानुसार्यनुशासनेन व्युत्पत्तिवैचित्र्यस्य स्फुटं प्रतिपत्तेरिति। एवञ्च—दुरूहत्वात्पद्यं व्याख्याय तत्रोपमानलुप्तादयश्चत्वारोऽपि भेदा विस्तरभयान्नोक्ता इति। अयं न्यायः "समासाच्च तद्विषयात्" ५।३।१०६। इति सूत्रमहाभाष्येऽपि व्याख्यात इति॥ ५५॥

## अजाकृपाणीयन्यायः॥ ५६॥

अत्रापि ह्यजाकृपाणपदाभ्यां तदागमनपतने लक्ष्येते। अजागमनमिव कृपाणपतनमिवाऽजाकृपाणम्, ततोऽजाकृपाणमिवाऽजाकृपाणीयमिति। एवमागच्छन्त्या अजायाः कृपाणपतनाद्यथा वधस्तत्सदृशं मरणमिति फलितोर्थः। एवमन्यदपि सर्वं पूर्वोक्तन्यायतुल्यमेवेति। एतावांस्तु विशेषः-

यत्काकतालीयन्यायोऽवितर्कितेष्टलाभेऽनिष्टलाभे वाऽव-
तरति ह्यकस्मान्महाफलस्याग्रे पतने काकस्य भोगलाभव-
च्छिरसि पतने मरणस्यापि सम्भवात् । अयमजाकृपाणी-
यन्यायस्तु—अकस्मात्केवलानिष्टप्राप्तौ प्रवर्तते । अत एव
सिद्धान्तकौमुद्यामतर्कितोपनत इत्युक्तम् । अचिन्तितोपपन्नो
याहच्छिक इत्यर्थः ॥ ५६ ॥

## सकृदुच्चरितश्शब्दः सकृदेवार्थमवग-
## मयतीति ॥ ५७ ॥

अयं काकतालीयन्याये व्याख्यातप्राय एवेति ॥ ५७ ॥

## नहि भिक्षुको भिक्षुकं याचितुमर्हति सत्य-
## न्यस्मिन्नभिक्षुक इति न्यायः ॥ ५८ ॥

स्पष्टार्थोऽयम् ॥ ५८ ॥

## योजनप्रायायां कावेर्य्यांमल्लबन्धनन्यायः ॥ ५९ ॥

यथा कावेर्य्याख्यायां नद्यां योजनेन योजनचलनेन प्रा-
यायां मल्लस्य कैवर्तकस्य बन्धनंन युज्यते तथा प्रकृतेऽपीत्यर्थ
इति केचित् । अन्ये तु—मल्लो बाहुयुद्धकुशलस्तद्वदधोलम्बि-
तवाससां कटौ बन्धनं यथा योजनप्रायायां तस्यामयुक्तं
तथेत्याहुरिति ॥ ५९ ॥

## प्रकृतिप्रत्यययार्थयोः प्रत्ययाऽर्थस्य प्राधान्य-
## मिति न्यायः ॥ ६० ॥

यथा औपगवो वापक इत्यादौ हि प्रत्ययार्थस्यापत्यकर्त्रा-

दिरूपस्य प्राधान्यं यातीत्यादिक्रियान्वयादेवमन्यत्रापि बोध्यम् ॥ ६० ॥

## अवश्याऽपेक्षिताऽनपेक्षितयोरपेक्षितं स्मरणीयमिति न्यायः ॥ ६१ ॥

## अक्लृप्ताऽभावकस्याऽभावकल्पनापेक्षया क्लृप्ताऽभावस्यैव तत्कल्पनमुचितमिति न्यायः ॥ ६२ ॥

## नित्याऽनित्ययोर्नित्यविधिर्बलवानिति न्यायः ६३

नियमेन भवो नित्यः "त्यब्नेर्ध्रुवे" इति त्यप् ॥ एते त्रयो न्यायाः समानाभिप्रायकाः । कृताकृतप्रसंगि नित्यं, तद्विपरीतमनित्यमित्यर्थः। अत एव तुदतीत्यादौ परादपि गुणान्नित्यत्वाच्छप्रत्ययादिर्भवतीत्येवं लोकेऽपि व्यवहारः ॥ किञ्च–ध्वंसाऽप्रतियोगित्वं नित्यत्वं, ध्वंसप्रतियोगित्वमनित्यत्वमिति । किञ्चेदमनित्यत्वं त्रिविधं संसर्गानित्यत्वम् १, परिणामाऽनित्यत्वम् २, प्रध्वंसाऽनित्यत्वम् ३ । तत्र स्फटिकस्य लाक्षाद्युपधाने स्वरूपतिरोधानेन पररूपभासः, उपधानापगमे स्वरूपप्रतिभासात्परिणामाभाव इति संसर्गानित्यत्वम् १, यथा च बदरीफलस्य श्यामतातिरोभावे लौहित्यस्याविर्भाव इति परिणामानित्यत्वम् २, यथा च सर्वात्मना विनाश इति प्रध्वंसानित्यत्वमिति ३ । एतत्त्रिविधाऽनित्यत्वप्रतिक्षेपेण नित्यतां प्रतिपादयितुं

पतञ्जलिराह—ध्रुवं कूटस्थमविचाल्यनपायोपजनविकार्यनु-त्पत्त्यवृद्ध्यव्यययोगि यत् तन्नित्यम् इति। तत्र ध्रुवं कूट-स्थमिति संसर्गाऽनित्यता परिहृता । अविचालीति परि-णामानित्यता परिहृता। अनपायेत्यादिना प्रध्वंसाऽनित्यता परिहृता॥ अथ वा तदपि नित्यं यस्मिंस्तत्त्वं न विहन्यते । किं पुनस्तत्त्वं तद्भावस्तत्त्वमिति ॥ किञ्च—प्रत्यवायजनकी-भूताऽभावप्रतियोगित्वं नित्यत्वम् यथा एकादश्यामुपो-षणं नित्यामिति । किञ्च—ध्वंसप्रागभावाऽप्रतियोगित्वं नित्यत्वम् । यथा गगनं नित्यम् । किञ्च—अहरहर्जा-यमानत्वमपि नित्यत्वं, यथा नित्यं कुमाराः क्रीड-न्तीति ॥ ६१ ॥ ६२ ॥ ६३ ॥

## सावकाशनिरवकाशयोर्निरवकाशो बली-यानिति न्यायः ॥ ६४ ॥

सम्भवद्विषयान्तरस्सावकाशः,अतथाभूतो निरवकाशः। तेन निरवकाशेन सावकाशो विधिर्बाध्यते। यथा—"मा हिं-स्यात्सर्वभूतानि" इति निषेधवाक्यं निरवकाशेन "श्वेत-मालभेत"इति वाक्येन बाध्यते हिंसाया वैधेतरविषयकत्वस-म्भवेन तत्र तस्य सावकाशत्वात् । पश्वाऽऽलम्भनस्य विषयान्तराभावान्न तस्य सङ्कोचः। एवमन्यत्र लोकेऽपि चेति ॥ ६४ ॥

## कृत्रिमाऽकृत्रिमयोः कृत्रिमे कार्यसम्प्रत्यय इति न्यायः ॥६५॥

तद्यथा-लोके गोपालकमानय, कटजकमानयेति

यस्यैषा संज्ञा भवति स आनीयते, न यो गाः पालयति, यो वा कटे जात इति। अयं संप्रत्ययोऽर्थात्प्रकरणाद्वा भवतीति। यथा गोपालकमानय माणवकमध्यापयिष्यतीति यष्टिहस्तस्याऽध्यापनाऽसम्भवात्कृतसंज्ञिन एव ग्रहणमिति। व्याकरणशास्त्रे तु "उभयगतिरिह" भवति इत्युक्तं "बहुगणवतुडति संख्या" १।१।२३। इति सूत्रमहाभाष्यकैयटयोरिति॥ ६५॥

## सहचरिताऽसहचरितयोस्सहचरितस्यैव ग्रहणमिति न्यायः॥ ६६॥

यथा रामलक्ष्मणाविति। अत्र दाशरथे रामस्य ग्रहणं न तु परशुरामबलरामयोर्लक्ष्मणसाहचर्यादित्यन्यत्राऽपि बोध्यमिति संक्षेपः॥ ६६॥

## प्रधानाऽप्रधानयोः प्रधाने कार्यसंप्रत्यय इति न्यायः॥ ६७॥

यथा–लोके बहुषु गच्छत्सु सैन्यरथेषु कोयमिति प्रश्ने राजेत्युत्तरं दृश्यते॥अयं न्यायः"नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्" १।२।६९। इति, "हेतुमति च" ३।१।२६। इति सूत्रमहाभाष्यकैयटयोः स्पष्टः॥ ६७॥

## उपजीव्योपजीवकयोरुपजीवकस्य प्राबल्यमिति न्यायः॥ ६८॥

प्रत्यक्षविरोधेन तदितरसर्व्वबाध्यत्वे विवक्षितेऽयं प्रवर्त्तते। अयमन्यत्राऽपि सत्युपजीव्योपजीवकभावे प्रवर्त्तते।

तद्यथा—उपजीव्यते आश्रीयते कार्याय यदिति व्युत्पत्त्यो-पजीव्यशब्दः कारणपरः, उपजीव्यत उत्पद्यते यदिति व्युत्पत्त्योपजीवकशब्दः कार्यपरः। एवञ्च—कार्य्यस्य कारण-विरोधो नोचित इति भावः। एवञ्चैतन्न्यायमूला " सन्नि-पातलक्षणो विधिरनिमित्तं तद्विघातस्य " इति परिभाषे-त्युक्तं परिभाषेन्दुशेखरे, विस्तरभिया नेह प्रपञ्च्यत इति ॥ ६८ ॥

## गौणमुख्ययोर्मुख्ये कार्य्यसम्प्रत्यय इति न्यायः ॥ ६९ ॥

**अभिव्यक्तपदार्था ये स्वतन्त्रा लोकविश्रुताः ॥**
**शास्त्रार्थास्तेषु कर्त्तव्याः शब्देषु न तदुक्तिषु ॥ ७० ॥**

इमौ द्वौ न्यायौ शास्त्रेषु व्याख्यातप्रायौ, अत एवेह संक्षेपत उदाहृतौ विस्तरभियेति। तथाहि—गुणादागतो गौणः, यथा गोशब्दस्य जाड्यादिगुणनिमित्तोऽर्थो वाहीकः। अप्रसिद्धश्च सञ्ज्ञादिरपि तद्गुणारोपादेव बुध्यते। मुखमिव प्रधानत्वान्मुख्यः 'प्रथम इत्यर्थः। गौणे ह्यर्थे शब्दः प्रयुज्य-मानो मुख्यार्थ.रोपेणैव प्रवर्तते ॥ अयं न्यायः " अग्नेः स्तुत्स्तोमसोमाः " ८। ३। ८२। इति सूत्रमहाभाष्येऽभि-हितः—अग्नेर्दीर्घात्सोमस्य, अग्नेर्दीर्घात्सोमस्येति वक्तव्यम्। अग्नीषोमौ। इतरथा ह्यनिष्टप्रसङ्गः, इतरथा ह्यनिष्टं प्रसज्येत अग्निसोमौ माणवकाविति। तत्तर्हि वक्तव्यं न वक्तव्यं, गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्ययः। तद्यथा—गौरनुबन्ध्योऽ-

जोऽग्नीषोमीयः न वाहीकोऽनुबध्यत इति । एतेनाभिव्यक्ते न्यायोपि व्याख्यातो विज्ञेयः ॥ ६९ ॥ ७० ॥

## तदभिन्नाभिन्नस्य तदभिन्नत्वमिति न्यायः॥७१॥

यथा सर्वेषा ब्रह्मादिदेवानामीश्वरांशत्वात्तदाभिन्नत्वेऽन्योन्यमप्यभेद इति भावः ॥ ७१ ॥

## लक्षणप्रमाणाभ्यां वस्तुसिद्धिरिति न्यायः॥७२॥

लक्ष्यते ज्ञायते पदार्थोऽनेन 'लक्ष–दर्शनाङ्कनयोः' करणे ल्युट् । लक्षणमसाधारणो धर्म्मः। तद्विविधम्–इतरभेदानुमापकं, व्यवहारप्रयोजकश्चेति नैयायिकाः। सजातीयविजातीयव्यावर्त्तको लक्ष्यवस्तुगतः कश्चिल्लोके वेदे वा प्रसिद्धो धर्म्मो लक्षणमिति मीमांसकाः। प्रमाता येनार्थं प्रमिणोति तत्प्रमाणम् । अयं शब्दो नित्यक्लीबैकत्ववानिति 'वेदाः प्रमाणम् 'स्मृतयः प्रमाणम्' इत्यादि । बहुवचनान्तमपि "प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि" इति । तेन लक्ष्ये वस्तुनि सम्भावनायां जातायां प्रमातुमुद्युक्तः प्रमाणेन तदवगच्छति,यथा ताभ्यां वस्तुसिद्धिस्तत्तद्व्यवहारयोग्यतया ज्ञानम् । तथा च–यथा गन्धवत्त्वादिलक्षणेन प्रत्यक्षादिप्रमाणेन च पृथिव्यादिसिद्धिस्तथा यत्र विवक्षा तत्रास्य प्रवृत्तिरिति।एवञ्चाग्नीन्द्रादित्येश्वरवादे तत्तद्क्तास्सर्गादिहेतुत्वरूपेश्वरलक्षणं श्रुत्यादिप्रमाणञ्च तत्र तत्र दर्शयन्त ईश्वरत्वं साधयन्तीति ॥ ७२ ॥

अनधीते महाभाष्ये व्यर्था स्यात्पदमञ्जरी ।
अधीतेऽपि महाभाष्ये व्यर्था स्यात्पदमञ्जरी ॥ इति न्यायः ॥ ७३ ॥

यथैवमीश्वरमनाराध्याराध्य चान्यदेवमपवर्गेच्छा व्यर्था ।
आराध्य चान्यदेवमनाराध्य परमेश्वरं मुक्तीच्छा व्यर्था ७३॥

## कूपमण्डूकन्यायः ॥ ७४ ॥

यत्र महाजनप्रणीतसत्यपदार्थे ज्ञानलवदुर्विदग्धोऽल्पज्ञो न सम्मनुते तत्रास्य प्रवृत्तिः । यथा—समुद्रमण्डूकः कथञ्चित्तत्तीरसमीपस्थकूपे प्रविष्टस्तश्च दृष्ट्वा कूपमण्डूका अदृष्टिगोचरोयमिति ज्ञात्वा पप्रच्छुः—कुत आगतो भवानिति,समुद्रादिति तत्प्रतिवचनं श्रुत्वा कियान्स इति पृष्टवन्तो महानिति तेन प्रत्युक्ताः।ततस्तेष्वेकः कूपमण्डूकः स्वजङ्घां प्रसार्य किमेतावानित्युक्तवान्, नहि; महान् स इति प्रतिवचनमाकर्ण्य द्वितीयजङ्घां प्रसार्य तर्ह्येतावानिति भविष्यतीत्युवाच । पुनरपि तेन निराकृतस्तृतीयजङ्घां प्रसार्य तुरीयां जङ्घाञ्च प्रसार्योत्प्लुत्य च क्रमेण प्रादेशवितस्तिपरिमितं देशं किमेतावानिति पृच्छँस्तेन च निरस्तश्चेत्तर्हि कूपसदृशो भविष्यतीत्युवाच। भूयोपि भ्रातर्नास्ति अयं कूपस्त्वल्पोन्यः सरितां पतिरनवगाह्य गम्भीरोऽलक्ष्यपारावारोऽतीव महत्तम इति तेन प्रत्युक्तस्तर्हि नास्त्येव स यः कूपादपि महान्,त्वन्तु मिथ्यैव प्रलपसीति तं निराचक्रे। स च तं स्वमनसि हासितवानिति गाथा

लोके गीयते । तथा च—यथा समुद्रमज्ञात्वा निराकुर्वन्कूपमण्डूक उपहास्यतां प्राप्तस्तथान्यमताऽनभिज्ञस्तद्दूषणपर उपहासास्पदी भवतीति न्यायसङ्गतिरिति ॥ ७४ ॥

## हंसबकन्यायः ॥ ७५ ॥

यत्राप्तोक्तसत्योत्कृष्टपदार्थे मूर्खजनोपहासस्तत्राऽयं प्रवर्तते । तद्यथा—"कस्त्वं लोहितलोचनास्यचरणो हंसः कुतो मानसात्किन्तत्रास्ति सुवर्णपंकजवनं नीरं सदा निर्म्मलम् । रत्नानां निचयाः सुवर्णलतिका वैदूर्यरोहाः क्वचिन्मण्डूका अपि तत्र सन्ति न बकैराकर्ण्य हीहीकृतम् ॥" इति हंसबकसंवादरूपपद्येन विवृतोयमिति॥यद्वा—"हंसः श्वेतो बकः श्वेतः को भेदो बकहंसयोः । क्षीरनीरपृथक्कारे हंसो हंसो बको बकः॥"इति पद्येन वा विवृतः॥७५॥

## अन्धगजन्यायः ॥ ७६ ॥

यत्र तत्त्वानभिज्ञमूर्खाणां परस्परकलहस्तत्रायमवतरति। अन्धैर्निर्धारितो गजोऽन्धगजस्तस्य न्याय इति मध्यमपदलोपगर्भः षष्ठीतत्पुरुषः । यथा हि लोके श्रूयते—जन्मान्धा बहवः कश्चिदनन्धं पुरुषमूचुरस्मान्गजं दर्शयेति,स च गजशालायां तान्नीत्वा तं तं गजावयवं तेन तेन ग्राहयित्वा चोवाचायं गज इति, ते च तं तमवयवमेव गजत्वेन निश्चित्य स्वस्थानमागताः परस्परं कलहं चक्रुः—शूर्पसदृशो गज इति कर्णस्पर्शी, महासर्प्पसदृश इति शुण्डग्राही,स्तम्भतुल्य इति जङ्घाग्रहीता,पुच्छग्राहकस्तु स्थूल-

रज्जुसमो गज इत्युवाचेति तथा वेदशास्त्राभिप्रायानभिज्ञा आर्य्याभासवादिनोपि कानिचिदुरूहश्रुतिप्रभृतिवाक्यानि स्वस्वाभीष्टप्रदानीव पश्यन्त इतराणि तु पश्यन्तोप्यपश्यन्त इव तत्त्वमजानन्तोऽन्योन्यं विवदन्त इत्यर्थः ॥७६॥

## अन्धगोलाङ्गूलन्यायः ॥ ७७ ॥

यत्र धूर्त्तवञ्चिताज्ञजनदुःखवृत्तं तत्रास्य प्रवृत्तिः। अन्धेन गृहीतं गोलाङ्गूलं पुच्छमित्यर्थः। तद्यथा—कश्चित्किल दुष्टात्मा धूर्त्तः कान्तारे नानालङ्कारालङ्कृतशरीरं भ्रान्तमज्ञं स्वबन्धुपुरे जिगमिषुं कंचित्पथिकं—रे पथिक किमत्र त्वया दुःखेन स्थीयते, आगच्छ त्वां पुरमार्गं दर्शयामीत्युक्त्वाऽऽश्वास्य च स्वविषये विश्वासं नीतवान्। स च पथिकः कर्णामृतं वचनमाकर्ण्य तमाप्तं मत्वा बभाषे—अहो भाग्यमहो भाग्यं यदत्रभवान्मां दीनं स्वाभीष्टं पुरं प्राप्तुमसमर्थं ब्रूत इति, स च विप्र ( वसु ) लिप्सुस्तं कान्तारान्तरं नीत्वा छलेनान्धीकृत्य तद्भूषणानि गृहीत्वा गोलाङ्गूलं ग्राहयित्वाऽनेन स्वेष्टपुरं प्राप्स्यसीत्युक्त्वा च स्वस्थानं गतः। स चान्धःसन्नपि तद्वचनश्रद्धया तदत्यजन्स्वाभीष्टपुरमप्राप्य वृषभाऽनुगतो वने कण्टकाविद्धपादे महद्दुखं प्राप। तथैवं पाषण्डिवाञ्चितमूर्खाः पुरुषा दुखं प्राप्नुवन्तीति भावः। अयं न्यायः "तन्निष्ठस्य मोक्षोपदेशात्" १। १। ७। इति शारीरकसूत्रभाष्ये—यदि चाज्ञस्य सतो मुमुक्षोरचेतनमनात्मानमात्मेत्युपदिशेत्प्रमाणभूतं शास्त्रं स च

श्रद्दधानतया प्रकृतन्यायेन तदात्मदृष्टिं न परित्यजेत्तद-
तिरिक्तं चात्मानं न प्रतिपादयेत् । तथा सति पुरुषार्थाद्वि-
हन्येतानर्थं च ऋच्छेदित्युक्तं, विवृतश्च रत्नप्रभाया-
मिति ॥ ७७ ॥

## चतुर्वेदविन्न्यायः ॥ ७८ ॥

यथा गोहिरण्यादिरूपं बहुधनं चतुर्वेदविदे देयं भव-
तीति कस्यचिद्दातुर्वचनं श्रुत्वा कश्चिन्मुग्धो वेदाश्चत्वार
इत्यहं जाने, मह्यं देयमिदमिति वदन्न तु लेभे तत्प्रत्युतो-
पहास्यतां प्राप्तः, तथा यः सच्चिदानन्दरूपं प्रत्यगभिन्नं
ब्रह्मेत्यादिशब्दमात्राभिज्ञस्तदर्थाभिज्ञो वा तत्त्ववित्त्वाभि-
मानेन तद्गतिमिच्छति न स तामेति ह्युपहसनीयश्च भव-
तीति ज्ञेयमिति ॥ ७८ ॥

## नृपनापितपुत्रन्यायः ॥ ७९ ॥

यत्रातिनिन्द्येपि स्वकीयेऽतिरम्यताबुद्धिविवक्षा तत्राय-
मवतरतीति । यथा—इत्थं हि किल लौकिकी गाथा—कस्य-
चिन्नृपस्य भृत्यो नापित आसीत्, स कदाचित्प्रातरुत्थाय
सर्वं पुरमन्विष्यातीव सुन्दरो बालो मे दर्शनाय त्वयात्रा-
नेय इति नृपेणाऽऽज्ञप्तः, स तु नापितो राजाज्ञां श्रुत्वाऽखि-
लपुरमन्विष्य दृष्ट्वापि च तत्र तत्रातिरम्यान्बालान्स्वसुततु-
ल्यान्न मत्वा तानपहाय स्वसुतमेवोपशान्तानलाङ्गाराभं
काणं खल्वाटं कृशह्रस्वबाहुजंघं स्थूललम्बोदरं राजवेश्मनि
नीत्वा राज्ञे निवेदयामास—राजन्नानीतोऽयमतिरम्यतमो

बालः। दृष्ट्वा च तं कुरूपं नापितपुत्रं राजा उपहासं मयि कृतवानयं खल इति मत्वा चुकोपोवाच च–अरे मूर्ख किमि-दमिति। नापितश्च कुपितं राजानं ज्ञात्वा कृताञ्जलिपुटो भूत्वोवाच–राजेन्द्रमौले! तव चरणमुपलभे, नायमुपहासः किन्तु मे मनसीत्थमेव निश्चयः–मत्पुत्रसदृशो रम्यस्त्रिलो-क्यामपि नास्ति, तव नगरस्य का कथेति। राजा च सत्य-मीदृश्येव रागग्रहगृहीतचित्तदशेति कोपं तत्याजेति। तथा–यथातिकुरूपेपि स्वसुते रागातिशयवशान्नापितस्य सर्व्वोत्तमत्वधीस्तथा केषाञ्चिदाधुनिकपाषण्डिमताऽनुयायि-मन्दधियां प्राक्तनजन्मकुसंस्कारप्रयुक्तरागातिशयवशात्क-स्मिँश्चिदतिक्षुद्रेपि मते सर्वोत्तमत्वधीः परिहृत्य च सनात-नश्रौतस्मार्तपौराणिकोत्तममतानीति न्यायसंगतिरिति७९॥

## स्वांगुष्ठमपि चुम्बन्तमिक्षुदण्डमयाचतेति न्यायः ॥ ८० ॥

यत्र श्रौतस्मार्तसनातनधर्मानभिज्ञवर्णाश्रमभ्रष्टा मूर्खा जनाः स्वस्वप्रीतिगोचरेभ्यस्स्वाभिलषितार्थतृष्णाग्रस्तेभ्य आचार्याभासेभ्यो निजाभीष्टार्थान् याचन्ते तत्रायं चरितार्थ इति ॥ ८० ॥

## महिषी प्रसवोन्मुखी महिषो मदनातुर इतिन्यायः ॥ ८१ ॥

यत्र केचिन्महामूर्खा मृतम्लेच्छाद्यधमजातिस्थानानि स्वस्वकुलदैवतानि स्वाभिलषितप्रदानि च मत्वा म्लेच्छा-

ह्यधमजातिनीचयोनिप्राप्त्या अतिदुःखितेभ्योपि स्वाभीष्टं याचन्ते तत्राऽस्य प्रवृत्तिरिति । उक्तञ्च गुमानीकविना रावणमारीचसंवादविषये । तथाहि—तं मारीचं प्राप्य भीरुकं दशाननः प्रागुदाजहार—"सीतामीहे हर्त्तुमत्र मे रणे सहायो भवार्थकार । कुत्ता रोवे दर्द देह की मीयाँ कहे तुम चलो शिकार ॥" इति ॥ ८१ ॥

## घुणाक्षरन्यायः ॥ ८२ ॥

घुणः कीटभेदः । यथा घुणेन भक्षिते काष्ठादौ ह्यकस्मात्ककारादिसदृशच्छिद्रेषु सत्सु घुणेनाक्षराणि निर्म्मितानि मूर्ख इति कल्पते तथा प्रकृतेपि ॥ ८२ ॥

## अन्धचटकन्यायः ॥ ८३ ॥

यथा ह्यकस्मादन्धस्य हस्ते पतितश्चटकोऽन्धेन गृहीत इति लोके प्रसिद्धिमगात्तथा दैवाल्लब्धं स्वाभीष्टं स्वेष्टदेवत्वेनाभिमतैश्वरदत्तं मन्यन्त इत्यर्थः । घुणाक्षरन्यायविषय एवास्य प्रवृत्तिरिति ॥ ८३ ॥

## एकं सन्धित्सतोऽपरं प्रच्यवत इति न्यायः ॥ ८४ ॥

यथैककांस्यपात्राऽवयवादि सन्धातुमिच्छतोऽपरं तदत्यन्ताऽनलसंयोगादेः प्रच्यवते तथा "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" इत्यादिवाक्यतोऽभेदवचःप्रामाण्यसाधने प्रवृत्तानां वैष्णवं शैवमित्यादिपुराणसञ्ज्ञाभेदात्, "चतुर्भिर्भगवान्विष्णुर्द्वाभ्यां ब्रह्मा तथा रविः । अष्टादशपुराणेषु शिष्टैस्तु भगवाञ्छिवः ॥" इत्यादिप्रभासादिवच-

नाच्च प्रकृतन्यायाविषयत्वं दुर्वारमिति भेदवादिनो वदन्तीति ॥ ८४ ॥

## पुत्रलिप्सया देवं भजन्त्या भर्त्ताऽपि नष्ट इति न्यायः ॥ ८५ ॥

अस्य पूर्वन्यायसदृशविषये प्रवृत्तिः । यथा—केचिद्वादिनः शङ्कन्ते—ननु प्रत्यगभिन्नमेकमेवाऽद्वितीयं ब्रह्मेति सिद्धान्तो भवतामिति । "ईश्वरः सर्व एवैते" इत्युक्त्या तु प्रकृतन्यायेन जीवेशाऽभेदं साधयितुं प्रवृत्तैर्भवद्भिः सर्ववादिसम्मतेशाऽभेदोऽपि नाशितः स्यादिति वदन्तीति ॥ ८५ ॥

## वृद्धिमिष्टवतो मूलं विनष्टमिति न्यायः ॥ ८६ ॥

अयमपि पूर्वविषये प्रवर्त्तते । सर्वेषामीशत्वाङ्गीकारेऽपि तस्याऽसंगत्वेन घटादिवद्विनाशोत्पत्तिः, ब्रह्मादीशत्वबोधकानां वाक्यानां व्यवस्थाऽभावादप्रामाण्यापत्तिरिति ॥ ८६ ॥

## सुतजन्ममृतिन्यायः ॥ ८७ ॥

यथा कश्चित्कश्चिद्देवमाराध्य ततः पुत्रं लब्ध्वा पुत्रान्तरलाभाय देवान्तरमाराध्य ततस्तं लब्धवाँस्तज्जन्मक्षण एव पूर्वदेवकोपात्पूर्वजातमरणं जातं तथा प्रकृतेऽपि ॥ ८७ ॥

## सार्वजनीनस्तुल्याऽयव्ययः ॥ ८८ ॥

इति न्यायोऽपीह बोध्यः ॥ ८८ ॥

## चर्म्मतन्तौ महिषीं हन्तीति न्यायः ॥ ८९ ॥

सप्तमीह निमित्ते । निमित्तं च फलम्, तथा चर्म्मतन्त्वर्थमित्यर्थः । अयं न्यायो योऽल्पस्य हेतोर्बहु हातुमिच्छति तत्र विषये प्रवर्त्तत इति । तथा चोक्तं रघुवंशे—"अल्पस्य हेतोर्बहु हातुमिच्छन्विचारमूढः प्रतिभासि मे त्वम्" इति ॥ ८९ ॥

## मण्डूकतोलनन्यायः ॥ ९० ॥

यथा मण्डूकतोलने तुलास्था मण्डूकास्तुलात उत्प्लुत्योत्प्लुत्य पतन्ति तथा प्रकृतेपीति बोध्यम् ॥ ९० ॥

## सच्छिद्रघटाम्बुन्यायः ॥ ९१ ॥

पूर्वोक्तन्यायसदृशविषयेऽयं प्रवर्तते ॥ ९१ ॥

## एकामसिद्धिं परिहरतो द्वितीया आपद्यत इति न्यायः ॥ ९२ ॥

अयमपि तथा । बौद्धाधिकारे उदयनाचार्येणोक्तः—"अङ्कुराद्यकर्तृकं शरीराऽजन्यत्वादित्यत्र शरीरीति विशेषणेन स्वरूपाऽसिद्धिं परिहरतो बौद्धस्याऽव्याप्यत्वासिद्धिरापद्यते" इत्यन्तेन ॥ ९२ ॥

## उपनयन्नपनयन्धर्म्मो विकरोति धर्म्मिणमिति न्यायः ॥ ९३ ॥

यथा पूर्वस्वरूपरसादेधर्मस्य परिवृत्तौ रूपरसाद्युत्तरोत्पत्तौ च तण्डुलादेर्धर्म्मिणो विकृतिर्दृश्यते तथा प्रकृतेपि

यस्य धर्म्मिणः पूर्वधर्म्मस्यापगमेऽन्यधर्मस्योत्पत्तिस्तत्रायं न्यायोऽवतरतीति ॥ ९३ ॥

## दुश्चिकित्स्यव्रणपीडितानां व्रणं शिशमयिषोः शस्त्रग्रहणमिति न्यायः ॥ ९४ ॥

यथा व्रणपीडितपुंसः पीडानिवृत्तये शस्त्रेण व्रणं छिनत्ति वैद्यस्स तु वैद्यत्वेनोच्यते न तु घातकत्वेन, एवं च निरन्तरदुःखमयसंसारपरिवृत्तिश्रान्तानां जीवानां कश्चित्कालं विक्षेपविगमसमुल्लसदात्मानन्दानुभवेन विश्रान्तिं संपादयितुकामस्य शिवस्य संहाराय तामसत्वम्। वस्तुतस्तु—निरतिशयकरुणाम्बुधित्वमेव शिवस्य। अत एव निदानज्ञस्य भिषजो रुग्णहिंसां प्रयुञ्जतो न किञ्चिदपि नैर्घृण्यम्। "घृणैवात्र प्रयोजिका" इति शिवपुराणे व्याख्यातम्। एतेन तामसत्वरूपेण रुद्रस्याऽपकर्षत्वप्रलापो मूर्खाणां निरस्त इति ॥ ९४ ॥

## सर्वं विशेषणं साऽवधारणमिति न्यायः ॥ ९५ ॥

यथा शङ्खः श्वेत इत्यत्र श्वेत एवेत्यर्थ एवमन्यत्रापि बोध्यमिति ॥ ९५ ॥

## सर्वं वाक्यं साऽवधारणमिति न्यायः ॥ ९६ ॥

यथाऽवधारणार्थक एवकारस्त्रिविधः—१ क्रियान्वितः, २ विशेषणान्वितः, ३ विशेष्यान्वितश्च। तत्र प्रथमस्यात्यन्तायोगव्यवच्छेदोऽर्थः, यथा नीलमुत्पलं भवत्येवेति। द्वितीय-

स्याऽयोगस्यवच्छेदोर्थः यथा शंखः, श्वेत इति पूर्व्वमुक्तमिति। तृतीयस्यान्ययोगव्यवच्छेदोर्थः, यथा पार्थ एव धनुर्धर इत्येवमन्यत्रापि बोध्यम् ॥ ९६ ॥

## इक्षुरसन्यायः ॥ ९७ ॥

यथेक्षुरसो बहुरसोऽपि बहिर्मलिनो दृश्यते तथा मायान्तर्बहुरूपापि बहिस्तमोरूपा दृश्यते, तस्याश्च यद्विमलतमं रूपं तदेवेक्षुरसस्येव सिता । यथा चेक्षुमाधुर्य्यं सितायां कृत्स्नमभिव्यज्यतेऽन्यत्र मलसम्पर्कादल्पमल्पतरञ्चैवं परैश्वर्यं सत्त्व इति शुद्धे सर्व्वमभिव्यज्यते ॥ ९७ ॥

## इक्षुविकार इति न्यायः ॥ ९८ ॥

अयमपि पूर्वविषये प्रवर्तते। यथेक्षुविकारेष्वपि रसगुड़शर्करासितासु मालिन्याऽपगमतारतम्यादेव विभिन्नरूपत्वं दृश्यते तथा सत्त्वादिष्वपि बोध्यमिति ॥ ९८ ॥

## संसर्गजा दोषगुणा भवन्तीति न्यायः ॥ ९९ ॥

यथा "सन्तप्तायसि संस्थितस्य पयसो नामापि न ज्ञायते मुक्ताकारतया तदेव नलिनीपत्रस्थितं राजते। स्वात्यां सागरशुक्तिमध्यपतितं तन्मौक्तिकं जायते प्रायेणाऽधममध्यमोत्तमगुणः संसर्गतो जायते ॥" इति श्लोकेन विवृतोयं न्यायः ॥ ९९ ॥

## मलिनदर्पणन्यायः ॥ १०० ॥

पूर्वार्थज्ञाते स्पष्टोऽयम् ॥ १०० ॥

## व्रीहिबीजन्यायः ॥ १०१ ॥

यथा व्रीहिबीजस्य स्थूलस्तुषः स्पष्टः; तत आन्तरः सूक्ष्मस्तुषः फलीकरणनामा, ततोप्यान्तारो गर्भभूतस्तण्डुलः। तत्र च यथा विवेके क्रियमाणे सत्यपि तुषद्वयोपधाने तण्डुलादेवाङ्करोत्पत्तिरान्तरत्वात्, एवं रजस्तमसोर्गर्भात्सत्त्वादेव वियदाद्युत्पत्तिरत एव श्रेयस्कामैस्सत्त्वावच्छिन्नः परमेश्वरो हरिरेवाराध्यो नान्यो देव इति वैष्णवैकदेशिनो वदन्तीति ॥ १०१ ॥

## राजसं तामसं चैव दूरतः परिवर्ज्जये-र्दिति न्यायः ॥ १०२ ॥

अयं पूर्व्वन्यायपोषकः। स्पष्टः ॥ १०२ ॥

## व्रीहिबीजन्यायः ॥ १०३ ॥

अनेन न्यायेन केचिच्छैवाः "तमो वा इदमग्रे आसीत्" इति श्रुतिमनुसृत्यैवञ्च यथा व्रीहिस्तम्बे प्रथमं तुष एवाऽविर्भवति, ततस्तद्गर्भे प्रकृत्यापूरेण क्षीरम्भवति, तदपि पुनः प्रकृत्यापूरेण घनतां गतस्तण्डुलाख्यः सारो भवति, तस्मिँश्च सिद्धे तद्बीजं दृढं सदङ्कुरोत्पादनक्षमं भवति, एवं शिवे प्रथमं तम एवाविर्भवति स्म, तच्चेश्वरेणावरकत्वस्वभावादेकदेशे प्रच्यावितं ( वैषम्यात् ) प्रवृत्तिस्वभावत्वापत्त्या सत्त्वं स्यादेव गुणसामस्त्यविवक्षायां त्रिगुण एकः पुरुषः, तत्पृथग्विवक्षायां तु त्रयः, तत्रापि तमोपाधिश्शिव ईशः, रजोपाधिर्व्विधिः, सत्त्वोपाधिर्व्विष्णुः, तौ च कार्यौ

गुणोपाधित्वात्, कारणोपाधेः शिवस्यानुगौ जीवौ स्तः "कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः" इत्यादिश्रुतेः । अत एव तौ न श्रेयस्कामोपासनार्हौ किन्तु शिव एवेति वदन्तीति मतान्तरप्रदर्शनाय पुनरुक्तोऽयं न्याय इति॥१०३॥

## बाणोष्ट्रीन्यायः ॥ १०४ ॥

यथा कश्चिदुष्ट्रपतिरजगरेण वेष्टितमुष्टं रक्षन्बाणैरजगरं जघानेति, लौकिकी गाथा, तथा निषेधवाक्यानि बाधावधित्वेनाऽऽत्मानं रक्षयंत्यनात्मानं बाधन्त इति॥१०४॥

## उष्ट्रलगुडन्यायः ॥ १०५ ॥

अयं हि स्वमते परेणोद्भाव्यमानानां दूषणानां तन्मते पातनेऽवतरतीति । यथा उष्ट्रेणोह्यमानेनैव लगुडेन तत्प्रहारः, तथा प्रकृतेपि ॥ १०५ ॥

## पुष्टलगुडन्यायः ॥ १०६ ॥

यथा बहूनां शुनां मध्य एकस्य शुनः परिहारार्थं प्रक्षिप्तः पुष्टलगुडस्तं प्रहृत्याऽन्यानपि प्रहरति, तथैकतान्त्रिकमतनिरासाय प्रयुक्तया युक्त्या तत्सदृशमतान्तरमपि निराक्रियते ॥ १०६ ॥

## यः कुरुते स भुंक्त इति न्यायः ॥ १०७ ॥

स्पष्टः ॥ १०७ ॥

## कैमुतिकन्यायः ॥ १०८ ॥

किञ्च तदुत च, समाहारो वा किमुत तस्य भावः कैमुत्यं कैमुतिको वा, काव्यार्थापत्तिरस्य नामान्तरम् । उक्तञ्च

"कैमुत्येनाऽर्थसंसिद्धिः काव्यार्थापत्तिरिष्यते। स जितस्त्वन्मुखेनेन्दुः का वार्त्ता सरसीरुहाम्॥" इति। क्वचिदपिनाऽयं द्योत्यते । यथा—" स्वामिनां निन्दनं श्रुत्वा ये न यान्ति त्वरान्विताः । स्थानान्तरं ह्यप्रतिष्ठास्तेपि स्युः पापयोनयः॥"। अयं भावः—यदीशनिन्दां श्रुत्वा ये शीघ्रं स्थानान्तरं न यान्ति ते ह्यप्रतिष्ठास्सन्तः पापयोनयो भवन्तीति किमु वक्तव्यम् अत्र प्रकृतन्यायद्योतकोऽपिरिति ॥ १०८ ॥

## विषकीटन्यायः ॥ १०९ ॥

यथा विषाज्जातःकीटो विषं भक्षन् सन् विषस्थो जीवति, तद्वत्प्रकृतेपि।विवृतश्चाऽयं पद्येन। तद्यथा—"विप्राऽस्मिन्नगरे महान्कथय कस्तालद्रुमाणां गणः को दक्षः परवित्तदारहरणे सर्वोऽपि पौरो जनः। को दाता रजको ददाति वसनं प्रातर्गृहीत्वा निशि तत्किं जीवसि हे सखे विषकृमिन्यायेन जीवाम्यहम्॥" इति॥ १०९॥

## कीटभृङ्गन्यायः ॥ ११० ॥

यथा "कीटको भ्रमरं ध्यायन्भ्रमरत्वाय कल्पते" एवञ्च कीटो भ्रमरेण गृहीतस्तद्भिया तमभिध्यायँस्तत्स्वरूपतामेति, तथा हरिहरौ प्रेम्णाऽन्योन्यमभिध्यानादन्योऽन्यात्मकतां प्राप्तावित्यर्थः॥ ११०॥

## अश्मलोष्टन्यायः ॥ १११ ॥

यथा तूलाद्यपेक्षयाऽतिकठिनस्याऽपि लोष्टस्याऽश्मापेक्षया मृदुत्वं, तथा प्रकृतेपि॥ १११॥

## पाषाणेष्टकान्यायः ॥ ११२ ॥

यथेष्टकापेक्षया पाषाणस्यातिकठिनत्वम्, तथा प्रकृतेऽपि। अयं न्यायः पूर्वोक्तवैषम्याधिक्यविषयकन्यायापेक्षया स्वल्पवैषम्यविवक्षायां बोध्यः ॥ ११२ ॥

## बिल्वखल्वाटन्यायः ॥ ११३ ॥

व्याख्यातोयं न्यायः श्लोकेन। तद्यथा—"खल्वाटो दिवसेश्वरस्य किरणैः संतापितो मस्तके वाञ्छन्देशमनातपं विधिवशाद्विल्वस्य मूलं गतः । तत्राऽप्यस्य महाफलेन पतता भग्नं सशब्दं शिरः प्रायो गच्छति यत्र भाग्यरहितस्तत्रैव यान्त्यापदः ॥" 'तत्रापदां भाजनम्' इति वा पाठान्तरमिति ॥ ११३ ॥

## धर्म्माऽधर्म्मात्मकन्यायः ॥ ११४ ॥

## कोषपानन्यायः ॥ ११५ ॥

## तण्डुलभक्षणन्यायः ॥ ११६ ॥

## विषभक्षणन्यायः ॥ ११७ ॥

## तप्तपरशुग्रहणन्यायः ॥ ११८ ॥

## घटारोहणन्यायः ॥ ११९ ॥

## तप्तमाषिकोद्धरणन्यायः ॥ १२० ॥

## उदकनिमज्जनन्यायः ॥ १२१ ॥

एतावष्टौ न्याया दिव्यविशेषात्मकाः। तत्प्रकारश्चाकरादिग्रन्थतोऽवसेयो विस्तरभयादत्र नोक्तः। यथा सर्वदिव्यसा-

धारणपूर्वदिनोपवासतश्चौराद्यस्य तत्पानादिकाले सुखं भवति, शास्त्रनिर्दिष्टावधिकाले तु महद्दुःखं भवति, तथा हरिहरादिदेवतास्वकभक्तिव्याजेनेतरनिन्दां कुर्वतो निन्दाव्यसनिनो यद्यपि तत्काले स्यात्सुखम् । तथापि निन्दाजन्याघपरिपाककालेऽतिघोरं नरकादिदुःखम्भव- तीति न्यायाऽष्टकसङ्गतिरिति । किञ्चात्र प्रसङ्गगत्या धर्म्माऽधर्म्मयोः स्वरूपलक्षणादिकं किञ्चिन्निरूप्यते—'स्या- द्धर्ममस्त्रियाम्' इत्यमरः । ध्रियते लोकोऽनेन, वा धरति लोकमिति 'धृञ्-धारणे' अस्मात् "अर्तिस्तुसुहुसृधृक्षि- क्षुभायावापदियक्षि नीभ्यो मन्" १३७ इति औणादिको मन् प्रत्ययः । "चोदना लक्षणोर्थो धर्मः" इति जैमि- नीयसूत्रलक्षितधर्म्मशब्दस्य यागादिपरत्वं भाष्यसम्मतम्। परेषा मते स्वर्गसाधनाऽदृष्टभेदपरत्वमिति । तथाहि— "अथातो धर्म्मजिज्ञासा" इति सूत्रभाष्ये धर्म्माय जिज्ञासा धर्मजिज्ञासा, सा हि तस्य ज्ञातुमिच्छा—स कथं जिज्ञा- सितव्यः,को धर्मः, कथंलक्षणः, कान्यस्य साधनानि, कानि साधनाभासानि, किम्परश्चेति । तत्र को धर्मः, कथंलक्षण इत्येकेनैव सूत्रेण व्याख्यातम् । "चोदनालक्षणोऽर्थो धर्मः" इति । कान्यस्य साधनानि, कानि साधनाभासानि, किम्प- रश्चेति शेषलक्षणेन व्याख्यातम् । क पुरुषपरत्वम्, क वा पुरुषो गुणभूत इत्येतासां प्रतिज्ञानां पिण्डस्यैतत्सूत्रम् "अथातो धर्म्मजिज्ञासा" इति ॥ धर्म्मः प्रसिद्धो वाऽप्र-

सिद्धो वा स्यात् । स चेत्प्रसिद्धो न जिज्ञासितव्यः । अथाऽप्रसिद्धो नितराम्, तदेतदनर्थकं धर्मजिज्ञासाप्रकरणम् । अथ वाऽर्थवद्धर्म्मं प्रति हि विप्रतिपन्ना बहुविदः केचिदन्यं धर्म्ममाहुः । केचिदन्यं सोयमविचार्य प्रवर्तमानः कश्चिदेवोपाददानो विहन्येताऽर्थादनर्थकं चच्छेत् । तस्माद्धर्म्मो जिज्ञासितव्य इति । स हि निःश्रेयसेन पुरुषं संयुनक्तीति प्रतिजानीमहे । भा० तदभिधीयते "चोदनालक्षणोऽर्थो धर्म्मः" इति २ सू. । चोदना इति लिङ्लोट्तव्यदादिशब्दव्यवस्थापितविधिनिषेधरूपयजनादिक्रियायाः प्रवर्तकं वचनमाहुः । चोदनैव लक्षणं प्रमाणं यस्य तादृशोर्थः, स धर्मः । 'चुद्–प्रेरणे' चौरादिको धातुः, चोद्यते प्रवर्त्त्यतेऽनया, युच् । "चोदना चोपदेशश्च विधिश्चैकार्थवाचिनः"इति भट्टोक्तिः।आचार्यचोदितः करोति इति हि दृश्यते । लक्ष्यते येन तल्लक्षणम्, धूमो लक्षणमग्नेरिति हि वदन्ति । तया यो लक्ष्यते सोर्थः पुरुषं निःश्रेयसेन संयुनक्तीति प्रतिजानीमहे । चोदना हि भूतं भवन्तं भविष्यन्तं सूक्ष्मं व्यवहितं विप्रकृष्टमित्येवं जातीयकमर्थं शक्नोत्यवगमयितुं नान्यत्किञ्चनेन्द्रियम् । य एव श्रेयस्करः स एव धर्म्मशब्देनोच्यते । कथमवगम्यतां–यो हि यागमनुतिष्ठति तं धार्म्मिकमित्याचक्षते । यश्च यस्य कर्त्ता स तेन व्यपदिश्यते । यथा–पाचकः, लावक इति । तेन यः पुरुषं निःश्रेयसेन संयुनक्ति स धर्मशब्देनोच्यते । न केवलं लोके, वेदेपि "यज्ञेन यज्ञमयजन्त देवास्तानि धर्म्माणि प्रथमान्यासन् " इति यज-

तिशब्दसाध्यमेव धर्म्मं समामनन्तीति । उभयमिह चोदना लक्ष्यते—अर्थोऽनर्थश्चेति । कोर्थः—यो निःश्रेयसाय ज्योतिष्टोमादि।कोऽनर्थः—यःप्रत्यवायः"श्येनो वज्र इषुभिः" इत्येवमादि । कथं पुनरसावनर्थं हिंसा, हिंसा सा मा भूदित्यर्थग्रहणंमिति शावरभाष्यम् । एतन्मतानुसारेण लौगाक्षिभास्करेणोक्तम् । यथा—अथ को धर्म्मः, किं तस्य लक्षणमिति चेदुच्यते—यागादिरेव धर्म्मः । तल्लक्षणं तु वेदप्रतिपाद्यप्रयोजनवदर्थो धर्म्मः । प्रयोजनेऽतिव्याप्तिवारणाय प्रयोजनवदिति । भोजनादावतिव्याप्तिवारणाय वेदप्रतिपाद्येति । अनर्थफलकत्वादनर्थभूते श्येनयागादाऽवातिव्याप्तिवारणायार्थ इति संक्षेपः ॥ तार्किकाश्च—" विहितक्रियया साध्यो धर्म्मः पुंसो गुणो मतः । प्रतिषिद्धक्रियासाध्यः स गुणोऽधर्म्म उच्यते॥"इति।किञ्च—षड्विधो धर्म्मः। तथाहि—वर्णधर्म्मः १, आश्रमधर्म्मः २, वर्णाश्रमधर्म्मः ३, गुणधर्म्मः ४, निमित्तधर्म्मः ५, साधारणधर्म्मः ६ इति । नित्यं मद्यं ब्राह्मणो वर्जयेदित्यादिर्वर्णधर्म्मः १, अग्नीन्धनभैक्षचर्यादिर्ह्याश्रमधर्म्मः २, पालाशो दण्डो ब्राह्मणस्येत्यादिर्वर्णाश्रमधर्म्मः ३, शास्त्रीयाऽभिषेकादिगुणयुक्तस्य राज्ञः प्रजापालनादिर्गुणधर्मः ४, विहिताऽकरणप्रतिषिद्धसेवननिमित्तं प्रायश्चित्तमिति निमित्तधर्मः ५, " अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः । एतं सामासिकं धर्म्मं चातुवर्ण्येऽब्रवीन्मनुः ॥" इत्यादिः साधारणधर्मः ६ ।

इति ॥ ११४–१२१ ॥

## त्याज्या दुस्तटिनीति न्यायः ॥ १२२ ॥

यथा दुस्तटिनी नदी पतनभयात्त्यज्यते तत्तीरस्थैरन्यथा तत्पतनं भवत्येव, एवं दुष्टपुरुषसङ्गोऽप्यवश्यमेव त्याज्य इति ॥ १२२ ॥

## चौरापराधान्माण्डव्यनिग्रहन्यायः ॥ १२३ ॥

यथा—एवं हि पुराणकथा—कदाचित्कैश्चिद्राजदूतैश्चौरान्वेषणतत्परैस्तपस्यतो माण्डव्यर्षेः समीपस्थाँस्त्रस्ताँश्चौरान्प्राप्य माण्डव्यर्षिसमेताँस्ताँश्चौरान्बद्ध्वा राज्ञे निवेद्य तदाज्ञयर्षिसहिताश्चौराः शूल्यामारोपिताः । तत्र तेषु माण्डव्यं विज्ञाय शूल्या मोचयामास राजा प्रसादयामास च प्रणामादिभिः । स च मुनिः शूल्या मुक्तो यमलोकं गतः, पप्रच्छ च यमम्—भोः केन पापेनाहं शूल्यामारोपितस्त्वया । तच्छ्रुत्वा यम उवाच—मुने क्रीडता त्वया बाल्यावस्थायां कुशाग्रभागेन शलभो विद्धोऽत एव त्वं शूल्यामारोपितः । तच्छ्रुत्वा कोपात्मा सन्मुनिरल्पापराधान्मे महादण्डो दत्त स्त्वया—अत एव त्वं शतवर्षपर्यन्तं शूद्रो भवेति यमं शशाप । स यमो विदुरो जात इति चौरापराधान्माण्डव्यर्षेः शूल्यारोपणरूपपुराणप्रसिद्धनिग्रहोऽभूदेवं दुष्टसंङ्गासक्तानामवश्यमेव दुर्गतिर्भवतीति भावः ॥ १२३ ॥

## काकदध्युपघातकन्यायः ॥ १२४ ॥

यथा काकेभ्यो दधि रक्ष्यतामित्युक्ते काकपदं दध्युपघातकमात्रलक्षकम्, एवं यत्र तात्पर्यवशेनेतरार्थपरत्वं

तत्राऽस्य प्रवृत्तिः । तदुक्तमभियुक्तैः—"काकेभ्यो रक्ष्यतामन्नमिति बालोपदेशतः । उपघातप्रधानत्वान्न श्वादिभ्योपि रक्षति ॥" इति ॥१२४॥

## नीरक्षीरन्यायः ॥ १२५ ॥

यत्र सत्याऽसत्यविवेचनं तत्राऽस्य प्रवृत्तिः । यथा जलदुग्धे सम्मिश्रिते न प्रतीयेते, तथा तथ्यं ब्रह्म, वितथं मिथ्याभूतमज्ञानादि, ते च सम्यङ्मिलिते तादात्म्यं प्राप्तेस्तो न प्रतीयते । यथा सम्मिश्रिते नीरक्षीरे हीदं नीरमिदं क्षीरमिति पृथक्कर्तुं केऽपि पक्षिणो विना हंसं नशक्नुवन्ति, तथा चेदं तथ्यमिदमतथ्यमिति ज्ञातुं विवेकज्ञं परमहंसं विना न कोऽपि शक्नोति पंडित इति भावः । उक्तञ्च—"क्षीरं ब्रह्म जगच्च नीरमुभयं तद्योगमभ्याहतं दुर्भेदं त्वितरेतरं चिरतरं सम्यग्विभक्तीकृतम् । येनाऽशेषविशेषदोषलहरीमासेदुषीं शेमुषीं सोऽयं शीलवतां पुनाति परमो हंसो द्विजात्यग्रणीः ॥" अस्यार्थः—क्षीरं दुग्धं परमानन्दघनं ब्रह्म, जगत्पुनर्नीरमानन्दवर्जितं दुःखात्मकम्, तदुभयं योगं परस्परतादात्म्यं प्राप्तम् । पुनश्चेतरं भेत्तुं विलक्षणीकर्त्तुं दुर्घटं येन सम्यग्विभक्तीकृतं सोऽयं द्विजातीनां द्विजानामग्रणीः परमहंसः । अशेषा ये विशेषेण दोषा उत्कृष्टदोषा रागद्वेषादयस्तेषां लहरीमासेदुषीमासमन्तात्सेवितवतीं शेमुषीं शीलवतां बुद्धिं पुनाति । पक्षे, द्विजातयः पक्षिण इत्यर्थः ॥ १२५ ॥

## तिलतण्डुलन्यायः ॥ १२६ ॥

यथा तिलतण्डुलमानयेत्युक्तेरसंसृष्टानि तिलानि तण्डुलानि चानीतानि भवन्ति, संसृष्टान्यपि तिलतण्डुलानि चानीतानि भवतीन्ति, तथा प्रकृतेऽपीति ॥ १२६ ॥

## वेण्याकाशन्यायः ॥ १२७ ॥

यथा—तीर्थात्मिका वेणी द्विधा—युक्तवेणी, मुक्तवेणीति भेदात्। तत्र प्रयागे युक्तवेणी, गङ्गया सह यमुनासरस्वत्योः संगमात्। पूर्वप्रयागे तु—मुक्तवेणी, तत्र गंगया सह यमुनासरस्वत्योर्वियोगात्। उक्तञ्च केनकिद्वांगकविना—"सगरसन्ततिसन्तरणेच्छया प्रचलिता जवतो हिमपर्वतात्। इह तु मन्दमुपैति सरस्वतीयमुनयोर्विरहादिव जाह्नवी॥" इति। तत्र प्रयागे ह्यन्योन्यसंसर्गेणैकप्रवाहीभूते श्वेतश्यामरक्तवर्णे गङ्गायमुनासरस्वतीतीरे प्रतिबिम्बस्य तदवच्छिन्नस्याकाशस्य भेदलेशोपि नास्ति, तथैवमन्योन्यासक्तचित्तानां त्रिगुणाधिष्ठातृपरमेश्वराणां ब्रह्मविष्णुशिवानामन्योन्यसंसर्गेण भेदलेशोऽपि नास्तीत्यन्यत्र विस्तरः॥१२७॥

## येनोपक्रम्यते येन चोपसंह्रियते स वाक्यार्थ इति न्यायः ॥१२८॥

यथा—"उपक्रमोपसंहारावभ्यासोऽपूर्वताफलम्। अर्थवादोपपत्ती च लिङ्गं तात्पर्य्यनिर्णये॥" इत्युक्ततात्पर्यनिर्णायकषड्विधलिङ्गेष्वादिमौ प्रकरणप्रातिपाद्यस्याऽर्थस्य तदा-

ध्यन्तयोरुपपादनरूपावुपक्रमोपसंहारौ स्तः । अयं न्यायः परार्थाऽनुमाने प्रसिद्धः । तथा हि—यत्तु स्वयं धूमादग्निमनुमाय परप्रतिपत्त्यर्थं पञ्चाऽवयववाक्यं प्रयुज्यते तत्परार्थाऽनुमानम् । पञ्चाऽवयवास्तु-प्रतिज्ञाहेतूदाहरणोपनयनिगमनानीति । तत्र गिरिरग्निमानिति प्रतिज्ञा १, धूमवत्त्वादिति हेतुः २, योयो धूमवान् ससोऽग्निमान्, यथा महानसमित्युदाहरणम् ३, तथा धूमवांश्चाऽयमित्युपनयः ४, तस्मादग्निमानिति निगमनम् ५। साध्यवत्तया पक्षज्ञापकवचनं प्रतिज्ञा १, पञ्चम्यन्तं तृतीयान्तं वा लिङ्गप्रतिपादकं हेतुः २, व्याप्तिप्रतिपादकदृष्टान्तवचनमुदाहरणम् ३, पक्षधर्म्मताज्ञानमुपनयः ४, हेतुसाध्यवत्तया प्रतिपादकं वचनं निगमनमिति ५। यथाऽत्र पक्षस्य साध्यवत्तयोपक्रमस्तत्त्वेनैवोपसंहार इति स एव वाक्यार्थस्तथा प्रकृतेपीति बोध्यम् ॥ १२८ ॥

## सम्भवत्येकवाक्यत्वे वाक्यभेदो हि नेष्यत इति न्यायः ॥ १२९ ॥

यथा “ पशुना यजेत ” इत्यादौ यागे एकत्वविशिष्टपशुकरणकत्वं विधेयं न तु पशावेकत्वम्, यागे च पशुकरणकत्वमित्येवं विधेयद्वयम्, एवमन्यत्राऽपि यथा चैवं शैववैष्णवादिमतेषु दर्शितानि तत्तन्मतप्रदर्शनवाक्यानि सर्व्वाण्येवाभेदप्रतिपादकानि बोध्यानि प्रकृतन्यायत इत्यन्यत्र विस्तरः ॥ १२९ ॥

## एकवाक्यत्वापन्नानां सम्भूयैकार्थप्रतिपादकत्वमिति न्यायः ॥ १३० ॥

सम्भूय मिलित्वेतरसाचिव्येनेत्यर्थः । यथा प्रयाजाद्यङ्गजातवाक्यसम्भूतानां दर्शाऽपूर्वार्थकसाधकत्वेनैकवाक्यत्वमित्येवं विवक्ष्यते तत्राऽस्य प्रवृत्तिः । यथा चाऽनेनैकाऽद्वितीयब्रह्मरूपतया हरिहरादीनां तद्ब्रह्मत्वप्रतिपादकानि वाक्यानि प्रमाणभूतानि भवन्तीति संक्षेपः । विस्तरस्त्वन्यत्र १३०॥

## सुन्दोपसुन्दन्यायः ॥ १३१ ॥

अन्योन्यनाश्यनाशकभाववविवक्षायामयं न्यायो हि प्रवर्त्तते । यथा सुन्दोपसुन्दाख्यौ सहोदरौ दैत्यौ तिलोत्तमाख्यस्वर्वेश्यर्थं परस्परं विरोध्य नष्टाविति भारतादिषु प्रसिद्धम्, तथा ईश्वरकोटिनिविष्टानामीशत्वबोधकानि सर्वाणि वाक्यानि ह्यन्योन्यं विरोधं प्राप्य प्रकृतन्यायेन बाधितानि स्युः, न हि सर्वेषामन्योन्याभिन्नानां तच्छास्त्रोक्तं सर्वेश्वरत्वाऽद्वयत्वादिकं सम्भवतीत्यन्यत्र विस्तरः ॥१३१॥

## अपन्थानन्तु गच्छन्तं सोदरोऽपि विमुञ्चतीति न्यायः ॥ १३२ ॥

यथा 'महाजनो येन गतः स पन्थाः' इत्युक्तेर्विपरीतपन्थानमित्यर्थः । एवञ्च श्रुतिस्मृतिसदाचारबहिर्मुखजनो बन्धुभिस्त्याज्य एव।उक्तञ्च मनुना—"स साधुभिर्बहिष्कार्यो नास्तिको वेदनिन्दकः"इति । उक्तञ्चाऽनर्घराघवे—" यान्ति

न्यायप्रवृत्तस्य तिर्य्यञ्चोऽपि सहायताम् । अपन्थानं तु गच्छन्तं सोदरोपि विमुञ्चति ॥" इति ॥ १३२ ॥

**वध्यतांवध्यतां बालो नाऽनेनाऽर्थोंऽस्ति जीवता । स्वपक्षहानिकर्तृत्वाद्यः कुलाङ्गारतां गतः ॥ इति न्यायः ॥ १३३ ॥**

एवञ्च सत्सनातनपितृपैतामहादिचरितसद्धर्म्मपरिभ्रष्टः पुत्रोपि वध्य एवेति भावः ॥ १३३ ॥

**विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसाम्प्रतमिति न्यायः ॥ १३४ ॥**

अयं न्यायो हि कुमारसम्भवाख्यकाव्यस्य द्वितीयसर्गीयपञ्चपञ्चाशत्तम ५५ श्लोकेन विवृतः । यथा—"इतस्स दैत्यः प्राप्तश्रीर्नेत एवार्हति क्षयम् । विषवृक्षोपि संवर्ध्य स्वयं छेत्तुमसाम्प्रतम् ॥" इति । अस्यार्थः—यथात्मभूराह—इतो मत्त एव प्राप्तश्रीर्लब्धोदयः स दैत्यस्तारकासुर इतो मत्त एव क्षयं नाशं नार्हति । तथा ह्यन्यो वृक्षस्तावदास्ताम्, विषस्य वृक्षो विषवृक्षोऽपि संवर्द्ध्य कुतश्चित्कारणात्सम्यग्वर्द्धयित्वा स्वयं छेत्तुमसाम्प्रतमनर्हः । असाम्प्रतमित्यनेन निपातेनाभिहितत्वाद्वृक्ष इति द्वितीयान्तो न भवति, अनभिहिते कर्मणि द्वितीयाविधानात् । यथाह वामनः—" निपातेनाऽप्यभिहिते कर्म्मणि न विभक्तिः परिगणनस्य प्रायिकत्वात् "। परे तु—

अत्र साधुत्वायेष्यत इति पदाध्याहार आवश्यकः, अन्यथा क्रियार्थोपपदत्वाभावाच्छकादियोगाभावाच्च तुमुन्नुत्पत्ति-दुर्लभा स्यात् । एवञ्च तस्याऽध्याहारे इच्छार्थयोगे तुमुन्सुलभः । तथा च—विषवृक्षोपि सम्वर्द्ध्यच्छेत्तुमिष्यते यत्त-दसाम्प्रतमन्याय्यमित्यर्थः सम्पद्यते । एवञ्चाध्याहृतति-ङभिधानान्नाऽत्र द्वितीयाप्रसक्तिरित्यनुदाहरणमेवैतत॥१३४॥

## पतन्तमनुधावतोपि गत इति न्यायः ॥ १३५ ॥

यथा पतन्तं कथञ्चिज्जालान्निःसृत्योड्डीय गच्छन्तं पक्षि-णमनुधावतो जीवान्तकस्य बद्धोपि पक्षी गतः, तथा प्रकृ-तेऽपि । किञ्च—प्रकृतन्यायेन हरिहरादेरेकब्रह्मरूपत्वं चेत्तर्हि तत्तन्माहात्म्यपरपुराणादिष्वितरनिन्दा न स्याद्दृश्यते च सा, तथा च तदन्यथानुपपत्त्या साम्यमपि दुर्लभं ह्येकस्य का क-थेति वादिनश्शङ्का। एतत्प्रतिवाक्यादिकन्तु विस्तरभिया नेह प्रपञ्चितं,किञ्चित्तदग्रे वक्ष्यत्यपि न्यायद्वयाभ्यामिति॥१३५॥

## श्यालशुनकन्यायः ॥ १३६ ॥

यथेत्थं लौकिकी गाथा—कश्चित्कुतर्की स्वसद्मस्थे शुनि श्यालनामकसङ्केतं कृत्वा स्वस्त्रीकोपोत्पादनाय तं गाली ददौ, सा च तं भ्रातरं मत्वाऽतिकोपपरीतात्मतयाऽतिदुः-खिता बभूव । तथा च यथा शुनि भ्रातृताभ्रान्तिमत्या भार्यायाः कोपनाय भर्त्रा श्वनिन्दा क्रियते, तथाऽत्यन्ता-भिन्नेऽपि तत्तद्विग्रहावच्छिन्ने परात्मनि भेदभ्रमवतां कोपो-त्पादनाय शास्त्रेण तदिष्टविग्रहावच्छिन्ने परात्मनि भेदभ्रम-

वतां निन्दाऽव्याजेनाऽन्यविग्रहावच्छिन्ने स्तुतिः क्रियते, अथ वा कार्यब्रह्मणि विराडादौ विष्णवादिनामसंङ्केतं कृत्वा शास्त्रेण तन्न्यूनताद्युक्तया शिवादिस्तुतिः क्रियत इति भावः ॥ १३६ ॥

## नहि निन्दानिन्द्यं निन्दितुं प्रवर्ततेऽपि तु विधेयं स्तोतुमिति न्यायः ॥ १३७ ॥

यथा—तत्तद्विग्रहावच्छिन्नेशध्यानादिस्तुतये तदन्यविग्रहावच्छिन्नेशापकर्षवर्णनम्, केवलायां निन्दायां प्रयोजनाभावादुभयपरत्वे वाक्यभेदप्रसङ्गाच्च। अक्षरार्थस्तु स्पष्टः। अयमभिप्रायः-निन्दार्थवादस्य तदितरत्र प्राशस्त्यविधानार्थमेव प्रवृत्तिर्न तु तस्य निन्दार्थं, निन्दायां प्रयोजनाभाव इति । एवं मीमांसायां लोके च प्रसिद्धमुदाहरणान्तरमन्यत्र ज्ञेयमिति ॥ १३७ ॥

## सर्वशाखाप्रत्ययमेकं कर्म्मेति न्यायः ॥१३८॥

यथा—सर्वशाखाभ्यः प्रतीयत इति सर्वशाखाप्रत्ययमिति। यथा—नानावेदशाखाविहितमप्यग्निहोत्रं न भिद्यत इति स्थितम्। केचित्—"उदिते जुहोति" इति श्रुतिमाश्रित्योदितेऽर्के होमं कुर्वन्तीति । केचित्—"अनुदिते जुहोति" इति श्रुतिमाश्रित्यानुदितेऽर्के जुह्वत्यत्र केवलकालभेदोऽस्ति, वस्तुतः—कर्म्मैकमेवैवं प्रकृतेऽपीत्यन्यत्र विस्तरः ॥ १३८ ॥

## यत्रोभयोः समो दोषः परिहारोऽपि वा समः। नैकः पर्य्यनुयोक्तव्यस्तादृगर्थविचारणे ॥ इति न्यायः ॥ १३९ ॥

अयं सांख्यप्रवचनभाष्यधृतः । यत्र वादिप्रतिवादिभ्यां न्यस्तपक्षयोस्तुल्यदोषो, न तत्रैकः पर्यनुयोज्यः, स्वपक्षेऽपि तद्दोषसत्त्वात्, इत्येवं यत्र विवक्षा तत्राऽस्य प्रवृत्तिरिति ॥ १३९ ॥

## यत्रोभयोस्समो दोषो न तत्रैकोऽनुयोज्य इति न्यायः ॥ १४० ॥

अयम्पूर्व्वन्यायमूलक इति ॥ १४० ॥

## मारणाय गृहीतोऽङ्गच्छेदं स्वीकरोतीति न्यायः ॥ १४१ ॥

स्पष्टः ॥ १४१ ॥

## मरणाद्वरं व्याधिरिति न्यायः ॥ १४२ ॥

स्पष्टः ॥ १४२ ॥

## उपवासाद्वरं भिक्षेति न्यायः ॥१४३॥

अत्र वरमिति सामान्ये नपुंसकम् । यथोपवासाद्भिक्षा श्रेष्ठाऽस्ति, भिक्षायाः क्लेशजनकत्वेऽपि ह्युपवासस्याऽधिकदुःखप्रदस्याऽपेक्षयेष्टत्वेन यथा वरत्वम्, तथा क्लेशदायकतारतम्येन बहुदुःखदायकाऽपेक्षया स्वल्पदुःखदायकस्य वरत्वं यत्रोपदिश्यते तत्राऽयं प्रवर्त्तते । तथा च-येषां पामराणां तत्त्वमस्यादिमहावाक्यजन्याऽभेदज्ञानं कुतश्चित्प्रातिबन्धवशाद्भूयोभूयः श्रूयमाणमपि न बुद्धिमारोहति, तैः प्रकृतन्यायेन पामरव्यवहृतेर्वरं कर्म्माद्यनुष्ठानं, ततोऽपि सगुणोपा-

सनं कार्य्यमेव। ततः शुद्धान्तःकरणे जाते भवत्येव ज्ञान-मित्याद्युक्तं पञ्चदशीग्रन्थे—"उपवासाद्यथा भिक्षा वरं ध्यानं तथाऽन्यतः" इत्यादि ॥ १४३ ॥

### मेघोदये शालिसमृद्धौ कोद्रवाऽ( न )-शनमिति न्यायः ॥ १४४ ॥

यथा मेघोदये वृष्टौ सत्यां शालिसमृद्धौ व्रीहिसम्पत्त्या कोद्रवःकुत्सितधान्यविशेषस्तस्य भक्षणं त्यज्यते, तथा ज्ञानोदये कर्म्मादिकं तुच्छमेव। केचित्—मेघोदय इति पदं विहाय शालिसमृद्धौ कोद्रवाऽशनमिति न्यायस्वरूपं वदन्ति। यथा—शालिरुत्तमधान्यविशेषः, कोद्रव इत्यधमधान्यविशेषः। उत्तमवस्तुसद्भावे यत्राऽधमवस्तुसेवनं तत्राऽस्य प्रवृत्तिरिति ॥ १४४ ॥

### यादृशी शीतला देवी तादृशं खरवाहन-मिति न्यायः ॥ १४५ ॥

अयं तुल्यस्वरूपविवक्षायामवतरतीति ॥ १४५ ॥

### यादृशो यक्षस्तादृशो बलिरिति न्यायः ॥१४६॥

तुल्यरूपोपहारविवक्षायामस्य प्रवृत्तिरिति ॥ १४६ ॥

### यादृशं मुखं तादृशी चपेटिकेति न्यायः॥१४७॥

तुल्यरूपपरिहारविवक्षायामस्याऽवतार इति॥ १४७ ॥

### एकाकिनी प्रतिज्ञा हि प्रतिज्ञातं न साधये-दिति न्यायः ॥ १४८ ॥

## नहि प्रतिज्ञामात्रेणाऽर्थसिद्धिरिति न्यायः १४९॥

यथा–प्रतिज्ञामात्रकरणेन प्रतिज्ञातोऽर्थो न सिद्ध्यति, किन्तु प्रयासान्तरेणेति भावः। अनयोरर्थैक्येऽपि स्वरूपभेदमाश्रित्य भेदेन निर्देश इति बोध्यम् ॥ १४८ ॥ १४९ ॥

## कूपखानकन्यायः ॥ १५० ॥

यथा कूपखानकेन पतितं पङ्कादि कूपान्निस्सृतेनाऽम्भसा प्रक्षाल्यते, तथा तत्तद्विग्रहावच्छिन्नेशभेदबुद्धिजो दोषस्तदुपासनाजन्यसुकृतमहिम्नोत्पन्नेनाद्वैतबोधेन समूलं निवर्त्यत इति ज्ञेयम्। महाभाष्ये तु–किम्पुनश्शब्दस्य ज्ञाने धर्म्मः, आहो स्वित्प्रयोग इति बहुधा मीमांसामुद्भाव्य पुनस्तुष्यतु दुर्जनन्यायेनापशब्दज्ञानस्य विपरीतत्वमात्रेणाऽधर्म्मसाधनत्वमभ्युगम्यापि समाधानान्तरमुक्तम्। तथाहि महाभाष्यम्–"अथ वा कूपखानकवदेतद्भविष्यति, तद्यथा–कूपखानकः कूपं खनन् यद्यपि मृदा पांशुभिश्चावकीर्णो भवति, सोऽप्सु सञ्जातासु तत एव तद्गुणमासादयति, येन स च दोषो निर्हण्यते भूयसा चाऽभ्युदयेन योगो भवति। एवमिहापि यद्यपशब्दज्ञानेऽधर्म्मस्तथापि यस्त्वसौ शब्दज्ञाने धर्म्मस्तेन स च दोषो निर्घानिष्यते, भूयसाऽभ्युदयेन योगो भविष्यति" इत्युक्तं पस्पशायामिति ॥ १५० ॥

## निम्नगाप्रवाहन्यायः ॥ १५१ ॥

यथा नदीप्रवाहपतिताः कीटाद्या आवर्त्तादावर्तान्तरमाशु व्रजन्तः शर्म्म न लभन्ते, तथा जन्मतो जन्म

व्रजन्तो जीवाः स्वकर्म्मभ्रान्ताः सुखं नैव लभन्ते । उक्तञ्च-"कुर्व्वते कर्म्म भोगाय कर्म्म कर्तुञ्च भुञ्जते । नद्यां कीटा इवावर्त्तादावर्त्तान्तरमाशु ते ॥ व्रजंतो जन्मनो जन्म लभंते नैव निर्वृतिम् । सत्कर्म्मपरिपाकान्ते करुणानिधिनोद्धृताः ॥ प्राप्य तीरतरुच्छायां विश्राम्यन्ति यथासुखम्" अनयोरर्थः-कुर्व्वत इति-भोगाय सुखाद्यनुभवाय मनुष्यादिशरीराण्यधिष्ठाय कर्म्म तत्तच्छरीरोचितानि कर्म्माणि कुर्वते । जातावेकवचनम् । पुनश्च कर्म्म कर्त्तुं देवादिशरीरैस्तत्तत्फलं भुञ्जते च, फलानुभवाभावे तत्तत्सजातीयेच्छानुपपत्त्या तत्तत्साधनाऽनुष्ठानानुपपत्तेः । एवं वर्त्तमानास्ते जीवा नदीप्रवाहपतिताः कीटा आवर्तादावर्त्तान्तरमाशु व्रजन्तो यथा निर्वृतिं सुखं न लभन्ते, एवमाशु जन्मनो जन्म व्रजंतस्सुखं नैव लभन्त इति । सत्कर्म्मेति-ते कीटास्सत्कर्म्मपरिपाकात्पूर्वोपार्ज्जितपुण्यकर्म्मपरिपाकात्कृपालुना केनचित्पुरुषविशेषेणोद्धृता नदीप्रवाहाद्बहिर्न्निस्सारितास्सन्तस्तीरतरुच्छायां प्राप्य सुखं यथा भवति तथा विश्राम्यन्तीति ॥ किञ्च-यथा नदीप्रवाहप्रवाहिताः कीटाद्या अन्यत्रान्यत्र नीताश्च क्लिश्यन्ति,तथा परमेश्वरस्याऽनेकमूर्त्तिध्यानादेर्युगपत्कर्त्तुमशक्यत्वात्कालभेदेनाऽनुष्ठाने चित्तस्थैर्य्याऽसिद्धेरन्यत्र प्रवृत्तस्य जन्मान्तरीयध्यानरूपचित्तवृत्तिप्रवाहप्रवाहितस्याऽन्यत्राऽऽनयनेतिक्लेशो भवतीति । यथाह श्रीहरिः-"पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोऽपि सः" इति ॥ १५१ ॥

## घट्टकुटीप्रभातन्यायः ॥ १५२ ॥

घट्टो नदीतीरादिस्थानं, 'घाट' इति भाषायां प्रसिद्ध-स्तत्र कुटी वणिगादिभ्यो राजग्राह्यभागग्राहकराजभृत्य-निवासार्थमल्पस्थानविशेषः । यथा—घट्टकुटीस्थेभ्यः करग्रा-हिभ्यो भीत्या रात्रौ पलायितानां पथित्यजां वणिजां दूरे गत्वापि यथा भ्रान्तिवशात्तत्र घट्टकुट्यामेव प्रभातोदयस्तथा प्रकृतेऽपि ॥ १५२ ॥

## वरघाताय कन्यावरणमिति न्यायः१५३॥

## न हि वरघाताय कन्यामुद्वाहयन्तीति न्यायः ॥ १५४ ॥

द्वाविमौ समानविषयकौ समानार्थकौ स्पष्टौ ह्यनिष्टा-न्तरपातादिसम्भावनायामभीष्टहेत्वपि वस्तु न वरणीयमि-त्येवं तात्पर्य्ये प्रवर्तेते ॥ १५३ ॥ १५४ ॥

## नष्टाऽश्वदग्धरथन्यायः ॥ १५५ ॥

यथा द्वौ रथिनौ कश्चिद्ग्रामं प्रविश्य रथाभ्यामवतीर्य्या-श्वाँश्च ताभ्यां मोचयित्वा स्वाभीष्टखट्वादौ निविष्टौ । ततो दैवेनाऽग्निना दंदह्यमाने ग्रामे तयोरेकः पश्चादश्वान्निस्सार-यिष्यामीति धिया रथमादौ निस्सारितवानपरस्त्वश्वान् । तावता तस्मिन्स्थले दग्धे ह्येकस्याऽश्वा नष्टा द्वितीयस्य रथो दग्धः । तौ च यथाऽन्योऽन्याकांक्षया ह्येकं रथं कृत्वा स्वेष्टदेशं प्रापतुः, तथार्थवादविधिवाक्ये चेतरेतराकाङ्क्ष-

यैकवाक्यतां प्राप्य प्रवृत्त्यादि जनयत इति सङ्क्षेपः। "स्थानेऽन्तरतमः" १।१।५०। इति सूत्रमहाभाष्येप्युक्तोऽयं न्यायः। तद्यथा—"सम्प्रयोगो वा नष्टाऽश्वदग्धरथवत्। अथ वा नष्टाश्वदग्धरथवत्सह सम्प्रयोगो भवति। तद्यथा—तवाऽश्वो नष्टो ममापि रथो दग्ध उभौ सम्प्रयुज्यावहै" इति ॥ १५५ ॥

## सविशेषणे हि वर्तमानौ विधिनिषेधौ सति विशेषबाधे विशेषणमुपसंक्रामत इति न्यायः ॥ १५६ ॥

यथा घटाकाशमानय न मण्याकाशमित्यानयनविषयौ विधिनिषेधौ विशेष्याकाशे बाधाद्घटादिरूपं विशेषणमुपसंक्रामतस्तथा प्रकृतेपीति ॥ १५६ ॥

## अहिकुण्डलन्यायः ॥ १५७ ॥

यथा एकस्याऽहेरहित्वेनाऽभेदस्तस्यैव कुण्डलाऽवस्थस्य प्रांशुत्वाऽवस्थाद्भेदश्च तात्त्विकः, एवं ब्रह्मणोपि चैतन्यरूपेणाऽभेदो जीवेश्वरत्वादिरूपेण भेदश्च तात्त्विक इति॥१५७॥

## स्वप्रकाशाश्रयन्यायः ॥ १५८ ॥

यथा रवेस्तदाश्रितप्रभारूपद्रव्यस्य च सत्यपि भेदे तेजस्स्वरूपसाजात्येनाऽभेदस्तथा प्रकृतेऽपि ॥ १५८ ॥

## गुडजिह्विकान्यायः ॥ १५९ ॥

यथा कटुताभीत्या निम्बादिकटुद्रव्यपानमकुर्वाणस्य माणवकस्य जिह्वायां गुडलेपनं कृत्वा निम्बादि कटुद्रव्यं

पाययन्ति पित्रादयः, तथाऽर्थवादवाक्यानि कष्टे कर्म्मण्य-प्रवर्तमानं पुरुषं स्वर्गाद्यक्षय्यादिकं श्रावयित्वा तस्मिन्प्रव-र्त्तयन्तीति संक्षेपः । अत्र गुड इति मधुरद्रव्यमात्रस्योपल-क्षणम्। फलश्रुतिरपि रोचनार्था । तदुक्तमभियुक्तैः—"वेदोक्त-मेव कुर्वाणो निस्सङ्गोऽर्थितुमीश्वरः । नैष्कर्म्याल्लभते सिद्धिं रोचनार्था फलश्रुतिः ॥ फलश्रुतिरियं नॄणां नाश्रेयो रोचनं परम् । श्रियो विवक्षया प्रोक्ता यथा भैषज्यरोचनम् ॥"। अस्य तात्पर्य्यमुक्तं तत्रैव—"पिब निम्बं प्रदास्यामि खलु खण्ड-कलड्डुकान् । पित्रैवमुक्तः पिबति तिक्तमप्यति बालकः ॥"। तत्र यथा निम्बादिपानस्य न खलु खण्डादिलाभ एव प्रयोजनं किन्त्वारोग्यम्, तथा वेदोऽप्यवान्तरफलैः प्रलो-भयन्मोक्षायैव कर्म्माणि विधत्ते। उक्तश्चाऽनर्घराघवटीकाका-रुचिपतिना—'उभयेऽप्येतेऽभिमतवस्तुपुरस्कारेण गुडजिह्वि-कायां रसास्वादसुखं मुखे दत्त्वा कटुकौषधपानादाविव प्रवर्तयितव्याः'। यदाह—"स्वादुकाव्यरसोन्मिश्रं शास्त्रम-प्युपयुञ्जते । प्रथमं लीढमधवः पिबन्ति कटुकौषधम् ॥" इति ॥ १५९ ॥

## नहि दृष्टेऽनुपपन्नमिति न्यायः ॥ १६० ॥

नहि प्रत्यक्षविषये प्रमाणान्तरान्वेषणमिति यत्र वि-वक्षा तत्रास्य प्रवृत्तिः । स्तथाहि-प्रत्यक्षस्य सर्वप्रमाणबाध-कत्वात्, अनुपपत्तेरर्थापत्तिरूपतया व्यतिरेकानुमितिरूप-तया वा प्रत्यक्षेण बाध्यत्वात् प्रत्यक्षविषये विरोधिन्या नुपपत्तेर्न सम्भव इति ॥ १६० ॥

## नहि करकङ्कणदर्शनायाऽऽदर्शापेक्षेति न्यायः ॥ १६१ ॥

यथा प्रत्यक्षयोग्यं करे स्थितं कङ्कणं प्रत्यक्षेणैव गृह्यते न तद्दर्शनायाऽऽदर्शापेक्षा ह्येवं प्रत्यक्षसामग्रीसत्त्वे तयैव पदार्थप्रतीतिः, नाऽनुमित्यादिसामग्र्यपेक्षेति विवक्षायामस्य प्रवृत्तिरिति। न हि करिणि दृष्टे चीत्कारेण तमनुमिमतेऽनुमातार इति वाचस्पत्युक्तमेतन्न्यायमूलकमेव। अनुमित्साऽयान्तु तदपेक्षा,प्रत्यक्षपरिकलितमप्यर्थमनुमानेन बुभुत्सन्ते तर्करसिका इति वाचस्पत्युक्तेरिति ॥१६१॥

## प्रत्यक्षे किमनुमानमिति न्यायः ॥ १६२ ॥

प्रत्यक्षानुमानयोश्चाविलम्बितप्रतीतिरूपत्वात्प्रत्यक्षं बलीय इति। "निपातैर्य्यद्यदिहन्तकुविन्नेच्चेच्चण्कच्चिद्यत्रयुक्तम्" ८। १। ३०। इति सूत्रस्थकैयटोक्तिरप्यनुकूलाऽस्तीति ॥ १६२ ॥

## भक्षितेपि लशुने न व्याधिशान्तिरिति न्यायः ॥ १६३ ॥

यत्र कृतेपि चाऽनिष्टे कर्म्मणि नाऽभीष्टप्राप्तिस्तत्राऽस्य प्रवृत्तिरिति स्पष्टा ॥ १६३ ॥

## रज्जुसर्प्पन्यायः ॥ १६४ ॥

यथा रज्जोरज्ञानतायास्सर्प्पात्मना भानं,ज्ञातायास्तु स्वरू

पेण, तथा ब्रह्मणोऽनवबुद्धस्य सप्रपञ्चत्वेन, बुद्धस्य च निष्प्रपंचत्वेन भानं न मानांतरविरुद्धमित्यर्थः ॥ १६४ ॥

## आभणकन्यायः ॥ १६५ ॥

आभ्रणकं लौकिकोक्तिर्ल्लोकप्रसिद्धकथनमिति यावत्। यथा वराटकाऽन्वेषणे प्रवृत्तश्चिंतामणिं लब्धवानिति वासिष्ठोक्तिरिति ॥ १६५ ॥

## अन्ते या मतिस्सा गतिरिति न्यायः ॥ १६६ ॥

यथा—"यंयं वापि स्मरन्भावं त्यजत्यन्ते कलेवरम्। तन्तमेवैति कौन्तेय सदा तद्भावभावितः ॥" इति श्रीभगवद्वाक्यानकूलोऽयं न्याय इति ॥ १६६ ॥

## अज्ञा(जा)तपुत्रनामोत्कीर्त्तनन्यायः॥१६७॥

भाविसंज्ञया निर्देशोऽस्य प्रवृत्तिरिति। स्पष्टः ॥ १६७ ॥

## ब्राह्मणश्रमणन्यायः ॥ १६८ ॥

ब्राह्मणलक्षणं हि— "नञ्" २ । २ । ६ । इति सूत्रस्य। "तेन तुल्यं क्रिया चेद्वतिः" ५ । १ । ११५ । इति सूत्रस्य च महाभाष्ये प्रोक्तम्। तथाहि—"तपः श्रुतं च योनिश्चेत्येतद्ब्राह्मणकारकम् । तपःश्रुताभ्यां यो हीनो जातिब्राह्मण एव सः।"। अस्याऽर्थः कैयटाचार्य्यैरुक्तः। तथाहि—तप इति तपश्चान्द्रायणादि कर्म, श्रुतं वेदवेदाङ्गादीनामध्ययनम्, योनिर्ब्राह्मण्यां ब्राह्मणाज्जन्म। ब्राह्मणकारकमिति शेषषष्ठीसमासः । ब्राह्मण-

व्यपदेशस्यैतत्कारकम्, निमित्तमित्यर्थः । गुणसमुदायाभावेऽपि तदेकदेशे प्रयोगदर्शनादाह—तपः—श्रुताभ्यामिति । "पुंयोगादाख्यायाम्" ४ । १ । ४८ । इत्यत्रापि "त्रीणि यस्याऽवदातानि विद्या योनिश्च कर्म्म च । एतच्छिवे विजानीहि ब्राह्मणाऽग्र्यस्य लक्षणम् ॥" इति । एतेन केवलगुणकर्म्मपरां ब्राह्मणादिवर्णव्यवस्थां वदन्तः परास्ता इति । "चातुर्वर्ण्यं मया सृष्टं गुणकर्म्मविभागशः" इति भगवद्गीतावाक्यस्य त्वयमर्थः—मया परमात्मना चतुर्णां वर्णानां हिताय यत्तच्चातुर्व्वर्ण्यम्, हितार्थे ष्यञ्प्रत्ययः । गुणो द्रव्यादि कर्म्माग्निहोत्रादि, अनयोस्समाहारो गुणकर्म्म, समाहारत्वादेकवचनम् विभागशः साधारणाऽसाधारणभेदेन । सृष्टं रचितम् । यथा—जपदानादीनि कर्म्माणि तु चतुर्णामेव वर्णानां साधारणानि । वेदाऽध्ययनसंध्योपासनादीनि तु केवलं द्विजानामेवाऽसाधारणानि, शूद्रस्य तत्राऽनाधिकारात् । द्विजेष्वपि बार्हस्पत्ये कर्म्मणि केवलं ब्राह्मणस्यैवाऽधिकारो न तु क्षत्रियवैश्ययोरिति । इत्थं राजसूयादियज्ञेषु केवलं क्षत्रियाणामेवाऽधिकारो नाऽन्येषाम् । तथैव वैश्यस्तोमादिषु वैश्यमंतरा न कस्याप्यधिकारः । त्रैवर्णिकसेवायां तु शूद्रस्यैवाधिकारोऽस्ति । इत्थञ्चाऽग्निहोत्रादिकर्म्मभेदेन तदङ्गीभूतद्रव्यदेवतादिगुणानामपि सुतरां भेद एवेति भावः । अत

---

१—अत्र च 'चतुर्वर्णादीनां स्वार्थ उपसंख्यानम्' इति स्वार्थष्यञन्तादितार्थकयति साध्वित्याशयो भाति । अन्यच्चात्र सुधीभिरूहनीयमिति ।

एव न महाभाष्यवाक्यविरोधो भगवद्गीतया सहेत्यलम्बहुना। श्रमणो बौद्धयतिः। यथा श्रमणस्याऽशास्त्रीयविधिना त्यक्तशिखासूत्रकक्षादेस्त्यक्तनित्यादिकर्म्मणश्चेदानीं ब्राह्मणत्वाभावेपि भूतपूर्व्वेण ब्राह्मणत्वेन निर्देशः, तथा शिवसारूप्यप्राप्तानामपि प्राक्तनया मानवसंज्ञया निर्देश इत्युदाहरणसङ्गतिरिति ॥ १६८ ॥

## सूत्रशाटिकान्यायः ॥ १६९ ॥

अयं हि–" इग्यणस्सम्प्रसारणम् " १।१।४५। इति सूत्रस्थमहाभाष्येऽभिहितः। तद्यथा–"एवं तर्हि भाविनीयं सञ्ज्ञा विज्ञास्यते। तद्यथा–कश्चित्कञ्चित्तन्तुवायमाह–अस्य सूत्रस्य शाटकं वयेति। स पश्यति–यदि शाटको न वातव्यः। अथ वातव्यो न शाटकः। शाटको वातव्यश्चेति विप्रतिषिद्धम्। भाविनी खल्वस्य सञ्ज्ञाऽभिप्रेता। स मन्ये वातव्यो यस्मिन्नुते शाटक इत्येतद्भवतीति। एवमिहापि स यणः स्थाने यस्याभिनिर्वृत्तस्य सम्प्रसारणमित्येषा सञ्ज्ञा भविष्यति"इति। एवं हि यत्र भाविसञ्ज्ञया निर्देशस्तत्राऽयं प्रवर्त्तते। यथोक्तरीत्या सूत्राऽवस्थायां भाविन्या सञ्ज्ञया निर्देशस्तथा यथान्यरुद्धो वसेत्काश्यामित्यत्र दार्ष्टान्तिकेऽपि बोध्यम् ॥ १६९ ॥

## जलानयनन्यायः ॥ १७० ॥

यथा जलमानीयतामित्युक्तेरचोदितमपि पात्रानयनं जलानयनेऽन्तर्भवतीति तथा प्रकृतेऽपि ॥ १७० ॥

## अग्न्यानयनन्यायः ॥ १७१ ॥

अयं पूर्वसदृशः ॥ १७१ ॥

## दण्डाऽपूपन्यायः ॥ १७२ ॥

यथा दण्डविद्धाऽपूपानां दण्डानयनादवश्यमानयनं, तथा युगनद्धवाहित्वादीति केचिदाहुः । वस्तुतस्तु-एकत्र स्थापितयोर्दण्डापूपयोर्य्यदापूपो नास्ति दण्डस्तु मूषकैर्भक्षितो वर्तते । तत्र यथा मूषकाणां दुष्करदण्डभक्षणासिद्धौ तत्सहचरिताऽपूपभक्षणमपि सिद्ध्यतीति तथा-"मणिमुक्ताप्रवालानां सर्वस्यैव पिता प्रभुः । स्थावरस्य तु सर्वस्य न पिता न पितामहः॥" इति स्मृतौस्थावरग्रहणान्निबन्धद्विपदयोर्दण्डापूपन्यायाद्दानादिनिषेधसिद्धिरीति ॥ १७२ ॥

## प्रदीपन्यायः ॥ १७३ ॥

अयं न्यायः यत्राऽन्योन्यविरुद्धानामपि संभूयैककार्य्यकारित्वं तत्र सञ्चरतीति । यथा हि वर्तितैले चाग्निविरोधिनी, वर्तितैलाऽग्नयः सर्व्वे परस्परं विरोधिनः संभूयैकं प्रकाशलक्षणं कार्य्यं कुर्वन्ति, तथा सत्त्वरजस्तमांसि परस्परं विरुद्धान्यपि सम्भूयैकं देहादिकं प्रवृत्त्यादिकं च कार्य्यं जनयन्तीति ॥ १७३ ॥

## कष्टं कर्मेति न्यायः ॥ १७४ ॥

कर्म्मणो दुःखहेतुत्वं ह्यनुभवसिद्धमिति भावः।"कर्म्मणो ह्यपि बोद्धव्यं बोद्धव्यं च विकर्म्मणः।अकर्म्मणश्च बोद्धव्यं गहना कर्म्मणो गतिः॥"इति भगवद्गीतानुकूलोयं न्यायः१७४॥

## भामतीन्यायः ॥ १७५ ॥

यथा एकेनैव नाम्ना भामती स्त्री रूपयौवनादिसम्पन्ना धवं सुखाकरोति, दुःखाकरोति च सपत्नीः, मोहयति च नरान्तरम्, तथा प्रकृतेपि ॥ १७५ ।'

## वह्निन्यायः ॥ १७६ ॥

यथा ह्येकस्याग्नेर्दाहकत्वं पाचकत्वं प्रकाशकत्वम्, तथा प्रकृतेपि ॥ १७६ ॥

## कूर्म्माङ्गन्यायः ॥ १७७ ॥

यथा कूर्म्मदेहे तदिच्छया तदङ्गानि निस्सरन्ति लीयन्ते च तत्रैव, एवं यस्येच्छावशात्स्वोपाध्यज्ञानकार्य्यजातस्य स्वोपाधौ सङ्कोचविकाशकारित्वमेवं विवक्षाविषयेस्य प्रवृत्तिः । "यथा संहरते चायं कूर्म्मोऽङ्गानीव सर्व्वशः" इति भगवद्गीता ॥ १७७ ॥

## भ्वादिन्यायः ॥ १७८ ॥

यथा–भूश्च भूश्च भुवौ, आदिश्च आदिश्च आदी, भुवौ आदी यस्य स भ्वादिः । अत्रैको भूशब्दः स्वरूपपरो द्वितीयः क्रियापरः । एक आदिशब्दो व्यवस्थावाची द्वितीयः प्रकारवाची । उक्तश्च–"सामीप्ये च व्यवस्थायां प्रकारेऽवयवे तथा । चतुर्ष्वर्थेषु विद्वांस आदिशब्दं प्रचक्षते" । उक्तश्च–"भूवादयो धातवः" १ । ३ । १ । इति सूत्रमहाभाष्ये–"अयमादिशब्दोऽ–

स्त्येव व्यवस्थायां वर्त्तते । तद्यथा–देवदत्तादीन्समुपविष्टानाह देवदत्तादय आनीयन्तामिति, त उत्थाप्यानीयन्ते । अस्ति प्रकारे वर्त्तते । तद्यथा–देवदत्तादय आढ्या अभिरूपा दर्शनीयाः पक्षवन्तः । देवदत्तप्रकारा इति गम्यते ।" यथा 'भू–सत्तायाम्' इत्यादिधातुर्हि निजनानार्थोपसर्गप्रत्ययरूपोपाधिभेदेन नानात्वं भजति, तद्यथा–भवतीत्यत्र "सत्ताया मंगले वृद्धौ निवासे व्याप्तिसम्पदोः। अभिव्याप्तौ च शक्तौ च प्रादूर्भावे गतौ च भूः॥" इत्युक्तार्थभेदेन प्रभावानुभावपरीभवपरिभवेत्यादावुपसर्गभेदेन भवनं भूयते भवितेत्यादौ प्रत्ययभेदेन चार्थभेदः प्रतीयते, तथैकमेव ब्रह्म उपाधिभेदेन नानेवावभासत इति ॥ १७८ ॥

## अन्धपङ्गुन्यायः ॥ १७९ ॥

यथा कश्चिच्चक्षुष्मान्पुमान्पङ्गुरन्यमन्धनरमाश्रित्य प्रवर्त्तयति किञ्चित्फलमुद्दिश्य, तथा चेतनः पुरुषः स्वयमप्रवर्त्तमानः प्रवत्तिशक्तिमदचेतनं प्रधानं प्रवर्त्तयतीति साङ्ख्याः उक्तञ्च–"पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य । पङ्ग्वन्धवदुभयोरपि संयोगस्तत्कृतस्सर्ग इति॥:"॥१७९॥

## लोहचुम्बकन्यायः ॥ १८० ॥

यथा चुम्बकमणिर्न्निष्क्रियोऽपि सन्निधिमात्रेण स्वयमप्रवर्त्तमानोऽपि लोहमाकृष्य प्रवर्त्तयति, तत्क्रियाहेतुश्च भवति, तथा पुरुषः प्रधानं प्रवर्त्तयतीति साङ्ख्याः । अयं न्यायो ब्रह्मवादिमतेऽपि प्रवर्त्तते। तथा हि–ननु परमात्मनो

निरवयवस्य निष्क्रियस्य कर्त्तृत्वकारयितृत्वयोरसम्भवे "सर्वाधिपत्यं कुरुते महात्मा, एष एव साधु कर्म्म कारयति, एष त आत्मान्तर्याम्यमृतः" इत्यादिश्रुतीनामात्मनः कर्त्तृत्वकारयितृत्वप्रतिपादिकानामप्रामाण्यं स्यादिति चेन्न, सन्निधिमात्रेणात्मनस्तथात्वसम्भवात्। यथा सूर्य्यसान्निध्यात्तमोनिवृत्तौ सत्यां तन्निवृत्तिं सूर्य्यः करोतीत्युपचर्य्यते, यथा च चुम्बकसान्निध्यादयसि, चलति सति तच्चलनं चुम्बकमयश्चालयतीति चुम्बके उपचर्य्यते, तथात्मसान्निध्यात्प्रकृतौ विजृम्भमाणायां तद्विजृम्भणं सर्वाधिपत्यं परमात्मन्युपचर्य्यतेऽविकारिण्येव, तथैवात्मसान्निध्याद्बुद्ध्यादेः प्रवृत्तौ सत्यां बुद्ध्यादीनात्मा प्रवर्त्तयतीति तत्प्रवृत्तिरात्मन्यविक्रिय एवोपचर्य्यते "परमात्मा करोति कारयतीति ध्यायतीव लेलायतीव" इति श्रुतेः। आत्मन एवंविधकर्त्तृत्वकारयितृत्वयोस्सम्भवात्। तमिममर्थमादाय प्राणिनामास्वातन्त्र्यसिद्ध्यै परमात्मनः कर्त्तृत्वं कारयितृत्वञ्च श्रुतयो वदन्ति। अनयोक्तरीत्या परमात्मनः सृष्ट्यादिक्रियाप्रतिपादिकानामेतासाञ्च श्रुतीनां प्रामाण्यमभ्युपगन्तव्यम्। अन्यथा "निष्कलं निष्क्रियं शान्तम्" इति, "न तदश्नाति किञ्चन। न तदश्नाति कश्चन" इत्यादिश्रुतीनामात्मनो निर्विकारत्वप्रतिपादिकानां व्याकोपस्स्यात्। यत एवं परमात्मनो विक्रियत्वं बहुश्रुतिप्रमाणकम्, अत आत्मा किञ्चिन्न करोति न कारयतीति सिद्धम् ॥ १८० ॥

## तुष्यतुदुर्जनन्यायः ॥ १८१ ॥

स्पष्टः। यत्र प्रतिवाद्युक्तपक्षं दुष्टमपि वादिना प्रौढवादेनाङ्गीकृत्वापि दूषणान्तरं दीयतेतत्रास्य प्रवृत्तिः ॥१८१॥

## युगपदेव विशेष्ये विशेषणं तत्रैव च विशेषणान्तरमिति न्यायः ॥ १८२ ॥

यथा-"तरति शोकमात्मविद्" इत्यादौ प्राचीनतार्किकमतमाश्रित्याऽखिलपदार्थस्मरणात्प्रकृतन्यायेन सर्वपदार्थानामन्योन्यं क्रियाकर्म्मभावेनान्वयरूपः शाब्दबोधो भवतीति संक्षेपः ॥ १८२ ॥

## खलेकपोतन्यायः ॥ १८३ ॥

उक्तञ्च-"वृद्धा युवानः शिशवः कपोताः खले यथामी युगपत्पतन्ति। तथैव सर्वे युगपत्पदार्थाः परस्परेणान्वयिनो भवन्ति ॥" इति न्यायः। अत्र वृद्धयुवशिशुभिः कपोतैश्चिरतराचिरसन्निहितकालोक्तानां पदार्थानां साम्यं बोध्यमिति संक्षेपः। यत्र पदार्थानां युगपदन्वयस्तत्रास्य प्रवृत्तिरिति। एवञ्च श्लोकादौ पदविभागे क्रियमाणे शाब्दबोधस्यानुभवसिद्धस्यापलापापत्तिः, वर्णानां पौर्वापर्यस्य पदविभागात्प्रागिवोत्तरत्रापि समत्वात्। अपि च-घटमानय देवदत्तेत्यादौ यदि प्रथमक्षणे घटपदस्मरणं द्वितीयादिक्षणे आनयनादिस्मरणं तदा तृतीयादिक्षणे पूर्वस्मरणस्य नाशाच्छाब्दबोधानुपपत्तिस्तदवस्थैव। अतो युगपत्तेषां स्मरणमित्यभ्युपेयं प्रकृतन्यायत इति वादसुधाकरः॥१८३॥

## विशिष्टस्य वैशिष्ट्यमिति न्यायः ॥ १८४ ॥

यथा–अनेनस्वार्थः काङ्क्षितो योग्यश्च स्वार्थोपस्थिति-विषयो भवति, तेन तेनैवान्वितः स्वार्थः पदैः प्रथममनुभाव्यतेऽनन्तरञ्च महावाक्यार्थबोध इति नवनैयायिकमतमाश्रित्य शाब्दबोधोऽङ्गीक्रियत इति संक्षेपः ॥ १८४ ॥

## राजपुरप्रवेशन्यायः ॥ १८५ ॥

यथात्र क्रमेणैव बहूनां पुरुषाणां प्रवेशो भवति न युगपत्, तथा–यथा विशृङ्खलतया राजपुरप्रवेशे राजपुररक्षकैस्ताडनादिकं क्रियते, भिया श्रेणीभूततया तत्पुरप्रवेशः, एवं सुशृङ्खलतया यत्र कार्यकारणस्य विवक्षा तत्रास्य प्रवृत्तिः ॥ १८५ ॥

## सम्भवव्यभिचाराभ्यां स्याद्विशेषणमर्थवदिति न्यायः ॥१८६॥

यथा नीलो घट इत्यत्र घटस्य नीलता नीले घटे सम्भवति, पीतादिघटे व्यभिचरत्यतो घटस्य नील इति विशेषणमर्थवदिति तथान्यत्रापि बोध्यम् ॥ १८६ ॥

## नाज्ञातविशेषणविशिष्टबुद्धिर्विशेषणमुपसङ्क्रामतीति न्यायः ॥ १८७ ॥

यथा–विशेषणज्ञानस्य विशिष्टज्ञानस्य हेतुत्वान्न तदन्तरेण तत्सिद्धिर्न हि दण्डज्ञानं विना दण्डीति ज्ञानं

सम्भवति, न चाऽज्ञातविशेषणं तद्विशेष्यं वशीकरोतीति तदर्थः ॥ १८७ ॥

## त्यजेदेकं कुलस्यार्थ इति न्यायः ॥ १८८ ॥

यत्रोभयकोटिकसंशये ह्येकत्र बह्वर्थहानिर्द्वितीयस्वीकारे त्वेकार्थहानिस्तत्र द्वितीयः पक्षः स्वीकार्य्य इति भावः ॥ १८८ ॥

## अल्पस्य हेतोर्बहु हातुमिच्छन्विचारमूढः प्रतिभासि मे त्वमिति न्यायः ॥ १८९ ॥

अयमपि पूर्वसदृशः ॥ १८९ ॥

## अन्तरेणापि निमित्तशब्दं निमित्तार्थो गम्यत इति न्यायः ॥ १९० ॥

एतन्न्यायमूलकमेव वक्ष्यमाणन्यायपञ्चकम् । अयं न्यायः " द्विर्वचनेऽचि " १ । १ । ५९ । इति सूत्रमहाभाभाष्येऽभिहित इति ॥ १९० ॥

## विषं मृत्युरिति न्यायः ॥ १९१ ॥

मृत्योर्निमित्तमिति गम्यते ॥ १९१ ॥

## लाङ्गलं जीवनमिति न्यायः ॥ १९२ ॥

लाङ्गलं हलं जीवनस्य निमित्तमिति गम्यते ॥ १९२ ॥

## आयुर्घृतमिति न्यायः ॥ १९३ ॥

आयुषो निमित्तमिति गम्यते ॥ १९३ ॥

## दधित्रापुषं प्रत्यक्षो ज्वर इति न्यायः ॥१९४॥

ज्वरनिमित्तमिति गम्यते । 'त्रपु पिच्चटं रङ्गवङ्गे' इति, "जतुत्रपुविकारे तु जातुषं त्रापुषं त्रिषु" इति चामरः । "त्रपुजतुनोः षुक्" । ४ । ३ । १३८ । इत्यण् षुगागमश्च । त्रपुणो विकारस्त्रापुषमिति ॥ १९४ ॥

## नड्वलोदकं पादरोग इति न्यायः ॥ १९५ ॥

पादरोगनिमित्तमिति गम्यते । नडास्सन्त्यस्मिन्स नड्वलः । 'नड्वान्नड्वल इत्यपि' इत्यमरः । नडस्तृणभेदस्तद्युक्तमुदकं नड्वलोदकम् "कुमुदनडवेतसेभ्यो ड्मतुप्", । ४ । २ । ८७ । इति ड्मतुप् ॥ १९५ ॥

## अशोकवनिकान्यायः ॥ १९६ ॥

अयमेकस्मिन्साध्येऽनेकेषु साधनेषु सत्स्वप्यादावेकस्मिन्प्रयुक्ते सति साध्यसिद्धावन्यप्रयोगेऽर्थाभावात्तत्स्वयमेव निवर्त्तते, पूर्वं कस्यचित्प्रयोगे चेच्छैव नियामिकेति विवक्षायां प्रवर्त्तते । यथा—रावणो लङ्कायां सीतां नीत्वा राक्षसीभ्य आज्ञप्तवान्—अशोकवनिकायामियं स्थाप्येति । ताश्च तत्र बह्व्यस्सन्ति । तत्रैकस्यां स्थीयते चेत्तावतैव तदाज्ञायाः परिपालितत्वात्सर्वत्र स्थापयितुमशक्यत्वाच्चान्यत्र स्थापनं स्वयमेव निवर्त्तते ॥ केचित्तु—यथा रावणेन सीता नीता चेदशोकवनिकायामेवेति नियामिकैव, कुतः स्थापिता नान्यत्रेत्यत्र रावणेच्छैव नियामिकेति, तावतैव तदवस्थानसिद्धेः सर्व्वत्र स्थापनासम्भवाच्चान्यत्र स्थापनं स्वयमेव

निवर्त्तत इति न्यायार्थमाहुः। सर्वथापि प्रकृतन्यायोदाहरण-सङ्गतेर्न क्षतिरिति ॥ १९६ ॥

## स्थालीपुलाकन्यायः ॥ १९७ ॥

पुलाकस्तु—“ स्यात्पुलाकस्तुच्छधान्ये सङ्क्षेपे भक्त-सिक्थके ” इत्यमरात्तुच्छधान्ये तण्डुलशून्ये धान्ये, संक्षेपेऽ-विस्तारे, भक्तसिक्थके अन्नावयव इत्यर्थके भवति। यथा प्रज्वलितचुल्ल्याधिरोहितस्थाल्यन्तर्गतेष्वेकस्मिन्पक्के नि-श्चिते सर्व्वे पुलाका निश्चीयन्ते, तद्वत्प्रकृतेऽपि। यथा वा पाचकः स्थालीपुलाकस्यैकस्य पक्वताज्ञानेन सर्व्वस्याप्य-न्यस्य पक्वतां विजानाति, तथा ब्रह्मविद्यतिः स्वमुक्त्या सर्व्वान्मुक्तानेव विजानाति, न तु स्वमात्रमिति शङ्करान-न्दस्वामी ॥ १९७ ॥

## सूचीकटाहन्यायः ॥ १९८ ॥

यथा लोहकारम्प्रति पूर्वं कश्चित्कटाहोत्पादनार्थी ह्यागतः, पश्चात्सूच्युत्पादनार्थी प्राप्तः, तत्र लोहकारः प्रथमं कर्त्तव्य-त्वेन प्राप्तमपि कटाहं बहुकालसाध्यत्वात्तत्परित्यज्य पश्चा-त्कर्त्तव्यतया प्राप्तामपि स्वल्पकालसाध्यां सूचीं प्रथममु-त्पादयति, तथानेकेषु पदेषु वाक्येषु व्याख्येयेषु प्रथमपठि-तमपि बृहद्वाक्यं परित्यज्य मध्ये चान्ते वा पठितं स्वल्पं वक्तव्यं व्याख्यायते ह्येवं प्रकृतान्तरेऽपि बोध्यम् ॥ १९८ ॥

## यथासङ्ख्यन्यायः ॥ १९९ ॥

अयम् “यथासङ्ख्यमनुदेशः समानाम्” १ । ३ । १० । इति पाणिनीयसूत्रसिद्धः। यथा “टाङसिङसामिना-

स्याः” ७ । १ । १२ । इत्यादिषु पाणिनीयसूत्रेषु टाङसिङ-सादीनुद्दिश्येनात्स्यप्रभृतयो विधीयन्ते यथाक्रमं प्रथमः प्रथमेन द्वितीयो द्वितीयेनेत्यन्वयं प्राप्नुवन्तीति, एवमन्यत्रापि बोध्यम् ॥ १९९ ॥

## अब्भक्षन्यायः ॥ २०० ॥

यथा—अब्भक्षोऽयं द्विज इत्युक्तिरब्भक्षस्यान्नादिभक्षकेऽपि सत्त्वादस्मिंस्तदितरभक्षणानिषेधे पर्य्यवस्यतीति।२००

## वायुभक्षणन्यायः ॥ २०१ ॥

अयमपि पूर्वसदृशः ॥ २०१ ॥

## कुम्भीधान्यन्यायः ॥ २०२ ॥

कुम्भी उखा, रन्धनस्थालीति यावत् । यथा कुम्भी-धान्याय विप्रायेयं धेनुर्देयेत्यत्र विशेषणसाफल्याय कुम्भ्या-मेव धान्यं यस्येति विगृह्यते, तथा “तन्त्वौपनिषदं पुरुषं पृच्छामि” इत्यत्रौपनिषदमित्युपनिषन्मात्रैकगम्यमिति वि-गृह्यताम्, अन्यथा विपुलधान्यवतामपि सर्वेषां विप्राणां कुम्भीधान्यसम्भवेन कुम्भीधान्यायेति विशेषणवैयर्थ्य-वज्जीवतद्दुपाध्यादेरप्यौपनिषदबोधाविषयत्वसम्भवेन विशे-षणवैयर्थ्यापातात् । अयञ्च-“चुटू” १ । ३ । ७ । इति सूत्रमहाभाष्येऽप्यभिहितः। तथाहि—“कुम्भीधान्यः श्रोत्रिय इत्युच्यते । यस्य कुम्भ्यामेव धान्यं स कुम्भीधान्यः । यस्य पुनः कुम्भ्याञ्चान्यत्र च धान्यं नाऽसौ कुम्भी-धान्यः । नायमिद्विधिः कुम्भीधान्यन्यायेन शक्यो विज्ञा-तुम्” इत्यादि ॥ २०२ ॥

## ब्राह्मणपरिव्राजकन्यायः ॥ २०३ ॥

अयं यत्र सामान्यवाचकं सहप्रयुक्तविशेषवाचकपदवत्त्वात्तदर्थाऽन्यपरतया नीयते तत्र प्रवर्त्तते । यथा—ब्राह्मणा भोज्यन्तामित्यत्र परिव्राजकानामपि ब्राह्मणत्वाद्ब्राह्मणपदं परिव्राजकेतरब्राह्मणपरमिति ॥ २०३ ॥

## ब्राह्मणवसिष्ठन्यायः ॥ २०४ ॥

यथा—ब्राह्मणा आयाता वसिष्ठोऽप्यायात इत्यत्र प्रथमवाक्येनैव ब्राह्मणत्वेन रूपेण वसिष्ठस्याप्यागमनस्य सिद्धौ यद्वसिष्ठोऽप्यायात इति वाक्यान्तरं प्रयुज्यते, तत्पूर्ववाक्यघटकब्राह्मणपदोपात्तवसिष्ठेतरयावद्व्यावृत्तधर्म्मविशेषबोधनपरतया पर्य्यवस्यतीति । अस्योदाहरणानि यथा महाभाष्ये "हलन्त्यम्" १ । ३ । ३ । इति सूत्रे व्यवसितान्त्यं हलित्संज्ञं भवतीति वक्तव्यमिति वार्त्तिकस्थव्यवसितपदं व्याख्यातम् "के पुनर्व्यवसिताः—धातुप्रातिपदिकप्रत्ययनिपातागमादेशाः" इति । अत्र प्रातिपदिकपदेनैव प्रातिपदिकत्वेन रूपेण निपातानामपि सङ्ग्रहे सिद्धे प्रकृतन्यायेन निपातपदोपादानमिति शेखरकारादयः । २—यथा वा "उपदेशेऽजनुनासिक इत्"१।३।४।इत्यत्रोपदेशपदार्थप्रतिपादिका प्राचीनवैयाकरणकारिका—"धातुसूत्रगणोणादिवाक्यलिङ्गानुशासनम्।आगमप्रत्ययादेशा उपदेशाः प्रकीर्त्तिताः॥" इत्यत्रापि सूत्रोपादानेन गणोपादानेन चोणादिलिङ्गानुशासनधातूनां लाभे सिद्धे तदुपादानं प्रकृतन्यायेनेति । ३—

यथा वा दायभागप्रकरणे याज्ञवल्क्यवचनम्–" भूर्या पितामहोपात्ता निबन्धो द्रव्यमेव वा। तत्र स्यात्सदृशं स्वाम्यं पितुः पुत्रस्य चैव हि॥" इत्यत्रापि द्रव्यपदेनैव भूनिबन्धयोर्लाभे तदुपादानं प्रकृतन्यायानुगतमिति। ४-यथा सांख्यकारिका–"अष्टविकल्पो दैवस्तैर्यग्योन्यश्च पञ्चधा भवति। मानुष्यश्चैकविधस्समासतो भौतिकस्सर्गः॥"। अस्या अर्थः–अष्टविधो दैवसर्गः–ब्राह्मः[1], प्राजापत्यः[2], ऐन्द्रः[3], पैत्रः[4], गान्धर्वः[5], यार्क्षः[6], राक्षसः[7], पैशाच[8] इत्यष्टविधो दैवसर्गः। तैर्य्यग्योन्यश्च पञ्चधा भवति–पशुमृगपक्षिसरीसृपस्थावरा इति। अत्रापि पशुभ्यो मृगाणां पृथङ्निर्देशः प्रकृतन्यायेन चरितार्थ इति संक्षेपोऽत्राऽन्यत्र विस्तर इति॥ २०४॥

## गोबलीवर्दन्यायः॥ २०५॥

" उक्षा भद्रो बलीवर्द ऋषभो वृषभो वृषः। अनड्वान्सौरभेयो गौः" इत्यभिधानाद्गामानय बलीवर्दञ्चानयेत्यत्र गोपदेनैव बलीवर्दबोधसिद्धौ बलीवर्दपदं दुर्दम्यत्वज्ञापनपरत्वेन सफलमिति। यद्यप्ययं न्यायः पूर्वन्यायसमानार्थकप्रायोऽस्ति, तथापि ह्येतावांस्तु विशेषः–यत्र विशेषणोपात्तस्य प्राशस्त्यमभिप्रेतं तत्र पूर्वन्यायप्रवृत्तिः, यत्र तन्नास्ति किन्तु प्रसिद्ध्यप्रसिद्धिनिबन्धनं भवेत्तत्राऽयं प्रवर्त्तते। गोपदस्य हि स्त्रीव्यक्तौ प्रसिद्धिरप्रसिद्धिः पुंव्यक्ताविति॥ २०५॥

## करिबृंहितन्यायः ॥ २०६ ॥

अयं विशिष्टवाचकपदानां सति पृथग्विशेषणवाचकपदसमवधाने विशेष्यमात्रपरतायां प्रवर्त्तते । यथा–'बृंहितं करिगर्जितम्' इति कोशाद्विशिष्टवाचकस्य बृंहितपदस्य–'तत्र स द्विरदबृंहितशङ्की' इत्यादौ विशेषणवाचि [द्विरदपदसमवधानाद्यथा गर्जितरूपविशेष्यमात्रपरत्वमिति । यथा च–"उद्दामदानद्विपबृंहितैः शतैर्न्निंतान्तमुत्तुङ्गतुरङ्गहेषितैः । चलध्वजस्यन्दननेमिनिस्वनैरभून्निरुच्छ्वासमथाकुलं नभः ॥" इति । यथा वा–'स कीचकैर्मारुतपूर्णरन्ध्रैः' इत्यत्रापि कीचकपदस्य–"कीचका वेणवस्ते स्युर्ये स्वनन्त्यनिलोद्धताः" इत्यभिधानाद्विशिष्टवाचकत्वेऽपि तथा विशेष्यमात्रपरत्वमिति । यथा वा–सूर्य्यसिद्धान्ते स्पष्टाधिकारे–"दक्षिणोत्तरतोऽप्येवं यातो राहुः स्वरंहसा । विक्षिपत्येष विक्षेपं चन्द्रादीनामपक्रमात् ॥ विक्षेपं विक्षेपणम्, स्वरंहसात्मवेगेन विक्षिपति । अत्र विशिष्टवाचकत्वेऽपि विशेषमात्रपरत्वमिति बोध्यम् ॥२०६॥

## करकङ्कणन्यायः ॥ २०७ ॥

तथा–'कङ्कणं करभूषणम्' इति कोशात्कङ्कणशब्दस्य करभूषणवाचित्वेऽपि तत्पूर्वकरशब्दप्रयोगे यथा प्रयोगकाले तस्य करसम्बन्धिता द्योत्यते, एवमन्यस्याऽपि तत्काले तत्सम्बन्धद्योतनार्थं यत्र प्रयोगस्तत्रास्य वृत्तिः ॥ २०७ ॥

## गजघटान्यायः ॥ २०८ ॥

'करिणां घटना घटा' इति कोशात्तथा पूर्ववत् । यथा–'मदान्धसिन्धुरघटा', यथा च–"यत्रैषा मेघनीला चलति गजघटा राक्षसस्तत्र यायादेतत्पारिप्लवाम्भःप्लुति-तुरगबलं धार्य्यतां राक्षसेन । पत्तीनां राक्षसोऽन्तं नयतु बल-मिति प्रेषयन्मह्यमाज्ञामज्ञासीत्स्नेहयोगात्स्थितमिह नगरे राक्षसानां सहस्रम् ॥" इति मुद्राराक्षसनाटके २ अंके॥२०८॥

## नीलेन्दीवरन्यायः ॥ २०९ ॥

'इन्दीवरञ्च नीलेऽस्मिन्' इति कोशात्तथा पूर्व-वत् । यथा–'नीलेन्दीवरलोचना' मष्टिव्याकरणमङ्गलाच-रणमिति । "नीलेन्दीवरशंकया नयनयोर्बन्धूकबुद्ध्याऽधरे पाणौ पद्मधिया मधूककुसुमभ्रान्त्या तथा गण्डयोः लीयन्ते कबरीषु बान्धवजनव्यामोहजातस्पृहा दुर्वारा मधुपाः कियन्ति तरुणि स्थानानि रक्षिष्यसि॥"इति ॥२०९॥

## चन्द्रज्योत्स्नान्यायः ॥ २१० ॥

'चन्द्रिका कौमुदी ज्योत्स्ना' इति कोशात्तथा पूर्व-वत् । यथा–" चन्द्रज्योत्स्नाशरदि पुलिने सैकतेऽस्मिन्स-रय्वा वादद्यूतं चिरतरमभूत्सिद्धयूनोः कयोश्चित् । एको वक्ति प्रथमनिहतं कैटभं कंसमन्यस्स त्वं तत्त्वं कथय भग-वन्को हतस्तत्र पूर्वम् ॥" इति ॥ २१० ॥

## पर्वताधित्यकान्यायः ॥ २११ ॥

यथा—" अधित्यकायामिव धातुमय्यां लोध्रद्रुमं सानुमतः प्रफुल्लम् " इति ॥ २११ ॥

## पर्वतोपत्यकान्यायः ॥ २१२ ॥

" उपत्यकाद्रेरासन्ना भूमिरूर्ध्वमधित्यका " इति कोशात्तथा पूर्ववत् ॥ २१२ ॥

## वाजिमन्दुरान्यायः ॥ २१३ ॥

' वाजिशाला तु मन्दुरा ' इति कोशात्तथा पूर्ववत् ॥ २१३ ॥

## मृगवागुरान्यायः ॥ २१४ ॥

'वागुरा मृगबन्धनी' इति कोशात्तथा पूर्ववत् ॥ २१४ ॥

## अश्वभृत्यन्यायः ॥ २१५ ॥

कस्यायमश्वो यस्यायं भृत्यः, कस्यायं भृत्यो यस्यायमश्व इत्यत्र यथा न वस्तुनिर्णयः, तथा प्रकृतेऽपि ॥ २१५ ॥

## बीजवृक्षन्यायः ॥ २१६ ॥

यथा बीजाद्वृक्षो भवति, वृक्षाद्बीजमिति ॥ २१६ ॥

## बीजांकुरन्यायः ॥ २१७ ॥

'अंकुरोऽभिनवोद्भिदि' इत्यमरः । बीजं विना नांकुरो जायते, अङ्कुरं विना च न बीजोत्पत्तिरिति, एवं यत्र परस्परकार्य्यकारणभावस्तत्रायं न्यायः प्रवर्त्तते। तथा च बीजजातीयं प्रत्यङ्कुरजातीयम्, अंकुरजातीयञ्च प्रति बीजजातीयं कारणम् । अतो बीजाङ्कुरप्रवाहाऽनादितया च यद्बीजम्प्रति यदङ्कुरस्य कारणत्वं तदङ्कुरम्प्रति तद्बीजस्य न कारणत्वमतो नान्यो-

न्याश्रयः। एष च प्रमाणकत्वाद्दृह्यते, यत्र च न प्रमाणकत्वं तत्र नाऽनादित्वकल्पनेति। प्रामाणिकप्रवाहस्यैवाऽनादित्वकल्पना नान्यस्येति सिद्धान्तात्सूचितश्च तथा, च शारीरकभाष्ये यथा–" तत्कृतधर्म्माधर्म्मनिमित्तं सशरीरत्वमिति चेन्न, शरीरसम्बन्धस्यासिद्धत्वाद्धर्म्माधर्म्मयोरात्मकृतत्वासिद्धेः, शरीरसम्बन्धस्य धर्म्माधर्म्मयोस्तत्कृतत्वस्य चेतरेतराश्रयत्वप्रसङ्गादन्धपरम्परैवैषा कल्पना " इति । आत्मनः शरीरसम्बन्धे जाते धर्म्माधर्म्मोत्पत्तिः, तस्याश्च सत्यां सम्बन्धरूपजन्मेत्यन्योन्याश्रयादेकस्यासिद्ध्या द्वितीयस्यासिद्धिः स्यादिति परिहरति–नेत्यादिना। न त्वेतद्देहजन्यधर्म्माधर्म्मकर्म्मण एतद्देहसम्बन्धहेतुत्वे स्यादन्योन्याश्रयः। पूर्व्वदेहकर्म्मण एतद्देहसम्बन्धोत्पत्तिः, पूर्व्वदेहश्च तत्पूर्व्वदेहकर्मणस्तद्देहसम्बन्धोत्पत्तिः। तत्पूर्वदेहकृतकर्म्मण इति बीजाङ्कुरवदनादित्वान्नायं दोष इत्यत आह–अन्धेति। अप्रामाणिकीत्यर्थः। न हि बीजादङ्कुरस्ततो बीजान्तरश्च यथा प्रत्यक्षेण गृह्यते, तथात्मनो देहसम्बन्धः पूर्व्वकर्म्मकृतः प्रत्यक्षो, नाप्यास्ते कश्चिदागमः प्रत्युता असङ्गो हि " इत्यादिश्रुतिः सर्वकर्तृत्वं वारयतीति भाव इति आनन्दगिरिः ॥ २१७ ॥

## अण्डकुक्कुटीन्यायः ॥ २१८ ॥

स्पष्टार्थः पूर्ववत् ॥ २१८ ॥

## नौनाविकन्यायः ॥ २१९ ॥

यथा—यत्रोद्वाह्योद्वाहकभावस्तत्रायं प्रवर्त्तते। न चेद्दशस्थलेऽन्योन्याश्रयदोषोऽवतरतीति ॥ २१९ ॥

## न हि सुशिक्षितोऽपि बटुः स्वस्कन्धमारोढुं पटुरिति न्यायः ॥ २२० ॥

आत्माश्रयस्य दोषत्वविवक्षायां स्पष्टोयम् ॥ २२० ॥

## न हि सुतीक्ष्णाऽप्यासिधारा स्वयं छेत्तुमाहितव्यापारेति न्यायः ॥ २२१ ॥

अयं कर्त्तारं विना करणस्य कार्य्याक्षमत्वविवक्षायां प्रवर्त्तते ॥ २२१ ॥

## तक्रकौण्डिन्यन्यायः ॥ २२२ ॥

अयं सामान्यशास्त्रस्य विशेषशास्त्रेण बाध एव प्रवर्त्तते। यथा ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्यायेत्यत्र काण्डिन्यस्याऽपि ब्राह्मणत्वात् ॥ २२२ ॥

## येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवतीति न्यायः ॥ २२३ ॥

प्राप्तमिति भावे क्तः, येन नाप्राप्ते इत्यस्य यत्कर्त्तृकावश्यंप्राप्तावित्यर्थः, नञ्द्वयस्य प्रकृतार्थदार्ढ्यबोधकत्वात् । अयं हि—विशेषशास्त्रोद्देश्यविशेषधर्म्मावच्छिन्नवृत्तिसामान्यधर्म्मावच्छिन्नोद्देश्यकशास्त्रस्य विशेषशास्त्रेण बाधो यत्र तत्र प्रवर्त्तते। सामान्यशास्त्रस्याप्राप्तियोगोऽचारितार्थ्यं हि विशेषशास्त्रस्य बाधकत्वे बीजमिति। बहुव्यापकं सामा-

न्यम् । अल्पव्यापको विशेषः । एतदुदाहरणं यथा—"होढः" ८ । २ । ३१ । इति शास्त्रस्य "दादेर्धातोर्घः" ८ । २ । ३२ । इति । अत्र विशेषशास्त्रोद्देश्यतावच्छेदकझल्परत्वपदान्तत्वान्यतरविशिष्टदादिधात्ववयवत्वविशिष्टहत्वम्, तदवच्छिन्नवृत्तिर्यस्सामान्यधर्म्मस्तादृशहत्वं, तदवच्छिन्नोद्देश्यकस्य होढ इत्यस्य दादेर्धातोरित्यनेन बाध इति । तथा च—ब्राह्मणा भोज्यन्तां माठरकौण्डिन्यौ परिवेविष्टामित्यत्र भोजनकर्तृकाऽवश्यंप्राप्तौ परिवेषणविधेरारब्धत्वात्तेन सामान्यशास्त्रस्य प्राप्तियोग्ये शूद्रादावचरितार्थेन विशेषविधिना स्वोद्देश्यमाठरत्वादिविशेषधर्म्मावच्छिन्नब्राह्मणत्वलक्षणसामान्यधर्म्मावच्छिन्नोद्देश्यकस्य ब्राह्मणा भोज्यन्तामिति शास्त्रस्य बाध इति । तथा च—"न हिंस्यात्सर्वा भूतानि" इति हिंसानिषेधकर्तृकावश्यंप्राप्तौ "अग्नीषोमीयं पशुमालभेत" इत्याद्यग्नीषोमीयादिपश्वालम्भनविधेरारब्धत्वात्तेन सामान्यशास्त्रप्राप्तियोग्ये पुरोडाशादावचरितार्थेन विशेषविधिना स्वोद्देश्याग्नीषोमीयत्वादिविशेषधर्म्मावच्छिन्नवृत्तिभूतत्वलक्षणसामान्यधर्म्मोद्देश्यकस्य न हिंस्यादिति शास्त्रस्य बाध इति। एवं वाजपेये—सुराग्रहादिष्वपि दृष्टव्यम् "न सुरां पिबेत" इत्यादिनिषेधस्य विहितेतरविषयत्वात् । तथा च "वर्णिनां हि वधो यत्र तत्र साक्ष्यनृतं वदेत्" इत्यत्रापि ज्ञेयमिति । तथा च—"यतो वा इमानि भूतानि जायन्ते" इति श्रुत्या बोधितस्य भूतेषु साक्षाद्ब्रह्मकार्य्यत्वस्य "एतस्मादात्मन आकाशस्सम्भूत

आकाशाद्वायुः" इत्यादिविशेषश्रुत्या बाध इति। तक्रेति न्यायः, येन नाप्राप्तेति न्यायश्च। अनयोरुभयोर्न्याययोरेकविषयत्वमत एवं तक्रकौण्डिन्यन्यायोऽपि तदप्राप्तियोग्येऽचरितार्थविषये विधेयविषय एवेति परिभाषेन्दुशेखरेऽभिहितमित्यन्यत्र विस्तरः ॥ २२३ ॥

## असिद्धम्बहिरङ्गमन्तरङ्ग इति न्यायः ॥ २२४ ॥

अयं शास्त्रे लोके च प्रवर्त्तते। तथा च–"अचः परस्मिन्पूर्वविधौ" १।१।५७। इति सूत्रमहाभाष्ये–"प्रत्यङ्गवर्त्ती लोको लक्ष्यते। तद्यथा–मनुष्योऽयं प्रातरुत्थाय शरीरकार्य्याणि करोति ततस्सुहृदां ततस्सम्बन्धिनाम्" इत्यादिशास्त्रीयोदाहरणानि ततोऽवसेयानि। विस्तरभिया नेह प्रपञ्चितानि। तत्रास्यार्थस्तु–अन्तर्म्मध्ये बहिरङ्गशास्त्रीयनिमित्तसमुदायमध्येऽन्तर्भूतानि निमित्तानि यस्य तदन्तरङ्गम्। एवं तदीयनिमित्तसमुदायाद्बहिर्भूताङ्गकं बहिरङ्गमिति। शास्त्रेति लोकोपलक्षकमिति ज्ञेयम् ॥ २२४ ॥

## बिल्वविभजनन्यायः ॥ २२५ ॥

अनवबुद्धार्थे प्रवृत्तिरशक्येति यत्र विवक्षा तत्रायं प्रवर्त्तत इति ॥ २२५ ॥

## स्थावरजङ्गमविषन्यायः ॥ २२६ ॥

यथा रजतादिज्ञानतद्बाधज्ञानयोः सर्पवत्सनाभादिरूपजङ्गमस्थावरविषयोश्चेतरेण पूर्वबाधः प्रसिद्धः, तथा प्रकृतेऽपि ॥ २२६ ॥

## कृदभिहितो भावो द्रव्यवत्प्रकाशत इति न्यायः ॥ २२७ ॥

अस्य न्यायस्य तु—"प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगमः" । इति गौतमीयसूत्रान्तर्गतमधिगम इति पदमुदाहरणं बोध्यमिति संक्षेपः । विस्तरेण तु तत्रैव बोध्यम् ॥ २२७ ॥

## वीचितरङ्गन्यायः ॥ २२८ ॥

तद्यथा-यद्यपि वीचितरङ्गशब्दौ पर्य्यायौ, 'भङ्गस्तरङ्ग ऊर्मिर्वा स्त्रियां वीचिः' इति कोशात्, तथापि वीचेस्स्वल्पतरङ्गस्येव तरङ्गो यत्र वीचितो यथोत्तरोत्तरं तरङ्गजननं वाय्वादिसंयुक्ताद्ध्रदादेर्वीचिर्जायते, तद्भावापन्नाच्च तस्मात्तरङ्गान्तरम्, तस्मात्तद्भावापन्नाच्च तरङ्गान्तरम्, एवं स्वजन्यजन्यादिरूपो न्यायः । यथा—शब्दस्य ढक्कादिदेशे ह्युद्भवः, स च प्रकृतिन्यायात्स्वसन्निहितशब्दान्तरमारभते, स च शब्दः शब्दान्तरमिति तज्जन्यजन्यशब्दपरम्परया श्रोत्रेण सह सम्बन्धाच्छ्रवणम् । तदुक्तं तार्किकैः—"वीचीतरङ्गन्यायेन तदुत्पत्तिस्तु कीर्त्तिता" वीचिशब्दो ह्रस्वान्तो दीर्घान्तोऽपि। वीचीत्यत्र छन्दोभङ्गदोषः प्रतीयत इति ॥ २२८ ॥

## कदम्बमुकुलन्यायः ॥ २२९ ॥

कदम्बो वृक्षविशेषः, तस्य मुकुलः—ईषद्विकसितपुष्पं कलिकेति यावत् 'कुड्मलो मुकुलोऽस्त्रियाम्' इत्यमरः। तद्यथा—गोलाकारकदम्बपुष्पस्य गोलके यथा सर्व्वावयवेषु युगपत्पुष्पाणामुत्पत्तिः, एवं शब्दस्यापि। अपि चोक्तम्—"कदम्बमुकुलन्यायादुत्पत्तिः कस्यचिन्मते" इति॥ २२९॥

## मात्स्यन्यायः॥ २३०॥

यथा—प्रबलमत्स्या निर्बलांस्तान्नाशयन्तीति न्यायार्थः। अयञ्च वासिष्ठे प्रह्लादोपाख्याने तत्समाधिं प्रस्तुत्योक्तः—"एतावताऽथ कालेन तद्रसातलमण्डलम्। बभूव राजकं तीक्ष्णं मात्स्यन्यायकदर्थितम्॥" इति॥२३०॥

## अत्यन्तबलवन्तोऽपि पौरजानपदा जनाः। दुर्बलैरपि बाध्यन्ते पुरुषैः पार्थिवाश्रितैः॥ इति न्यायः॥ २३१॥

अयं यत्र निर्बलेनापि प्रबलसहायेन प्रबलो बाध्यते तत्र प्रवर्त्तते। अर्थस्तु स्पष्टः। पूर्वमीमांसायाम्—उत्पत्तिविधिः, विनियोगविधिः, अधिकारविधिः, प्रयोगविधिश्चेति चतुर्विधविधिषु ह्यङ्गप्रधानसम्बन्धबोधकात्मकविनियोगविधेस्सहकारभूतानि षट् प्रमाणानि। श्रुतिर्लिङ्गंवाक्यंप्रकरणंस्थानंसमाख्यारूपाणि सन्ति इति। तत्र समाख्या यौगिकः शब्दः। सा च द्विविधा—वैदिकी लौकिकी चेति संक्षेपः।अत्र श्रुत्यादीनामेकत्र समावेशे पूर्वपूर्व्वस्य प्राबल्यमुत्तरोत्तरस्य दौर्बल्यम्। एवं हि—समाख्यातस्थानं बलीयः, स्थानात्प्र-

करणं बलीयः, प्रकरणाद्वाक्यं बलीयः, वाक्याल्लिङ्गं बलीयः, लिङ्गाच्छुतिर्बलीयसीति भावः। एवं च यद्यपि समाख्यातः प्रकरणं बलीयस्तथापि तस्य लिङ्गेन बाधितत्वात्समाख्याया दुर्बलाया अपि प्रबललिङ्गाश्रितत्वेन प्राबल्यात्सैव सामान्यसम्बन्धे प्रमाणम् दुर्बलस्यापि प्रबलाश्रितस्य प्राबल्यात्। अत एव श्रुत्यपेक्षया दुर्बलाया अपि स्मृतेराचमनरूपप्रबलपदार्थाश्रितत्वेन प्राबल्यात्पदार्थधर्म्मगुणभूतश्रौतकर्म्मत्यागेन वेदकरणानन्तरं श्रुतेराचमनमेव कार्य्यमित्युक्तमिति प्रकृतन्यायसङ्गतिरीति मी०न्या०प्र० ॥२३१॥

## आख्यातानामर्थं ब्रुवतां शक्तिस्सहकारिणीति न्यायः ॥ २३२ ॥

अयं न्यायो मीमांसादर्शने व्याख्यातः। तथा हि–ननु यत्र वाक्यशेषाभावस्तत्र कथं सान्दिग्धार्थनिर्णयः, यथा–स्रुवेणाऽवद्यति, स्वधितिनाऽवद्यति, हस्तेनाऽवद्यतीति श्रूयते। अत्र सन्देहः–किं स्रुवेणाऽखिलवस्तुमात्रस्यावदानम्, तथा स्वधितिना, हस्तेन च, आहोस्वित्कयाचिद्व्यवस्थयेत्याशङ्कायामाह जैमिनिः सूत्रम्–"अर्थाद्वा कल्पनैकदेशत्वात्" १।४।२१। अस्यार्थः–"वा अथवा यत्र वाक्यशेषाभावस्तत्र, अर्थात् सामर्थ्यात् कल्पना कुत एक देशत्वात्। सामर्थ्यस्यापि शक्तिग्रहे उपयोगितया बोधबीजैकदेशत्वात्। अयं भावः–आख्यातानामर्थं ब्रुवतां शक्तिस्सहकारिणीति न्यायात्, कटे भुंक्ते, कांस्यपात्र्यां भुंक्ते, इत्यत्र लौकिकास्तत्तद्वस्त्वनुसारेण व्यवस्थां कल्प-

यन्ति । कटे आसीनः, कांस्यपात्र्यामोदनं निधायेति । वेदेऽपि-"अञ्जलिना सक्तून् जुहुयात्" इत्यत्र यद्यपि द्विहस्तसंयोगोऽञ्जलिस्तथापि गुरुदेवतादिप्रसादनार्थोऽञ्जलिवन्निश्छिद्रसंयोगो न भवति तादृशाञ्जलौ सक्तूनामवकाशाभावात् । अतः सामर्थ्यात्संयुक्तः प्रसृतिद्वयात्मको मध्यगतावकाशोपेतोऽञ्जलिर्गृहीतः, एवमत्रापि द्रवद्रव्यस्याज्यस्य स्रुवो योग्यः, छेदनीयस्य मांसस्य शस्त्रविशेषः स्वधितिः, संहतस्य पुरोडाशस्य हस्त इत्यनेन प्रकारेण स्रुवाद्या व्यवस्थिताः । शक्तिः पुरुषसामर्थ्यमिति ॥ २३२ ॥

## रूढिर्य्योगमपहरतीति न्यायः ॥ २३३ ॥

यथा-यत्राऽन्यत्रातिप्रसक्तादवयवार्थालोचने सव्यपेक्षाच्च योगात्समुदायशक्तेः प्राबल्यं विवक्ष्यते, तत्राऽयं प्रवर्त्तते । यथा-गौरित्यादावन्यत्राऽतिप्रसक्तप्रकृतप्रत्ययार्थालोचनसव्यपेक्षागमनकर्त्तृत्वादिरूपयोगार्थत्यागेन रूढ्या सास्नालांगूलककुदखुरविषाणादिमती व्यक्तिर्गृह्यते, तथा-"वर्षासु रथकारोऽग्नीनादधीत" इत्यत्र रथकारशब्देन व्रात्यवैश्योत्पन्नो वर्णविशेष उच्यते, न तु रथङ्करोतीति व्युत्पत्त्या द्विजातिरिति सङ्क्षेपः । रूढिस्तु-स्वरूपेण, जात्या, गुणेन वा निर्देशार्हे वस्तुनि सञ्ज्ञासञ्ज्ञिसङ्केते प्रवर्त्तते । यथा-डित्थः, डवित्थः, गौः, शुक्ल इति । "डित्थः काष्ठमयो हस्ती डवित्थस्तन्मयो मृगः" इति । योगस्तु प्रकृतिप्रत्यययोगलभ्यार्थवाचके-यौगिक इत्यपरपर्य्याय-

शब्दे। यथा—आदितेयादिशब्दा यौगिका इति। अत्राऽऽदित्या अपत्यमिति "कृदिकारादक्तिनः" इति ङीषन्तात् "स्त्रीभ्यो ढक्" इति ढक्प्रत्ययेन केवलं योगार्थ एवेति॥ २३३॥

## श्रुतयौगिकलाभे सत्यनन्वितरूढार्थस्त्याज्य इति न्यायः॥ २३४॥

अयं हि—विशेषविषयतया पूर्वन्यायस्य बाधको दृश्यते। मण्डपं भोजयतीत्यत्र मण्डं पिबतीति यौगिकार्थलाभेनाऽन्वितगृहरूपरूढार्थत्याग इति॥ २३४॥

## अवयवप्रसिद्धेः समुदायप्रसिद्धिर्बलीयसीति न्यायः॥ २३५॥

यथा—"स्वसा तिस्रश्चतस्रश्च ननान्दा दुहिता तथा। याता मातेति सप्तैते स्वस्रादय उदाहृताः॥" इति। अत्र पठितशुद्धरूढस्य जननीवाचकस्यैव मातृशब्दस्य "न षट्स्वस्रादिभ्यः" ४। १। १०। इति स्वस्रादित्वप्रयुक्तङीब्निषेधः, न च परिच्छेत्तृवाचकमातृशब्दस्य। योगजबोधे तदनालिङ्गितशुद्धरूढिजोपस्थितिः प्रतिबन्धिकेति व्युत्पत्तिरेतद्बीजमिति। रथकाराधिकरणन्यायसिद्धोऽयं न्याय इति॥ २३५॥

## रथकाराधिकरणन्यायः॥ २३६॥

यथा—"रथकारोऽग्नीनादधीत" इत्यत्र रथकारपदस्य सत्त्वात्सन्देहः—रथं करोतीति व्युत्पत्त्या रथकारः कश्चन ब्राह्मणो रथकारपदबोध्यः प्रकृतवाक्यजन्यमहावाक्यार्थ-

बोधविषयो ग्राह्यः, उत–रूढः सङ्करजातीय इति । अपूर्वा या अग्न्याधानोपयोगिनी विद्या तस्या अकल्पनानुरोधेन द्विज एव रथकारपदबोध्य इति पूर्वपक्षः । " माहिष्योग्रौ प्रजायेते विट्शूद्राङ्गनयोर्नृपात् । शूद्रायां करणो वैश्याद्विन्नास्वेष विधिः स्मृतः ॥ माहिष्येण करण्यान्तु रथकारः प्रजायते ।" इति मनुना करण्यां माहिष्येणोत्पन्नस्य रूढिरियं रथकार इति प्रदर्शितमिति पूर्वोक्तप्रतिबध्यप्रतिबन्धकभावेन तस्यैव ग्रहणम् । तदन्यथानुपपत्त्याऽग्न्याधानोपयोगिविद्याया अध्ययनस्यापि कल्पनमिति सिद्धान्तितमिति । किञ्चित्प्रकाशिताऽर्थोप्ययं स्वरूपप्रदर्शनार्थं पुनरुक्त इति बोध्यम् ॥ २३६ ॥

## शाब्दी ह्याकांक्षा शब्देनैव पूर्य्यत इति न्यायः ॥ २३७ ॥

## न हि शाब्दमशब्देनेति न्यायः ॥ २३८ ॥

इच्छागोचरत्वस्य मोक्षसाधारणत्वात्तत्रैव यज्ञादिविनियोगः कुतो न स्यादिति शङ्कानिरासायेमावुभौ न्यायौ प्रवर्तेते । स्पष्टौ चेमाविति ॥ २३७ ॥ २३८ ॥

## मत्स्यकण्टकन्यायः ॥ २३९ ॥

यथा मत्स्यमांसार्थी तत्सम्बद्धान्कण्टकादीनपि तावद्गृह्णाति, त्यजति च तस्मिन्गृहीते, तथा तत्त्वम्पदलक्ष्यार्थजिघृक्षया तदुपाधी अपि गृह्येते, त्यज्येते च भागत्यागलक्षणया सति लक्ष्यार्थग्रहे । उपपादितोयमर्थो विस्तरतोऽन्यत्र ।

किञ्च–" तस्याऽपत्यम् " ४ । १ । ९२ । इति सूत्रमहाभाष्ये ह्युक्तः । तथाहि–" यथा कश्चिन्मांसार्थी मत्स्यान्सशकलान्सकण्टकानाहरति नान्तरीयकत्वात् । स यावदादेयं तावदादाय शकलकण्टकानुत्सृजति " इति संक्षेपः ॥ २३९ ॥

## धान्यपलालन्यायः ॥ २४० ॥

यथैतत्स्वरूपम्–"शास्त्राण्यधीत्य मेधावी ह्यभ्यस्य च पुनः-पुनः । परमं ब्रह्म विज्ञाय ह्युल्कावत्तान्यथोत्सृजेत् ॥ ग्रन्थमभ्यस्य मेधावी ज्ञानविज्ञानतत्परः । पलालमिव धान्यार्थी त्यजेद्ग्रन्थमशेषतः ॥ " इति पंचदश्यामुक्तम् । अयं न्यायः " तस्यापत्यम् " ४ । १ । ९२ । इत्यादिसूत्रमहाभाष्येप्यभिहितः । तद्यथा–"कश्चिद्धान्यार्थी शालिकलापं सतुषं सपलालमाहरति नान्तरीयकत्वात् । स यावदादेयं तावदादाय तुषपलालान्युत्सृजति" इति, तथा प्रकृतेपि नान्तरीयकमित्यस्याऽवश्यम्भावीत्यर्थ इति ॥ २४० ॥

## सर्वनाशे समुत्पन्ने ह्यर्द्धं त्यजति पण्डितः । अर्द्धेन कुरुते कार्य्यं सर्वनाशो हि दुस्सहः॥ (अर्द्धनाशे[1] समुत्पन्ने सर्वं त्यजति दुर्म्मतिः) इति न्यायः ॥ २४१ ॥

यथा–मूढाः शिष्टाचारमंशे विगीतं दृष्ट्वा कृत्स्नमपि त्यजन्ति, स्वभाववादश्चानुरुध्यन्ते । बुधास्तु–श्रुत्यन्तरवि-

---

१–केचिदेतत्पूर्वपद्योत्तरार्द्धस्थाने मन्यन्ते । अपरे तु– 'सर्वनाशे ' इत्यतः प्रागेव निवेशयितुमुचितम्, व्याख्याक्रमानुरोधादिति ।

रुद्धं विरुद्धांशमात्रं त्यक्त्वा तेनैवतेनैव सदाचारेण मुच्यन्त इति ॥ २४१ ॥

## पदमभ्यधिकाभावात्स्मारकान्न विशिष्यत इति न्यायः ॥ २४२ ॥

लक्ष्यार्थबोधे प्रमात्वसम्पादकतया पदान्तरसाफल्यमिति बोध्यम् ॥ २४२ ॥

## तुलोन्नमनन्यायः ॥ २४३ ॥

यथा हि तुलायाः पश्चिमभागस्याधस्तात्कनिष्ठिकाद्याघातेनोन्नमने कृते सति पूर्वभागस्य नमनं यत्नमन्तरेणैव भवति, तथा हि एकस्मिन्स्वपक्षपरिपन्थिनि जिते तत्पक्षपातिनोऽन्येऽपवादिनो विनोद्यमं जिता भवन्तीति ॥ २४३ ॥

## प्रधानमल्लनिबर्हणन्यायः ॥ २४४ ॥

मल्ला बाहुयुद्धविशारदास्तेषु प्रधानस्य निबर्हणं—मारणम्—भूमौ प्रतिष्ठापनम्—तत्पृष्ठभागस्य तया सँय्योजनमिति यावत्। यथा जयकामेन प्रधाने निगृहीते हि तदपेक्षया दुर्बलानामन्येषां पराजयः सुकर इति न्यायार्थः ॥ २४४ ॥

## आषाढवाते चलति द्विपेन्द्रे चक्रीवतो वारिधिरेव काष्ठेति न्यायः ॥ २४५ ॥

चलतीति सप्तम्यन्तं पदम्, देहलीदीपकन्यायेनोभयत्र सम्बध्यते। चक्रीवान् गर्द्दभः " चक्रीवन्तस्तु वालेया रासभा गर्द्दभाः खराः" इत्यमरात्। स्पष्टमन्यत्। अयं न्यायः ्याभिर्य्युक्तिभिः प्रबलतरशुष्कतर्ककर्कशत्वेन प्रासिद्धोऽपि

कश्चिद्वादी जयस्ताभिरितरे क्षुद्रा दूरतो निरस्ता भवन्तीति विवक्षायां प्रवर्तत इति ॥ २४५ ॥

## देहलीदीपन्यायः ॥ २४६ ॥

अयं न्यायो यथा शालाद्वयमध्यवर्तिदेहलीनिहितदीपः शालाद्वयं स्वकिरणमण्डितं करोतीति दृष्टान्तभूतः । दार्ष्टान्तिकभूतं प्रकृतन्यायोदाहरणञ्च पूर्वन्यायस्य चलतीति पदं बोध्यमिति । किञ्च-" एकाच उपदेशेऽनुदात्तात्" इति सूत्र ७ । २ । १० । स्थोपदेशपदार्थस्यैकाचपदार्थेऽनुदात्तपदार्थे चान्वय इति । एवमुदाहरणान्तराण्यपि स्वयमुन्नेयानि । अयञ्च न्यायः-अन्वयविषय एव प्राय उदाह्रियते वृद्धैरिति बोध्यम् ॥ २४६ ॥

## मध्यममणिन्यायः ॥ २४७ ॥

यथा-नासिकालंकारमुक्ताफलयोर्म्मध्ये सय्यँोजितो लोहितको मणिर्म्मौक्तिके स्वप्रभया भूषयतीति प्रसिद्धम् । उदाहरणानि प्रदर्शितान्येवेति ॥ २४७ ॥

## काकाक्षिगोलकन्यायः ॥ २४८ ॥

काकस्यैकमेव चक्षुरिन्द्रियं गोलकद्वयेऽपि चाक्षुषप्रत्यक्षोपजनने ह्युपकारकं भवतीति । तत्र पूर्व्वन्यायद्वयापेक्षयाऽयमीषद्विशेषशाली-यत्तदुपकारायतत्र तत्र चक्षुरिन्द्रियस्य गमनमपेक्षते, दीपादिस्तु निर्व्यापार एकत्र स्थित एवोभयोरुपकरोतीति । अस्योदाहरणं यथा-" या भाति लक्ष्मीर्भुवि मन्दरस्था यथा प्रदोषेषु च सागरस्था । तथैव

तोयेषु च पुष्करस्था रराज सा चारुनिशाकरस्था ॥" इति ।
अन्यच्च-" कृताश्च वैदूर्यमया विहंगा रूप्यप्रवालैश्च तथा
विहंगाः। चित्राश्च नानावसुभिर्भुजंगा जात्यानुरूपास्तुरगाः
शुभांगाः ॥ " इति । अत्राऽमध्यपतितस्यापि क्रियापदस्य
सर्वत्र सम्बन्धः । अत्रायमपि विशेषः पूर्वन्यायापेक्षयाऽवग-
न्तव्य इति । किञ्च-"न वेति विभाषा" १ । १ । ४४ । इति
सूत्रस्थ इतिशब्दः काकाक्षिगोलकन्यायेनोभाभ्यां सम्ब-
ध्यते । नेति निषेधः, वेति विकल्पः, विभाषायाः संज्ञी-
त्यर्थः । किञ्चोक्तं मुनीश्वरैः-"अविरोधिसुखे बुद्धिः स्वानन्दे
च गमागमौ । कुर्वन्त्यास्ते क्रमादेषा काकाक्षिवदितस्ततः ॥
एकैव दृष्टिः काकस्य वामदक्षिणनेत्रयोः । यात्यायात्येवमा-
नन्दद्वये तत्त्वविदो मतिः ॥ भुंजानो विषयानन्दं ब्रह्मानन्दं
च तत्त्ववित् । विभाषाभिज्ञवद्विद्यादुभौ लौकिकवैदिको ॥"
इति ॥ २४८ ॥

## अणुरपि विशेषोऽध्यवसायकर इति न्यायः ॥ २४९ ॥

इदमित्थमेवेति विषयपरिच्छेदोऽध्यवसायः । अध्यव-
सानमध्यवसायः 'षो-अन्तकर्म्मणि' इति धातोर्घञ्,
"आतो युक्"-७ । ३ । ३३ । इति युक् । अध्यवसायश्च-
बुद्धिव्यापारो ज्ञानमुपात्तविषयाणामिन्द्रियाणां वृत्तौ सत्यां
बुद्धे रजस्तमोऽभिभवे सति यस्सत्त्वसमुद्रेकः सोऽध्य
वसाय इति वृत्तिरिति चाख्यायते । किञ्च-क्रियाक्रिया-

वतोरभेदविवक्षया सर्व्वो व्यवहर्ता आलोच्य मत्वा अह-मत्राधिकृत इत्यभिमत्य कर्त्तव्यमेतन्मयेत्यध्यवस्यति, ततश्च प्रवर्त्तत इति लोकसिद्धम् तत्र कर्तव्यमिति योऽयं निश्चयश्चितिसन्निधावापन्नचैतन्यबुद्धेः सोऽध्यवसायो बुद्धे-रसाधारणव्यापार इति ॥ २४९ ॥

## दण्डसर्प्पमारणन्यायः ॥ २५० ॥

यत्रायासं विना साक्षात्सिद्धयन्तमर्थमुपेक्ष्यायासेन परम्परया स एवार्थः साध्यते, तत्रायं न्यायोऽवतरतीति । यथा कश्चित्सर्प्पं दृष्ट्वा तन्मारणाय दण्डमिच्छंस्तमलभ-मानश्च कुठारं गृहीत्वा त[1]च्छेदाय प्रवर्त्तते । तस्यायासो यथा वृथा, कुठारेणैव सर्प्पस्य शक्यवधत्वादिति ॥ २५० ॥

## वृकबन्धनन्यायः ॥ २५१ ॥

यथा वृकं जिघृक्षुः कश्चित्सूर्य्यरश्मिसन्तप्तशिरस्के वृके नवनीतं निधाय तेन विलेपनेन तन्नेत्रयोः पूर्णयोरन्धी-भूतं तं जिघृक्षति । तस्य यथा नवनीतप्रक्षेपायासो वृथा तं विनापि तदैव ग्रहीतुं शक्यत्वात्, तथा प्रकृतेऽपि । पूर्व्ववत् ॥ २५१ ॥

## अन्ते रण्डाविवाहश्चेदादावेव कुतो न स इति न्यायः ॥ २५२ ॥

स्पष्टः । पूर्व्ववत् ॥ २५२ ॥

---

१ दण्डनिर्माणाय वेण्वादिच्छेदायेत्याशयः ।

## ऋजुमार्गेण सिद्ध्यतोऽर्थस्य वक्रेण साधनाऽयोग इति न्यायः ॥ २५३ ॥

स्पष्टः । पूर्व्ववत् ॥ २५३ ॥

## भुजया शिरोवेष्टनेन नासिकास्पर्श इति न्यायः ॥ २५४ ॥

स्पष्टः । पूर्व्ववत् ॥ २५४ ॥

## अर्धजरतीन्यायः ॥ २५५ ॥

यत्र सर्व्वत्यागे ग्रहणे वा प्रसक्ते निर्य्युक्तिकमेकांशोपादानमंशान्तरत्यागश्च क्रियते, तत्रायं न्यायोऽवतरतीति । यथा–जरती वृद्धा स्त्री, तस्याः पतिस्तदर्द्धं मुखमात्रं गृह्णाति ह्यवयवान्तरं त्यजतीति युक्तिशून्यम्, तथा य ईशवचनत्वेनागमप्रामाण्यमुपगच्छन्ति तेषां बुद्धवचसामपि प्रामाण्यप्रसङ्गो वेदस्यापि वाऽप्रामाण्यापत्तिः । यदि वा–ईशवचनत्वसाम्येऽपि वेदस्य प्रामाण्यमप्रामाण्यं च बुद्धवचसामङ्गीक्रियते, तदेतदपि युक्तिशून्यमिति भावः ॥ २५५ ॥

## अर्द्धवैशसन्यायः ॥ २५६ ॥

यथा कश्चिद्यवनः कुक्कुटीमांसभोजनकामस्तत्सन्ततिकामश्च तद्ग्रीवादिकं छित्त्वा भुंक्ते, उदरञ्च सन्तानार्थं स्थापयतीति यथा न सम्भवति, तथा प्रकृतेपि ॥ २५६ ॥

## सुभगाभिक्षुन्यायः ॥ २५७ ॥

एकत्र विरुद्धाऽनेकधर्म्मसमावेशाऽसम्भवविवक्षायामयं न्यायोऽवतरति । एकस्मिन्नीशरूपाप्तवचने प्रामाण्याऽप्रामा-

ण्यलक्षणविरुद्धधर्म्मद्वयं न सम्भवतीति केचित्। यथा सुभगात्वं भिक्षुकत्वं पुंस्त्वञ्च यथाविधपदद्वयसामानाधिकरण्यात्प्रतीयमानमपि विरुद्धत्वादेकस्मिन्युगपन्न सम्भवति, तथा प्रकृतेऽपीति केचित् । अन्ये तु—यथा सुभगाभिक्षुकौ प्रबलघातकभयात्काञ्चिच्छरणं प्रपन्नौ । स च शरणागतत्यागदोषश्रवणात्सर्वप्रयत्नेनोभयो रक्षणे प्रबलारिकृतस्वघातभयेन त्यागे वा प्राप्तेऽपि सुभगां रक्षति, भिक्षुकं त्यजतीति यत्तत्र तस्येच्छैव नियामिका, न त्वन्यत्किञ्चिद्विनिगमकमस्ति, तथा प्रकृतेऽपि ईशवचनादुभयोः प्रामाण्ये पौरुषेयत्वान्मूलसापेक्षतया धर्म्माधर्म्मादौ तदभावादप्रमाण्ये चाप्राप्तेऽप्युक्तविभागे तार्क्किकेच्छैव नियामिकेत्यर्थमाहुः । एवं स्मृत्यादिष्वागममूलकतया प्रामाण्यं न तु ऋषिवचनत्वादिना, बृहस्पतिप्रणीतनास्तिकशास्त्राणामपि प्रामाण्यापत्तेरित्यादि स्वयमूह्यमिति ॥ २५७ ॥

## एकत्र निर्णीतः शास्त्रार्थोऽन्यत्रापि तथेति न्यायः ॥ २५८ ॥

यथा शक्रस्य बालवृद्धावस्थायां विवाहनिषेधो विधिद्वारेण निर्णीत एवं व्रतबन्धादिष्वपि ज्ञेयमिति । किञ्च—यत्र स्वमतविरुद्धेषु नानाविधवादिमतेष्वेकत्र प्रबलयुक्तिशास्त्रप्रमाणसिद्धस्वमतेन स्वमतविरुद्धवादिमतं निरस्तञ्चेत्तर्ह्यन्ये सर्वे निरस्ता ज्ञेया इति ॥ २५८ ॥

## कण्टकन्यायः ॥ २५९ ॥

तत्र कण्टकाः प्रसिद्धाः,शत्रवश्च। तत्र प्रथमपक्षे,पादप्रविष्टं कंटकं यथा दृढेन कण्टकांतरेण निष्कास्याऽनेनापि कालांतरे पीडा मा भवत्विति तमप्यग्न्यादौ प्रक्षिपन्ति। प्रथमं पादलग्नेन तदुद्धारायानुप्रविष्टेन च कृतं व्रणादिकं यथा योग्योपायैरुपशमं नयन्ति। द्वितीयकल्पे च यथा—ये शत्रवः स्वदेशोपद्रवं कुर्व्वंति तदपेक्षया प्रबलममित्रान्तरं सामदानरूपोपयोगेन वशीकृत्य तद्द्वारा तान्पराजित्य भेददण्डरूपोपायेन तमपि पराजयन्ते, तैः कृतं प्रजोत्सादनाद्युपद्रवं च स्वस्वस्थाने स्थापनादिना दूरीकुर्व्वन्ति नीतिनिपुणा नृपा इति, तथा प्रकृतेऽपि। अख्यात्यात्मख्यात्यसत्ख्यात्यन्यथाख्यातिभेदाच्चतुर्विधख्यातयसन्ति। तत्राख्यात्यसत्ख्यात्यात्मख्यातिवादानन्यथाख्यातिवादेन निरस्यन्तमपि निराकुर्व्वन्तीति। अनिर्वचनीयख्यातौ तैस्तर्कितं दूषणगणमुद्धरन्ति इति न्यायोदाहरणसंगतिः। तत्प्रकारस्तु ग्रंथविस्तरभयान्नेहोपन्यस्त इति ॥ २५९ ॥

## जलकतकरेणुन्यायः ॥ २६० ॥

अयं बाध्यं प्रबाध्य स्वयमेव बाधकनिवृत्तिविवक्षायां प्रवर्त्तते। यथा सपङ्कजले प्रक्षिप्ताः कतकस्यौषधिविशेषस्य 'निर्म्मली'इति भाषायां प्रसिद्धस्य रेणवो रजांसि तस्मात्सपंकजलात्पंकं विलाप्य स्वयमेव विलीयन्ते, तथा तत्त्वज्ञानं सविलासज्ञानं निवर्त्य स्वयमेव निवर्त्तत इति ॥ २६० ॥

## दग्धेन्धनवह्निन्यायः ॥ २६१ ॥

यथा–दग्धानीन्धनानि येन सोऽग्निर्य्यथा स्वयमेव प्रशाम्यतीति । उक्तञ्च–"यथा निरिन्धनो वह्निस्स्वयोनावुपशाम्यति । तथा वृत्तिक्षयाच्चित्तं स्वयोनावुपशाम्यति" ॥ इति । अस्यार्थः-निरिन्धनो दग्धकाष्ठो वह्निस्स्वयोनौ स्वकारणे तेजोमात्र उपशाम्यति, ज्वालादिरूपं विशेषाकारं परित्यज्य तेजोमात्ररूपे यथावतिष्ठते, तथा तेनैव प्रकारेण चित्तमन्तःकरणमपि वृत्तिक्षयान्निरोधसमाध्यभ्यासेन राजसादिसकलवृत्तिनाशात्स्वकारणे सत्त्वमात्र उपशाम्यति, सत्त्वमात्रावशेषं भवतीत्यर्थः ॥ २६१ ॥

## यन्निवृत्तिमद्वस्तु तदुत्पत्तिमदपीति न्यायः ॥ २६२ ॥

'ध्रुवं जन्म मृतस्य च' इति भगवद्वाक्यमस्मिन्न्याये बीजम् ॥ २६२ ॥

## विशिष्टधर्म्मे वृत्तस्य विशेषणप्रवृत्तित्वनियम इति न्यायः ॥ २६३ ॥

यथा–दृश्यते हि कुण्डली यातीत्यादौ विशिष्टवृत्तेर्धर्म्मस्य गत्यादेः कुण्डलादिरूपविशेषणवृत्तित्वमिति । कुण्डली भुंक्ते इत्यादौ तु कुण्डलादिरूपलक्षणत्वाद्विशेष्यस्यैव भोजनान्वय इति ॥ २६३ ॥

## व्यापकव्यावृत्त्या व्याप्यव्यावृत्तिरिति न्यायः ॥ २६४ ॥

स्पष्टः । अन्यूनदेशकालवृत्तित्वं व्यापकत्वमपरिच्छिन्नत्वमसीमत्वमिति यावत् । विपूर्वकः 'आप्लृ—व्याप्तौ' ततः "ण्वुल्तृचौ" इति ण्वुल्, व्याप्नोतीति व्यापकः । अनधिदेशकालनियमं व्याप्यमिति, व्याप्तुं योग्यमित्यर्थः । एवञ्च व्यापकाभावे व्याप्याभावो न्याय्य इति सिद्धम् । यथा—आकाशाभावेशब्दाभावः । अयं यत्राधाराधेयभावो नित्यस्तत्रप्रवर्तत इति ॥ २६४ ॥

## पदार्थः पदार्थेनान्वेति न पदार्थैकदेशेनेति न्यायः ॥ २६५ ॥

अयं न्यायो मुक्तावल्यां लक्षणाप्रकरणे निर्दिष्टः । तथाहि—यदि एकदेशान्वयो न स्वीक्रियते तदा गम्भीरायां नद्यां घोष इत्यादौ नदीपदस्य गम्भीरनदीतीरे लक्षणा, गम्भीरपदं तु तात्पर्य्यग्राहकमिति संक्षेपः । विस्तरभिया नात्र प्रपञ्चितः ॥ २६५ ॥

## व्यक्तिन्यायः ॥ २६६ ॥

अयं न्यायः पूर्वोक्तन्यायस्यापवादः । तथाहि—स्वीक्रियते हि जातिविशिष्टव्यक्तौ शब्दशक्तिमुपगच्छद्भिस्तार्किकैरपि । गौरनित्येत्यादौ पदार्थैकदेशस्यापि व्यक्तेरनित्यस्यान्वय इति ॥ २६६ ॥

## श्वश्रूनिर्गच्छोक्तिर्न्यायः ॥ २६७ ॥

यत्र परकृतनिषेधं निराकृत्य स्वयं निषेधति, तत्रायं प्रवर्तते। यथा—भिक्षामटते बटवे भिक्षाम्प्रत्याचक्षाणां स्वस्नुषां भर्त्सयित्वा श्वश्रूः पुनस्तमाहूय सम्पागते तस्मिन्नास्ति भिक्षा निर्गच्छेति तथैव प्रत्याचष्टे, तथा प्रकृतेऽपि ॥ २६७ ॥

## नारिकेलफलाम्बुन्यायः ॥ ३६८ ॥

यथा दृढावयवसँय्योगवति नारिकेलफले कथं जलमायातमिति न तर्कगोचरतामेति, तथाऽऽगता लक्ष्मीर्नैवं लक्ष्यते। उक्तञ्च—"आगता लक्ष्यते नैव नारिकेलफलाम्बुवत्" इति। लक्ष्मीरिति शेषः ॥ २६८ ॥

## गजभुक्तकपित्थन्यायः ॥ २६९ ॥

यथा—गजभुक्तं हि कपित्थफलं तदुदरादभग्नमेव निःसरति, तच्च भग्नं सन्मज्जाशून्यं प्रक्षालितमिवाभातीति प्रसिद्धम्। तथा च—यथा निच्छिद्रादतिकठिनात्तस्माददतिसान्द्रं तन्मज्जादि कथं निस्सृतमिति न तर्कगोचरतामेति, तथा गतापि लक्ष्मीर्नैव लक्ष्यते। उक्तञ्च—"गता विलक्ष्यते नैव गजभुक्तकपित्थवत्" इति ॥ २६९ ॥

## अन्यद्भुक्तमन्यद्वान्तमिति न्यायः ॥ २७० ॥

यथा—विघ्नविघाताय कृतं मङ्गलं शिष्यशिक्षायै निबध्नातीत्यत्र विघ्नध्वंसम्प्रति मङ्गलस्य कारणताऽभिहिता

सिद्धान्तिना । तत्र वादिना तु—ननु मङ्गलं न विघ्नध्वंसं प्रति न वा समाप्तिं प्रति कारणम्, विनापि मङ्गलं नास्तिकादीनां ग्रंथे निर्विघ्नपरिसमाप्तिदर्शनादित्युक्तम् । अत्र वादिमतेऽभुक्तवान्तापत्तिर्दोषः प्रकृतन्यायत आयाति, न वा समाप्तिं प्रतीत्युक्तेरिति ॥ २७१ ॥

## आम्रान्पृष्टः कोविदारानाचष्ट इति न्यायः ॥ २७१ ॥

अयं हि—"अर्थवत्—" १ । २ । ४५ । इति सूत्रमहाभाष्येऽभिहितः । तथाहि—"अर्थवत्ता नोपपद्यते केवलेनावचनात् । अर्थवत्ता नोपपद्यते वृक्षशब्दस्य । किं कारणम् । केवलेनावचनात् । न केवलेन वृक्षशब्देनार्थो गम्यते । केन तर्हि, सप्रत्ययकेन । न वा प्रयत्येन नित्यसम्बन्धात्केवलस्याप्रयोगः । न वा एष दोषः । किङ्कारणम् । प्रत्ययेन नित्यसम्बन्धात् । नित्यसम्बन्धावेतावर्थौ प्रकृतिः, प्रत्यय इति । प्रत्ययेन नित्यसम्बन्धात्केवलस्य प्रयोगो न भविष्यति । अन्यद्भवान्पृष्टोऽन्यदाचष्टे । आम्रान्पृष्टः कोविदारानाचष्टे" इति ॥ २७१ ॥

## स्वप्नव्याघ्रन्यायः ॥ २७२ ॥

यथा—स्वप्ने दृष्टो व्याघ्रस्स्वप्ने विलाप्य तत्र वर्तमानेन बाध्यरूपेण स्वयमपि विलीयते, एवं प्रकृतेपि ॥ २७२ ॥

## स्वभावो दुरतिक्रम इति न्यायः ॥ २७३ ॥

स्पष्टः ॥ २७३ ॥

## इषुवेगक्षयन्यायः ॥ २७४ ॥

यथा धनुषः सकाशान्मुक्तस्येषोर्बाणस्य कर्म्मणः प्रारब्धवेगक्षयादेव क्षय इति प्रसिद्धं, तथा प्रकृतेपि ॥ २७४ ॥

## चक्रभ्रमणन्यायः ॥ २७५ ॥

यथा चक्रभ्रान्तिहेतौ कुलालव्यापारे निवृत्तेऽपि भ्रांतिक्षयो वेगक्षयादेव भवति, तथा प्रकृतेऽपि ॥ २७५ ॥

## कारणनाशे कार्य्यनाश इति न्यायः ॥२७६॥

केचित्–समवायिकारणनाशे कार्य्यनाशो यथा तन्तुनाशे पटनाश इति वदन्ति । परे तु–असमवायिकारणनाशेऽपि कार्य्यनाशो यथा तन्तुसँय्योगनाशे पटनाश इति वदन्तीति । अन्यच्च–योगबुद्ध्यभावे तत्कार्य्यभूतो मोक्षोऽपि न सम्भवति, तथान्यत्रापि ॥ २७६ ॥

## योग्यो योग्येन सम्बध्यत इति न्यायः ॥ २७७ ॥

यथा–दृश्यते हि लोकेऽन्योन्ययोग्यानामेव नरपशुपक्षिप्रभृतीनां मिथुनत्वादिसम्बन्ध इति ॥ २७७ ॥

## कार्य्यनाशे कारणनाश इति न्यायः ॥२७८॥

यथा पटनाशे तन्तुनाश इत्यादि ॥ २७८ ॥

## यावच्छिरस्तावती शिरोव्यथेति न्यायः ॥२७९॥

स्पष्टः ॥ २७९ ॥

## हस्तामलकन्यायः ॥ २८० ॥

यथा हस्ते स्थितमामलकं फलमसन्दिग्धं दृश्यते, तथा "तत्त्वमसि" इत्यादिमहावाक्यकर्तृकम्र्मवासनाभ्यां प्रतिबंधरहितं सत्पूर्व्वं परोक्षतया प्रकाशिते तत्त्वे परोक्षमपरोक्षतया तत्त्वावभासनसमर्थं ज्ञानं जनयतीति भावः। उक्तञ्च पंचदश्यांम्—" वाक्यमप्रतिबद्धं सत्प्राक्परोक्षावभासिते। करामलकवद्बोधमपरोक्षं प्रसूयते ॥" इति ॥ २८० ॥

## करस्थबिल्वन्यायः ॥ २८१ ॥

अयं पूर्व्ववत् ॥ २८१ ॥

## अहिनिर्लयनीन्यायः ॥ २८२ ॥

अहिर्निर्लीयतेऽस्यां साऽहिनिर्लयनी। सर्पत्वचेत्यर्थः। यथा सर्पः सत्वचं प्रागात्मतयोपगतमपि त्यागानन्तरं स्वसमीपे वर्तमान ( ना ) मपि न कदाचिदात्मत्वेन जानाति, तथा देहं बोधात्प्रागात्मत्वेनाभिमतमपि सति बोधे न कदाप्यात्मतया पश्यतीति भावः ॥ २८२ ॥

## दग्धरशनान्यायः ॥ २८३ ॥

रशना रज्जुः। दन्त्यमध्योऽपि रसनाशब्दः। यथा दग्धरज्जुः पूर्ववत्त्रिगुणत्वादिरूपेण प्रतीयमानापि निस्सारा बुध्यते बुधैः, तथा प्रपञ्चं संसारं प्रतीयमानमपि निस्सारं वेत्ति बुध इति ॥ २८३ ॥

## दग्धपत्रन्यायः ॥ २८४ ॥

पूर्ववत्। यथा पत्रस्य दग्धत्वेऽपि पूर्वाकारेणावस्थानं

गृह्यते, एवं यत्र वस्तुनो दाहेपि तदाकारप्रतीतिः, तत्रास्य प्रवृत्तिः ॥ २८४ ॥

## चित्रपटन्यायः ॥ २८५ ॥

यथा—धौतो १ घीट्टतो २ लाञ्छितो ३ रञ्जित ४ इत्येवं-प्रकाराश्चतस्रोवस्था यथा चित्रपटे ह्युपलभ्यन्ते, तथा पर-मात्मन्यपि चिदं १ तर्य्यामी २ सूत्रात्मा ३ विराट् ४ चेत्य-वस्थाचतुष्टयं बोद्धव्यमित्यर्थः। उक्तं च पंचदश्याम्—"यथा चित्रपटे दृष्टे ह्यवस्थानां चतुष्टयम्। परमात्मनि विज्ञेयं तथा-ऽवस्थाचतुष्टयम् ॥ यथा धौतो घट्टितो हि लाञ्छितो रञ्जितः पटः । चिदन्तर्य्यामिसूत्रात्मा विराडात्मा तथेर्य्यते ॥ स्वतः शुभ्रोऽत्र धौतः स्याद्घट्टितोन्नविलेपनात् । मष्याकारैर्ला-ञ्छितस्स्याद्रञ्जितो वर्णपूरणात् ॥ " इति ॥ २८५ ॥

## चम्पकपटन्यायः ॥ २८६ ॥

यथा दूरीकृतेष्वपि पटनिष्ठचम्पकपुष्पेषु पटे उपलभ्य-मानो गंधो निराश्रयगुणावस्थायोगात्स्वाश्रयं द्रव्यं कल्प-यति, तथा प्रकृतेऽपि ॥ २८६ ॥

## अपसारिताग्निभूतलन्यायः ॥ २८७ ॥

पूर्ववत् ॥ २८७ ॥

## शङ्कत्खातदंष्ट्रोरगन्यायः ॥ २८८ ॥

यथा उत्पाटितदन्तपंक्तिर्नागो नापकारक्षमो भवति, तथा नाशितस्वसहायकशत्रुरपि नहि शक्नोत्यपकर्तुमिति ॥२८८॥

## चित्राङ्गनान्यायः ॥ २८९ ॥

यथा चित्ररूपाङ्गना स्त्री दृश्यमाना न चुम्बनाऽऽलिंगनादिफलं जनयितुं शक्नोति, तथा निरहंकारतया तत्त्वविदा कृतान्यपि विहितनिषिद्धानि कर्म्माणि स्वफलजन्यदेहान्तरमारब्धुं न क्षमन्ते। अत एव तत्त्ववित्स्वकृतकर्म्मफलेन न युज्यत इति भाव इति वदन्ति ॥ २८९ ॥

## चित्रामृतन्यायः ॥ २९० ॥

पूर्व्ववत् ॥ २९० ॥

## चित्रानलन्यायः ॥ २९१ ॥

पूर्व्ववत् ॥ २९१ ॥

## आदावन्ते च यन्नास्ति वर्त्तमानेऽपि तत्तथेति न्यायः ॥ २९२ ॥

यथा—"एष वन्ध्यासुतो याति खपुष्पकृतशेखरः। मृगतृष्णाम्भसि स्नातः शशशृङ्गधनुर्धरः॥" इत्यत्र वन्ध्यासुतादीनां त्रिषु कालेष्वभावः ॥ २९२ ॥

## अदग्धदहनन्यायः ॥ २९३ ॥

यथा न हि वह्निर्दग्धं दहति किन्त्वदग्धमिति, तथा प्रकृतेपि। "इको झल्" १।२।९। इति सूत्रमहाभाष्येऽप्ययमभिहितः। तद्यथा—"अकृतकारि खल्वपि शास्त्रमग्निवद्भवति। तद्यथा—अग्निर्य्यददग्धं तद्दहति, यद्दग्धं तन्न दहति" इति ॥ २९३ ॥

धनञ्जयन्यायः ॥ २९४ ॥

यथाहुः—"नित्यबोधपरिपीडितं जगद्विभ्रमं तुदति वाक्यजा मतिः। वासुदेवनिहतं धनञ्जयो हन्ति कौरवकुलं यथा पुनः ॥" इति ॥२९४ ॥

ऊषरवृष्टिन्यायः ॥ २९५ ॥

समुद्रवृष्टिन्यायः ॥ २९६ ॥

जलताडनन्यायः २९७ ॥

जलमन्थनन्यायः ॥ २९८ ॥

शवोद्वर्त्तनन्यायः ॥ २९९ ॥

मृतमारणन्यायः ॥ ३०० ॥

पिष्टपेषणन्यायः ॥ ३०१ ॥

अन्धदर्पणन्यायः ॥ ३०२ ॥

श्वपुच्छोन्नामनन्यायः ॥ ३०३ ॥

काकदन्तपरीक्षा ( गवेषण ) न्यायः ॥३०४॥

काकस्य दन्तास्सन्ति न वा, तेषां शौक्ल्यं न वेति॥३०४॥

गर्द्दभरोमगणनान्यायः ॥ ३०५ ॥

अरण्यरोदनन्यायः ॥ ३०६ ॥

मूर्खसेवनन्यायः ॥ ३०७ ॥

बधिरकर्णजपन्यायः ॥ ३०८ ॥

न हि विवाहानन्तरं वरपरीक्षेतिन्यायः ३०९॥

## कृते कार्य्ये किम्मुहूर्त्तप्रश्नेनेति न्यायः ३१०

## सुप्तडिम्भमुखचुम्बनन्यायः ॥ ३११ ॥

ऊषरवृष्टिप्रभृतयस्सप्तदश १७ न्याया वैपर्य्ययबोधकाः। यत्र क्रिया निष्फला, तत्रैवेषां प्रवृत्तिरिति भावः। स्पष्टार्थास्सर्वे ॥ २९५॥ ३११ ॥

## सैषा महतो वंशस्तम्बाल्लट्वाऽनुकृष्यत इति न्यायः ॥ ३१२ ॥

अयं यत्र वृथा कार्य्यकरणे स्वल्पफलककमर्म्मणि च महाश्रमकरणम्, तत्र प्रवर्तते। "ऋलृक्" सूत्रमहाभाष्ये ह्युदाहृतश्च। तथाहि–"स एष सूत्रभेदेन लृकारोपदेशः प्लुत्याद्यर्थः सन्प्रत्याख्यायते, सैषा महतो वंशस्तम्बाल्लट्वाऽनुकृष्यते" इति। "लट्वा करंजभेदे स्यात्फले वाद्ये खगान्तरे" इति मेदिनी। 'लट्वा ग्रामचटके' इति वा। 'लट्–लौल्ये' इति धातोः "अशियुषिलटिकणिखटिविशिभ्यः क्वन्" इत्यौणादिकः क्वन्। "नेड्वशि कृति" इतीडभावः ॥ ३१२ ॥

## तालसर्प्पन्यायः ॥ ३१३ ॥

यथाऽवरोहणसमये ऊर्द्ध्वमुखैस्तालग्रन्थिभिः सर्प्पोदरविदारणात्तालारोहणं सर्प्पस्य स्वनाशायेति प्रसिद्धमिति तथा प्रकृतेऽपि ॥ ३१३ ॥

## कडारान्यायः ॥ ३१४ ॥

यत्र बहुवचनेनाऽऽदित्वं ज्ञायते, तत्रायं प्रवर्त्तते। यथा

"कडाराः कर्म्मधारये" २। २। ३८। इति पाणिनिसूत्रे बहुवचनेन कडारादय इति ज्ञायते, तथा "निवीतमापृष्ठदेशावलम्बग्राम्यधर्मेषु" इति निगमपरिशिष्टे दर्शनात्-ग्राम्यधर्मो मैथुनम्। कडारा इतिवद्बहुवचनमाद्यर्थे। मूत्रपुरीषयोरुत्सर्गपरिग्रह इत्याचाराऽऽदर्शः॥ ३१४॥

## रोगिन्यायः॥ ३१५॥

यथा रोगिनाशे रोगस्याऽपि नाशस्तथा प्रकृतेऽपि॥३१५॥

## अश्वतरीगर्भन्यायः॥ ३१६॥

यथा—वडवातो गर्द्दभादुत्पन्नाऽश्वतरी, तस्या गर्भो यथा तन्नाशाय भवति, तथा प्रकृतेऽपि। उक्तञ्च—"सकृद्दुष्टमपीष्टं यः पुनस्संधातुमिच्छति। स मृत्युमुपगृह्णाति गर्भमश्वतरी यथा॥" इति। किञ्च—नन्वज्ञानकार्य्यान्तःकरणवृत्त्यात्मकं ज्ञानं कथं स्वकारणीभूताऽज्ञाननाशाय स्यादुपजीव्यविरोधादिति चेत्—प्रकृतन्यायादवेहि॥ ३१६॥

## वृश्चिकीगर्भन्यायः॥ ३१७॥

पूर्व्ववत्॥ ३१७॥

## कदलीफलन्यायः॥ ३१८॥

पूर्व्ववत्॥ ३१८॥

## सिंहीक्षीरन्यायः॥ ३१९॥

यथा सुवर्णपात्र एव सिंहीक्षीरं तिष्ठति फलाय च भवति, तथा सद्गुरूपदेशो हि शमादिसाधनसम्पन्ने सच्छिष्य एव प्रतिष्ठां लभते॥ ३१९॥

व्याघ्रीक्षीरन्यायः ॥ ३२० ॥

पूर्व्वन्यायपर्य्यायान्तरम् ॥ ३२० ॥

शूर्प्पन्यायः ॥ ३२१ ॥

यथा शूर्प्पो हि बुसादि त्यक्त्वा शुद्धमन्नमवशेषयाति, तथा शिष्यो हि गुरूणां गुणानेव गृह्णाति, न तु दोषान्॥३२१॥

इन्दुक्ष्वेडन्यायः ॥ ३२२ ॥

उक्तं च-"गुणदोषौ बुधो गृह्णन्निन्दुक्ष्वेडाविवेश्वरः। शिरसा श्लाघते पूर्व्वं परं कण्ठे नियच्छति॥" इति ॥३२२॥

भ्रमरन्यायः ॥ ३२३ ॥

यथा भ्रमरो हि पुष्पाणां कण्टकादींस्त्यक्त्वा गन्धगुणमात्रमादत्ते, तथा प्रकृतेऽपि ॥ ३२३ ॥

भ्रमरन्यायः ॥ ३२४ ॥

यथा भ्रमरो हि प्रतिपुष्पं गन्धमादत्ते, निर्ग्गन्धीभूतं परित्यज्याऽन्यत्पुष्पमवलम्बते, तथा प्रकृतेऽपि ॥ ३२४ ॥

भ्रमरन्यायः ॥ ३२५ ॥

यथा भ्रमरो हि स्वदंशेन कठिनकाष्ठमपि सच्छिद्रीकरोति, परन्तु स्वप्रीतिपात्रकोमलाऽवयवसुकुमारकमलकुसुमान्तः-पाती स्वजातिक्रियां त्यजतीति, तथा सन्मित्रं सन्मित्रम्प्रति वर्त्तते ॥ ३२५ ॥

पतङ्गदीपकन्यायः ॥ ३२६ ॥

यथा पतङ्गाख्यकीटविशेषः स्वप्रीतिपात्रदीपके निजाङ्ग-

दाहकत्वसत्त्वेऽपि तत्र पतनं प्रीतिवशमापन्नो नो जहाति, तथा सन्मित्रस्य व्यवहारः ॥ ३२६ ॥

## चालनीन्यायः ॥ ३२७ ॥

यथा चालनी सारं परित्यज्याऽसारमात्रं गृह्णाति, तथा प्रकृतेऽपि । " क्षुद्रच्छिद्रशतोपेतं चालनं तितउः स्मृतः " इति कात्यः । ' चालनी तितउः पुमान् ' इत्यमरश्च । चाल्यते धान्याद्यनया । चलेर्णिजन्तात्ल्युट्, ङीप् । छ (च) लनीति-परूण इति च भाषा । किञ्च-चालनीभ्रामणे तत्स्थतंडुलादीनां तच्छिद्रद्वारा सर्व्वेषां यथा पतनम्, एवं क्वचित्स्थितवस्तूनां सर्वेषां लक्षणादिबहिर्भावो यत्र सम्भाव्यते, तत्राऽस्य प्रवृत्तिः । यथा-व्यापकतालक्षणे साध्यप्रतियोगिताकाभावप्रवेशे महानसीयवह्न्यधिकरणे महानसीयवह्न्यभावस्य च सत्त्वेन वह्निप्रतियोगिकाभावस्य तत्तदधिकरणे सत्त्वात्सर्वेषां वह्नीनां व्यापकतालक्षणबहिर्भाव इति ॥ ३२७ ॥

## मक्षिकान्यायः ॥ ३२८ ॥

यथा मक्षिका हि सर्व्वं देहं परिहृत्य व्रणस्थानमेवाऽवलम्बते, तथा दुष्टोऽपि ॥ ३२८ ॥

## जलौकान्यायः ॥ ३२९ ॥

यथा जलौका हि स्त्रीस्तनाग्रे लग्ना क्षीरं त्यक्त्वा रुधिरं पिबति, तथा दुष्टोऽपि ॥ ३२९ ॥

## रासभरुतन्यायः ॥ ३३० ॥

यथा गर्द्दभशब्द आदावत्युच्चैरुपश्रूयते, पश्चान्मन्दतां प्राप्नुवन्क्रमेण परिक्षीयते, तथा नीचप्रीतिरपि पुरा वृद्धिं प्राप्य पश्चात्क्रमेण क्षीयत इति भावः ॥ ३३० ॥

## पूर्वाह्णच्छायान्यायः ॥ ३३१ ॥

यथा दिनपूर्व्वार्द्धच्छाया प्रथमं महती पश्चात्क्षीणा, तथा खलस्य मैत्री ज्ञातव्येति भावः ॥ ३३१ ॥

## पराह्णच्छायान्यायः ॥ ३३२ ॥

यथा दिनपरार्द्धच्छाया प्रथमं लघ्वी पश्चान्महती, तथा सज्जनमैत्री। उक्तं च–"आरम्भगुर्व्वी क्षयिणी क्रमेण लघ्वी पुरा वृद्धिमती च पश्चात्। दिनस्य पूर्व्वार्द्धपरार्द्धभिन्ना छायेव मैत्री खलसज्जनानाम् ॥" इति ॥ ३३२ ॥

## कुक्कुटध्वनिन्यायः ॥ ३३३ ॥

यथा कुक्कुटध्वनिर्ह्रस्वदीर्घप्लुतभेदेन क्रमेण वर्द्धते, तथा साधुमैत्री। कुक्कुटरुते उकारे एकद्वित्रिमात्रत्वप्रसिद्धेरकारादयो नोक्ता इति "ऊकालोऽज्झ्रस्वदीर्घप्लुतः" १।२।२७। इति सूत्रशब्देन्दुशेखर इति ॥ ३३३ ॥

## इक्षुदण्डन्यायः ॥ ३३४ ॥

यथेक्षवग्रात्पर्व्वणिपर्वणि रसोत्कर्षस्तथा सज्जनमैत्र्यपि क्रमश उदर्कतां प्राप्नोतीति। उक्तञ्च–"इक्षोरग्रात्क्रमशः

पर्व्वणिपर्व्वणि यथा रसविशेषः, तद्वत्सज्जनमैत्री, विपरीतानां तु विपरीता इति ॥ ३३४ ॥

## न हि पवित्रं स्याद्गोक्षीरं श्वदृतौ धृतमिति न्यायः ॥ ३३५ ॥

असत्पात्रे सदुपदेशोऽपि व्यर्थतां यातीति भावः ॥३३५॥

## स्तनंधयन्यायः ॥ ३३६ ॥

यथा स्तनन्धयः शिशुः आगलं स्तनं पाययित्वा मृद्वादिगुणयोगिनि तल्पे शायितः स्वकीयादिज्ञानशून्यत्वेन रागादिरहितस्सन्सुखमूर्त्तिरेवाऽवतिष्ठते, तथा ब्रह्मानन्दैकतत्परः पुरुषो ब्रह्मानन्दैकभाग्भवतीति ॥ ६३६ ॥

## राजानुसृतविवाहप्रवृत्तभृत्यन्यायः ॥३३७॥

यथा विवाहप्रवृत्तौ हि राजाप्यनुगम्यत इति प्रसिद्धम् ॥ ३३७ ॥

## कांस्यभोजनन्यायः ॥ ३३८ ॥

अस्याऽयमर्थः–यथा मया नित्यं गुरूच्छिष्टं भोक्तव्यं, कांस्यपात्रे च भोक्तव्यमिति नियमवतो विनेयस्य नियमाऽभंगाय गुरुर्न्नित्यं कांस्यपात्रे भुंक्त इति। यद्यप्ययं शास्त्रीयस्तथाप्येतद्व्यवहारस्य लौकिकत्वात्सुन्दोपसुन्दन्यायवल्लौकिकेषु परिगणित इति ॥ ३३८ ॥

## वैशेष्यात्तु तद्वाद इति न्यायः ॥ ३३९ ॥

अयमपि मल्लग्रामादिरूपलौकिकव्यवहारमूलकत्वाल्लौकिकेषु गणनीय इति ॥ ३३९ ॥

## भूलिङ्गशकुनिन्यायः ॥ ३४० ॥

हिमाचलप्रान्तदेशे भूलिङ्गाख्यः पक्षी—मा साहसं कुर्व्विति पुनःपुनरुच्चैर्व्वदन् सिंहदंष्ट्राग्रलग्नं मांसं जिघृक्षतीति प्रसिद्धम्, तथा परोपदेशमात्रकुशलः स्वयञ्च यथेष्टाचरणशीलो दाम्भिकस्त्याज्य एवेति भावः । उक्त च महाभारते-"न गाथा गाथिनं शास्ति बहु चेदपि गायति । प्रकृतिं यान्ति भूतानि भूलिङ्गशकुनिर्य्यथा ॥" इति ॥३४०॥

## अंधस्यैवान्धलग्नस्य विनिपातः पदेपद इति न्यायः ॥ ३४१ ॥

यथान्धानुयायिनोऽन्धस्य प्रतिपदं विनिपातो भवति, तथा मुर्खाऽनुयायिमुर्खस्य नाभीष्टसिद्धिः,किन्त्वनर्थप्राप्तिरेव भवतीति भावः ॥ ३४१ ॥

## प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरमिति न्यायः॥ ३४२ ॥

पङ्कलेपने प्रक्षालनमपेक्ष्य पङ्कस्पर्शनमेव न कर्तव्यमिति लोकप्रसिद्धिवदन्यत्राप्यानिष्टसाधनस्य कारणान्तरेण निवारणमपेक्ष्यांऽनिष्टसाधनमेव न कर्तव्यमिति यत्र विवक्षा तत्राऽस्य प्रवृत्तिरिति ॥ ३४२ ॥

## पङ्कप्रक्षालनन्यायः ॥ ३४३ ॥

अयं पूर्व्ववत् ॥ ३४३ ॥

## अकृतव्यूहाः पाणिनीया इति न्यायः ॥३४४॥

न कृतो विशिष्ट ऊहो यैस्ते अकृतव्यूहाः। पाणिनीया इति पदमुपलक्षणमात्रम्—बुद्धिमन्त ऊहाऽपोहकुशलाः पुरुषा निमित्तं विनाशोन्मुखं दृष्ट्वा तत्प्रयुक्तं कार्य्यं न कुर्वन्तीत्यर्थः ॥ ३४४ ॥

## श्वः कर्तव्यमद्यैव कुर्वीत न्यायः ॥ ३४५ ॥

"श्वः कार्य्यमद्य कुर्वीत पूर्वाह्णे चाऽपराह्णिकम्। न हि मृत्युः प्रतीक्षेत कृतं वाप्यथ नाऽकृतम् ॥" इति ॥ ३४५ ॥

## स्वकरकुचन्यायः ॥ ३४६ ॥

यथा स्वकरेण स्वकुचयोर्मर्द्दनं कुर्वती युवती न[1] सुखं लभते, तथा जिज्ञासुरपि न स्वतंत्रविचारेण ज्ञानमाप्नोति, किन्त्वाचार्य्यद्वारा तत्त्वज्ञानं प्राप्नोति "आचार्य्यवान् पुरुषो वेद" इति श्रुतेरिति ॥ ३४६ ॥

## भिक्षुभियाऽस्थाल्यनधिश्रयणन्यायः॥३४७॥

यथा भिक्षुकभयेन कोपि स्थाल्याधिश्रयणं न करोति, तथा स्वतंत्रविचारेण तत्त्वज्ञानासम्भवेनोपदेशकानाञ्च प्रतारकत्वशङ्कास्पदत्वात्प्रत्युत तेभ्योऽनर्थप्राप्तिशङ्कासम्भवेन तद्भयेन त्याज्य एव गुर्वधीनो ब्रह्मविचार इति न समीचीनम्। किन्तु शास्त्रोक्तप्रकारेण सम्यक्परीक्षया साधुत्वाऽसाधुत्वनिर्द्धारणादसाधुत्यागसाध्वाश्रयणयोः सम्भवे-

---

१—उक्तञ्च—"निजगुणगरिमा सुखाऽऽकरः स्यात्स्वयमनुवर्णयतां सतां न तावत्। निजकरकमलेन कामिनीनां कुचकलशाऽऽकलनेन को विनोदः ॥" इति।

नाऽसाधुकृतप्रतारणभिया ब्रह्मविचारो न त्याज्य इति भावः ॥ ३४७ ॥

## मृगभियासस्याऽनाश्रयणन्यायः ॥३४८॥

पूर्ववत् ॥ ३४८ ॥

## यूकाभियाकन्थाऽनाश्रयणन्यायः ॥ ३४९ ॥

पूर्ववत् । उक्तञ्च—"काव्ये शुभे विरचिते खलु नो खलेभ्यः कश्चिद्गुणो भवति यद्यपि सम्प्रतीह । कुर्य्यां तथापि सुजनार्थमिदं यतः किं यूकाभयेन परिधानविमोक्षणं स्यात् ॥" इति ॥ ३४९ ॥

## एकदेशविकृतमनन्यवद्भवतीति न्यायः॥३५०॥

यथा श्वा कर्णे पुच्छे वा छिन्ने श्वैव भवति,नाऽश्वो न गर्द्दभ इति,तथा प्रकृतेऽपि। अयं हि-"स्थानिवदादेशोऽनल्विधौ" १ ।१। ५६ । इति सूत्रमहाभाष्येऽभिहितः । तथाहि—"एकदेशविकृतस्योपसंख्यानम् । एकदेशविकृतस्योपसङ्ख्यानं कर्तव्यम्।किं प्रयोजनम्। पचतु,पचंतु तिङ्ग्रहणेन ग्रहणं यथा स्यात । एकदेशविकृतस्याऽनन्यत्वात्सिद्धम् । एकदेशविकृतमनन्यवद्भवतीति तिङ्ग्रहणेन ग्रहणं भविष्यति । तद्यथा—श्वा कर्णे पुच्छे वा छिन्ने श्वैव भवति, नाऽश्वो न गर्द्दभः" इति ॥ ३५० ॥

## स्फटिकलौहित्यन्यायः ॥ ३५१ ॥

यथा स्फटिके जपापुष्पादिसान्निधिकृतलौहित्यस्य

तन्निवृत्तौ निवृत्तिः, तथाऽऽत्मेत्युपाधितंत्रस्य जीवस्य तद्बाधात्तद्बाध इति ॥ ३५१ ॥

## आकाशपरिच्छिन्नन्यायः ॥ ३५२ ॥

यथा घटाद्यवच्छेदकृतस्याकाशे परिच्छिन्नत्वस्य घटाद्यभावेऽभावः, तथा पूर्ववत् ॥ ३५२ ॥

## देहाधोमुखत्वन्यायः ॥ ३५३ ॥

यथा वाताद्युपाधिकृतस्य स्वदेहेऽधोमुखत्वादेस्तदपगमेऽपगमः; तथा पूर्ववत् ॥ ३५३ ॥

## स्वयमशक्तः कथं परान्साधयिष्यतीति न्यायः ॥ ३५४ ॥

यथा—चाक्षुषदर्शनाभावमितस्य राहोः केतोर्वा शुभाऽशुभफलदातृत्वसामर्थ्यं नास्तीति केषांचिज्ज्योतिर्विदाम्मतम् ॥ ३५४ ॥

## अशक्तास्तत्पदं गन्तुं ततो निन्दां प्रकुर्वत इति न्यायः ॥ ३५५ ॥

स्पष्टः ॥ ३५५ ॥

## कर्णकौन्तेयन्यायः ॥ ३५६ ॥

यथा कर्णः कौन्तेय एव सन्नपि कौन्तेयत्वाज्ञानाद्राधेयमात्मानं मेने, पश्चादाप्तोपदेशेन कौन्तेयमात्मानं मन्यते स्म, तथा ब्रह्मैव स्वस्वरूपाज्ञानाज्जीवमात्मानं मन्यते। गुरूपदिष्टमहावाक्यजबोधादबोधबाधे ब्रह्मैवाऽहमिति मन्यत इति ॥ ३५६ ॥

## राजपुत्रव्याधन्यायः ॥ ३५७ ॥

यथा कश्चिद्राजपुत्रः स्वमातृसपत्न्या कयाचित्क्वचिन्निक्षितो व्याधवंशं प्राप्तः । तेन च पुत्रत्वेन पालितः स व्याधमेवात्मानं मन्यते स्म, पश्चात्कथंचिद्राजपुत्रानिश्चयवतां मंत्रिणामुपदेशाद्राजानमात्मानं मत्वा पैतृकसिंहासने प्रतिष्ठां प्रापेति पूर्ववत् ॥ ३५७ ॥

## सिंहमेषन्यायः ॥ ३५८ ॥

यथा सिंहशावकोपि कथंचिद्ग्रामीणवशं प्राप्तो मेषैस्सह चरन्युवापि सन्, विविधरूपकृतलम्बकर्णत्वालम्बकर्णत्वशृङ्गित्वाऽशृङ्गित्वादिकृतं विशेषं पश्यन्नात्मानमपि मेषविशेषं मेने; दूर्वादिकं च बुभुजे, तथा प्रकृतेऽपि ॥ ३५८ ॥

## प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तत इति न्यायः ॥ ३५९ ॥

अयं न्यायो भट्टाचार्यैर्विवृतः । तथाहि—"प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते । जगच्च सृजतस्तस्य किन्नाम न कृतं भवेत् ॥" इति । अयमभिप्रायः—परमेश्वरस्य जगन्निर्माणे प्रवृत्तिःकिमर्था-स्वार्था,परार्था वा।आद्येऽपीष्टप्राप्त्यर्था, अनिष्टपरिहारार्था वा । नाद्यः, अवाप्तसकलकामस्य तदनुपपत्तेः। अत एव न द्वितीयः;द्वितीये प्रवृत्त्यनुपपत्तिः। कः खलु परार्थं प्रवर्तमानं प्रेक्षावानित्याचक्षीत । अथ करुणया प्रवृत्त्युपपत्तिरित्याचक्षीत कश्चित्। तं प्रत्याचक्षीत । तर्हि सर्वान्प्राणिनः सुखिन एव सृजेदीश्वरो न तु दुःखशबलान्,

करुणाविरोधात्। स्वार्थमनपेक्ष्य परदुःखप्रहरणेच्छा हि कारुण्यम्। तस्मादीश्वरस्य जगत्सर्ज्जनं न युज्यत इत्याशंकायां प्रतिवक्ति स्म भट्टाचार्य्यैः-' प्रयोजनमनुद्दिश्य-' इत्यादि। नास्तिकशिरोमणे! तावदीर्ष्याकषायिते नेत्रे निमील्य परिभावयतु भवान्। करुणया प्रवृत्तिरस्त्येव। न च निसर्ग्गतः सुखमयसर्ग्गप्रसङ्गः, सज्यप्राणिकृतसुकृतदुष्कृतपरिपाकविशेषाद्वैषम्योपपत्तेः। न च स्वातंत्र्यभंगः शंकनीयः, स्वांगं स्वव्यवधायकं न भवतीति न्यायेन प्रत्युत तन्निर्वाहाच्चेति विरम्यते, विस्तरभिया नेह प्रपंच्यत इति॥ ३५९॥

## स्वाङ्गं स्वव्यवधायकं न भवतीति न्यायः॥ ३६०॥

स्फुटः॥ ३६०॥

## पिण्डं त्यक्त्वा करं लेढीति न्यायः॥३६१॥

यथा–विहाय ब्रह्मानन्दं तल्लेशभूतविषयानन्दाद्यनुभवनं व्यर्थमिति॥ ३६१॥

## घटप्रदीपन्यायः॥ ३६२॥

यथा घटनिष्ठो दीपो घटस्थोदरमात्रं भासयति, तथा प्रकृतेऽपि॥ ३६२॥

## बहुच्छिद्रघटप्रदीपन्यायः॥ ३६३॥

अयं श्रीशंकराचार्य्यैः संक्षेपेण भाष्यतात्पर्य्यप्रकाशके श्रीमद्दक्षिणामूर्तिस्तोत्रेऽभिहितः। तथाहि–" नानाछि-

द्रघटोदरस्थितमहादीपप्रभाभास्वरं ज्ञानं यस्य तु चक्षुरादिकरणद्वारा बहिः स्पन्दते । जानामीति तमेव भान्तमनुभात्येतत्समस्तं जगत्तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥ " इति । अस्यार्थः—नाना अनेकानि छिद्राणि यस्मिन् स नानाछिद्रः, स चासौ घटश्चेति तथा । तस्योदरे मध्ये स्थितो यो महादीपोऽक्षुद्रदीपस्तस्य प्रभावद्भास्वरमनन्याधीनाऽलुप्तप्रकाशस्वभावं यस्य चिदात्मनोऽनेकच्छिद्रवति देहे स्थितस्य ज्ञानं स्वरूपभूतं चक्षुरादिकरणद्वारा तत्तदिन्द्रियच्छिद्रमार्गेण बहिर्विषयेषु रूपादिषु स्पन्दते गच्छति। यथा घटच्छिद्रेभ्यो विप्रसृता दीपप्रभास्तत्तत्सन्निहितान्विषयान्प्राप्य तदाकाराः सत्यस्तद्गततमोऽभिभवंति, तथा देहच्छिद्रगतेन्द्रियद्वारा प्रसरन्मनोवृत्त्यवभावकतया तदात्मतामापन्नानि चिदात्मस्वरूपाणि ज्ञानानि स्फुरणस्वभावानि तत्तदर्थं प्राप्य तदाकाराकारितानि विषयगताऽज्ञातताभिभवन्ति, विषयप्रकाशशब्दवाच्यानि भवन्तीत्यर्थः। यस्य ज्ञानमेवम्प्रकारेण बहिः स्पन्दते, तस्मै श्रीगुरुमूर्तये श्रीदक्षिणामूर्त्तये इदं नमो नमस्करणमस्तु । दक्षिणाऽभिमुखी मूर्तिर्यस्य स दक्षिणामूर्तिः शिवः । गृणाति तत्त्वज्ञानमुपदिशति शिष्येभ्य इति गुरुः । श्रीः तत्त्वबोधात्मिकाऽऽविष्कृता शोभाऽस्मिन्नस्तीति श्रीमान्, श्रीमाँश्चासौ गुरुश्च श्रीगुरुस्तस्य मूर्तिरेव मूर्तिर्यस्य स तथा तस्मै । श्रीदक्षिणामूर्त्तये इति योजना । देवतारूपेण गुरुरूपेण च गृहीतमूर्तिद्वयमित्युक्तं भवतीति। उक्तमर्थं श्रुत्या

द्रढयति--जानामीति । अहमिदं जानामीति स्वगतेन निरपेक्षप्रकाशस्वरूपेण विषयमवभासयन्यः स्वयमेव भासते, तमेव भान्तं प्रकाशमानमनुसृत्यैतत्समस्तं जगद्भाति, न स्वत इत्यक्षरयोजना । तथा च श्रुतिः-" न तत्र सूर्य्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः " इति । " तमेव भान्तमनुभाति सर्व्वं, तस्य भासा सर्व्वमिदं विभाति " इति ॥ ३६३ ॥

## वस्तूनि मानान्यपेक्षन्ते न प्रयोजनानीति न्यायः ॥ ३६४ ॥

श्रुत्यादिमानसिद्धवस्तुनः प्रयोजनाभावापराधेन निरसनमशक्यमिति विवक्षायामस्य प्रवृत्तिरिति ॥ ३६४ ॥

## बहूनामनुग्रहो न्याय्य इति न्यायः ॥३६५॥

यथाहुः-" बहूनामप्यसाराणां मेलनं कार्य्यसाधकम् । तृणैस्सम्पाद्यते रज्जुस्तया नागोऽपि बध्यते ॥" इति॥३६५॥

## बहूनामनुसरणं न्याय्यमिति न्यायः ॥३६६॥

स्पष्टः ॥ ३६६ ॥

## व्यञ्जकव्यंग्यन्यायः ॥ ३६७ ॥

यथा व्यञ्जक आतपादि व्यंग्यस्य घटादेराकारतामेति तथा । उक्तं च-" व्यञ्जको वा यथालोको व्यंग्यस्याकारतामियात् । सर्व्वार्थव्यञ्जकत्वाद्धीरधाकारा प्रदृश्यते ॥ " इति ॥ ३६७ ॥



## दाहकदाह्यन्यायः ॥ ३६८ ॥

यथा दृश्यते हि विगतज्वालस्यँ दाहकस्याऽग्नेर्दाह्यकाष्ठा-द्याकारता तथा ॥ ३६८ ॥

## शैलूषीन्यायः ॥ ३६९ ॥

यथा शैलूषी नटी क्रमेण विविधरूपाणि धत्ते, तथा अर्थालंकारेष्वेकोपमैव नाना प्रतीपाद्यलंकाररूपाणि धत्ते। उक्तञ्च—"उपमैका शैलूषी संप्राप्ता चित्रभूमिकाभेदात्। प्रीणयति काव्यरङ्गे नर्तयति तद्विदां चेतः॥" इति ॥३६९॥

## नटाङ्गनान्यायः ॥ ३७० ॥

यथा रङ्गभूमौ ह्यागतां नटभार्य्यां योयो नटः पृच्छति-कस्य भार्य्याऽसि सुश्रोणि, सा तंतं प्रति तवैवेति वदती-ति प्रसिद्धम्। अयम् "अजादेर्द्वितीयस्य" ६।१।२३। इति सूत्रमहाभाष्येऽभिहितः। तद्यथा—"व्यञ्जनानि पुनर्न्न-टभार्य्यावद्भवन्तीति। यथा नटानां स्त्रियो रङ्गगता योयः पृच्छति—कस्य यूयं कस्य यूयमिति तंतं तवतवेत्याहुः, एव व्यञ्जनान्यपि यस्ययस्याऽचः कार्य्यमुच्यते तंतं भजन्ते" इति ॥ ३७० ॥

## जलौष्ण्यन्यायः ॥ ३७१ ॥

यथा 'शीतस्पर्शवत्य आपः' इति लक्षणतो जले स्वाभा-विकं शैत्यं वर्त्तते, उष्णत्वन्तु तेजस्संयोगादिति। एवञ्चाऽयं न्यायोऽन्याऽसाधारणधर्म्मस्याऽन्यत्रारोपविवक्षायां प्रवर्तत इति भावः ॥ ३७१ ॥

## वायुशैत्यौष्ण्यन्यायः ॥ ३७२ ॥

पूर्व्ववत् ॥ ३७२ ॥

## भूशैत्यौष्ण्यन्यायः ॥ ३७३ ॥

पूर्व्ववत् ॥ ३७३ ॥

## लोहाग्निन्यायः ॥ ३७४ ॥

अयं परस्परधर्माध्यासतादात्म्याध्यासयोर्विवक्षाया प्रवर्तते ॥ ३७४ ॥

## अहिभुक्कैवर्तन्यायः ॥ ३७५ ॥

अयं तादात्म्याध्यासे एव ज्ञेयः । अहिर्न्नामोन्मादकर ओषधिविशेषः, अहिफेनस्यादिकारणम् 'पोस्त' इति पाश्चात्यभाषायां प्रसिद्धः। तं भुंक्त इत्यहिभुक् 'पोस्ती' इति भाषायां प्रसिद्धः। 'कैवर्तें दाशधीवरौ' इत्यमरः । यथा श्रूयते हि लोके—कश्चिदहिभुङ् नावमारुह्य तत्र बहुजनसमुदायं दृष्ट्वा केनचिन्मे विनिमयो न स्यादिति धिया स्वपादे रज्जुं बद्ध्वा तन्द्रां प्राप । कैवर्तश्चोपहासार्थं तत्पादात्तां रज्जुं मोचयित्वा स्वपादे बबन्ध। नावि च पारं गतायामवरोहणसमये प्रबुद्धोऽहिभुक्स्वपादे रज्जुमदृष्ट्वा कैवर्तपादे च रज्जुं दृष्ट्वा अहमयमयमहमिति स्वहृदि- निश्चित्य-रे कैवर्त त्वमहमहं च त्वमिति तेन विवादं कृतवानिति, तथा प्रकृतेऽपि ॥ ३७५ ॥

## वातप्रदीपन्यायः ॥ ३७६ ॥

वातेन दीपनिवृत्तिः ॥ ३७६ ॥

## स्नेहदीपन्यायः ॥ ३७७ ॥

स्नेहाऽभावे जाते दीपनिवृत्तिः ॥ ३७७ ॥

## ज्ञानमज्ञानस्यैव निवर्तकमिति न्यायः ३७८॥

द्विविधा हि निवृत्तिः—विरोधिना, सामग्रीनिवृत्त्या च। यथा वातेन दीपनाशस्तथा वा तैलवर्त्यादिनाशे दीपनिवृत्तिः। तत्र तथाऽऽद्या निवृत्तिरज्ञानस्य, द्वितीया कार्य्यवर्गस्येति। एतेन न्यायत्रयं व्याख्यातमिति ॥ ३७८ ॥

## तदागमे हि दृश्यत इति न्यायः ॥ ३७९ ॥

यथा—दृश्यते हि तैलादावनुद्भूतरूपोद्भूतस्पर्शतेजोऽवयवागमे सन्तापोपलब्धिरिति तद्धर्म्म एव न तैलादिधर्म्मः, तथा जाग्रदादौ बुद्धौ सत्यां दुःखादयो दृश्यन्ते, सुषुप्त्यादौ तन्निवृत्तौ नोपलभ्यंतेऽतस्तद्धर्म्मा एव नात्मधर्म्माः, सुषुप्तावप्युपलब्धिप्रसङ्गादिति ॥ ३७९ ॥

## वध्यघातकन्यायः ॥ ३८० ॥

यथा भुजङ्गादिभूषितां वनभूमिं दृष्ट्वा भुजङ्गभुगादेरभावोऽवगम्यते, तथा प्रकृतेऽपि ॥ ३८० ॥

## खादकघातकन्यायः ॥ ३८१ ॥

अयं न्यायो यत्र कथंचित्परम्परया हेतोरप्युपचारेण साक्षाद्धेतुत्वमुच्यते, तत्र प्रवर्त्तते। यथा यदि छागादिखादका नराः स्युर्न्न स्युस्तर्हि घातका इति। खादका एव घातका इति न्यायार्थः ॥ ३८१ ॥

बालाग्रशतभागोऽपि न कल्प्यो निष्प्रमाणकः। प्रमाणवन्त्यदृष्टानि कल्प्यानि सुबहून्यपि ॥ इति न्यायः ॥ ३८२ ॥

स्फुटः ॥ ३८२ ॥

सदसतोरुत्पत्तिनिवृत्त्यसम्भवेन परस्परविरोधे च प्रकारान्तरास्थितीरिति न्यायः ॥ ३८३ ॥

स्फुटः ॥ ३८३ ॥

गलेपादुकान्यायः ॥ ३८४ ॥

यथा—कस्यचिद्गृहस्थस्य गृहेऽन्नाद्यर्थित्वच्छलेनागतो निषण्णश्च कश्चिद्विटस्स्तेनं तत्त्वतो ज्ञात्वा गच्छगच्छेति पुनःपुनरुच्यमानोपि यदा धौर्त्येन स्वेच्छया गमनं न स्वीकरोति, तदा पादुकासहितं पादं गले निधाय तोदयित्वा च बलान्निस्सार्य्यते, तथा प्रकृतेपि ॥ ३८४ ॥

यस्याऽज्ञानं भ्रमस्तस्य भ्रांतस्सम्यङ्न वेद स इति न्यायः ॥ ३८५ ॥

यथा—यस्याऽनात्मनि देहादावात्मत्वभ्रमोऽस्ति तस्याज्ञानमस्तीति कल्प्यत इति ॥ ३८५ ॥

तरतमभावापन्नं फलं तरतमभावापन्नसाधनायत्तमिति न्यायः॥ ३८६ ॥

यथा—विचारपाटवेन यावद्यावद्विवेकदार्ढ्यं भवति तावत्तावद्भ्रमशैथिल्यं जायत इति भावः ॥ ३८६ ॥

## सन्दिग्धं सप्रयोजनं च विचारमर्हतीति न्यायः ॥ ३८७ ॥

यथा—विचारविषयत्वं हि नाज्ञातस्य नापि निश्चितस्य, किन्तु सन्दिग्धस्येति भावः ॥ ३८७ ॥

## चिन्तामणिं परित्यज्य काचमणिं गृह्णातीति न्यायः ॥ ३८८ ॥

यथा यत्र ब्रह्मावबोधहेतुविचारं विहायाऽन्यत्र रतिं कुर्वन्ति, तत्रायं चरितार्थः ॥ ३८८ ॥

## पतिंवरान्यायः ॥ ३८९ ॥

यथा स्वयंवरा कन्याऽन्याँस्त्यक्त्वा सर्वोत्तमत्वेनाभिमतं यमभीष्टतमत्वेनादत्ते, न ततोऽन्यत्राभीष्टतमत्वमतिं कुरुते, तथा प्रकृतेपीति ॥ ३८९ ॥

## टिट्टिभन्यायः ॥ ३९० ॥

अयं पंचतंत्रे विवृतः । तथाहि—कस्यचिट्टिट्टिभाख्यपक्षिणोऽण्डानि स्वतटस्थानि समुद्रस्स्ववीचिनाऽपजहार । स च पक्षी स्वसाहसेनैनं शोषयिष्यामीति प्रवृत्तो भार्य्यादिभिर्बहुधा वार्य्यमाणोपि नोपरराम, प्रत्युत तानपि वव्रे । ताँश्च पतनोत्पतनाभ्यां बहुधा क्लिश्यतः सर्व्वानवलोक्य कृपालुर्न्नारदस्तत्समीपे गरुडं प्रेषयामास । ततस्तत्पक्षवातेन शुष्यन्समुद्रो भीतोऽण्डान्यानीय पक्षिणे ददाविति । तथा च यथा दृढाध्यवसायस्य पक्षिणो गरुडसाहाय्यादण्डलाभः

तथा दृढबुद्धेर्जिज्ञासोरतिदुर्लभस्यापि तत्त्वज्ञानस्येशाऽनुग्रहात्सुखेन लाभो भविष्यतीति ॥ ३९० ॥

## वनव्याघ्रन्यायः ॥ ३९१ ॥

## ह्रदनक्रन्यायः ॥ ३९२ ॥

यथा वनव्याघ्रयोः, ह्रदनक्रयोश्च परस्परवियुक्तयोः शबरधीवराभ्यां प्रधर्षणीयता भवति, संयुक्तयोस्तु परस्परसाहाय्यमाचरतोर्दुर्द्धर्षता भवति, तथा प्रकृतेपि ३९१॥३९२

## रथवडवान्यायः ॥ ३९३ ॥

यथा—रथे नियुक्ते वडवे ते मिलित्वैव रथं वहतः, वियुक्ते तु न शक्नुतो वोढुं, परस्परस्नेहातिशयात्कुरुतश्च ह्लेषणम्, तथा प्रकृतेपि ॥ ३९३ ॥

## भर्च्छुन्यायः ॥ ३९४ ॥

यथा श्रूयते हि लौकिकी गाथा वेदान्तग्रंथस्था—भर्च्छु नामा मंत्री कस्यचिद्राज्ञो बभूव । स च राजाज्ञया दूरदेशस्थराजविरोधिदस्युजननिग्रहार्थं गतः । तान्हत्वापि तद्देशमर्य्यादास्थापनार्थं तत्र चिरं विलम्बिते तस्मिन् राजसमीपे तच्छत्रुभूता राजपुरुषा दस्युकर्तृकं भर्च्छुवधं निखिलनगरे घोषयित्वा राज्ञेऽपि साभिज्ञानं निवेदितवन्तः । आगतानि भर्च्छुप्रेषितसमाचारपत्राणि च मार्ग्ग एव विलोपयामासुः । श्रुत्वा च भर्च्छुवधं राज्ञा सचिवान्तरं कृतम् । ततः कियत्कालानन्तरं कृतकृत्यो भर्च्छुः स्वपुरमभ्यागच्छन्पथि राजकृतसचिवांतरं श्रुत्वा वैराग्यमाश्रित्योपशशामाऽभ्युवास

च वने । तच्छत्रुभूताः प्राप्तसचिवाधिकारास्सर्व्वे हैकमत्येन राज्ञे मृतभर्त्तुः प्राप्तपिशाचयोनिर्भस्मावगुण्ठितदेहं विकरालस्वरूपो निर्जनवने विचरतीति विज्ञापयामासुः । ततः कदाचिन्मदान्धो राजा मृगयाऽनुगतो वने भस्मानुलिप्तशरीरभर्त्तुं दृष्ट्वा पिशाचतां गतोऽयमिति मेने, तथा प्रकृतेपि ॥ ३९४ ॥

## भैरवविप्रन्यायः ॥ ३९५ ॥

पूर्व्ववत् ॥ ३९५ ॥

## न सेव्यः केवलो नृप इति न्यायः ॥ ३९६ ॥

पूर्व्ववत् ॥ ३९६ ॥

## वह्निधूमन्यायः ॥ ३९७ ॥

यथोत्पत्तिप्रतीतिरूपद्वारभेदाद्वह्निधूमयोरितरेतरापेक्षत्वं न विरुध्यते, तथा प्रकृतेपि । किञ्च—यथा धूमरूपकार्य्यदर्शनात्कारणरूपवह्नेरनुमानम्, तथा यत्र कार्यलिङ्गेन कारणाऽनुमानम्, तत्राऽस्य प्रवृत्तिरिति ॥ ३९७ ॥

## गोमहिषीन्यायः ॥ ३९८ ॥

यथा गवादेर्महिष्यादेश्च न केनचिन्निमित्तेनाऽन्योऽन्यं मैत्री भवति न केनाचिच्च विरोध इति, तथा—प्रकृतेपि॥३९८॥

## अहिनकुलन्यायः ॥ ३९९ ॥

शाश्वतिके विरोधे स्पष्टः ॥ ३९९ ॥

## सिंहमृगन्यायः ॥ ४०० ॥

पूर्व्ववत् ॥ ४०० ॥

## तमःप्रकाशन्यायः ॥ ४०१ ॥

अयमुपमर्द्योपमर्दकभावे स्पष्टः ॥ ४०१ ॥

## रश्मितृणादिन्यायः ॥ ४०२ ॥

यथाऽऽदित्यरश्मयः स्वभावतस्तृणादेर्भासका अपि सूर्य्य-कान्तमण्यारूढास्तद्दाहका भवन्ति, तथा प्रकृतेऽपि ॥४०२॥

## गोमयपायसन्यायः ॥ ४०३ ॥

अयं प्रत्यक्षादिविरोधेनाऽनुमानस्य वाधितत्वे प्रवर्त्तते ॥ ४०३ ॥

## उपदेश्यानुपदेशत्वे विपरीतं बलाबलमिति न्यायः ॥ ४०४ ॥

यथा—दृश्यते हि चन्द्रादावतिविपुलपरिमाणोपदेशेन प्रादेशपरिमाणग्राहिणः प्रत्यक्षस्य बाधः । दृश्यते च व्योम्नि शब्दैकविशेषगुणतोपदेशसहकृतेन नीलत्वाद्यभावाऽनुमानादिनोपजीव्यस्यापि नीलादिरूपप्रतियोगिप्रत्यक्षस्य बाध इति ॥ ४०४ ॥

## दामव्यालकटन्यायः ॥ ४०५ ॥

## भीमभासदृढन्यायः ॥ ४०६ ॥

इदं न्यायद्वयम् "दामव्यालकटन्यायो न स्यात्तव कदाचन। भीमभासदृढन्यायः सर्व्वदा तेऽस्तु राघव ॥" इत्यादि वासिष्ठे सप्रपञ्चमुपन्यस्तम् । तत्राद्यस्योच्चैस्तरां दशामापन्नस्याप्यज्ञस्यातिनीचदशाप्राप्तिरवश्यं कालेन भवतीति तत्त्वबोधोऽ-

वश्यं सम्पाद्य इति विवक्षायां प्रवृत्ति। यथा—दाम-व्याल-कटाख्यास्त्रयोऽसुराः शम्बरेण स्वमायया निर्म्मिताः। ते च तलप्रहारादिना मेर्व्वादि चूर्णीकरणे शक्ता अप्यज्ञानप्रभावात्कालेन मशकादियोनिं प्रापुरिति प्रसिद्धं तत्र॥ द्वितीयस्य तु—तत्त्वविन्न कदापि स्वपदात्पततीति विवक्षायां प्रवृत्तिः। यथा—भीम-भास-दृढाख्यास्त्रयोऽसुरास्तेनैव शम्बरेण तथा निर्म्मिताश्चिरं जीवन्मुक्तिसुखमनुभूय निर्व्वाणपदं प्राप्ता इति संक्षेपः। प्रपञ्चस्तु तत्रैव द्रष्टव्य इति॥ ४०५॥ ४०६॥

## यावत्तैलं तावद्व्याख्यानमिति न्यायः॥४०७॥

स्फुटः॥ ४०७॥

## यावत्स्नानं तावत्पुण्यमिति न्यायः॥४०८॥

स्फुटः॥ ४०८॥

## तुषकण्डनन्यायः॥ ४०९॥

यथा तुषस्य धान्यत्वचः निस्तुषीकरणमुलूखलादिना व्यर्थम्, तथा प्रकृतेऽपि। 'धान्यत्वचि तुषः पुमान्' इत्यमरः॥ ४०९॥

## क्रमविपर्य्यासन्यायः॥ ४१०॥

यत्र क्रमस्य पूर्व्वापरविधेर्विपर्य्यासो व्यत्ययो भवति, तत्रायमवतरतीति। "स्याद्व्यत्यासो विपर्य्यासो व्यत्ययश्च विपर्य्यये" इत्यमरः॥ ४१०॥

## क्षुत्स्वादुतां जनयतीति न्यायः॥ ४११॥

स्फुटः॥ ४११॥

## शङ्काभिस्सर्वमाक्रान्तमिति न्यायः ॥४१२॥

स्फुटः। सर्वत्र निश्चयाभावविवक्षायामस्य प्रवृत्तिः ४१२॥

## न ह्ययं स्थाणोरपराधो यदेनमन्धो न पश्यतीति न्यायः ॥ ४१३ ॥

स्फुटः ॥ ४१३ ॥

## घटीयंत्रन्यायः ॥ ४१४ ॥

यथा—"जीवनग्रहणे नम्रा गृहीत्वा पुनरुत्थिताः। किं कनिष्ठाः किमु ज्येष्ठा घटीयंत्रस्य दुर्ज्जनाः॥" इत्यनेन विवृतोयमिति ॥ ४१४ ॥

## घटीयंत्रन्यायः ॥ ४१५ ॥

यथा च—तत्त्वज्ञानान्निःश्रेयसं भवतीति सिद्धान्ते किं तत्त्वज्ञानादनंतरमेव निःश्रेयसं सम्पद्यते, वा नेत्याशङ्कायामुच्यते—तत्त्वज्ञानाद्दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तराभाव इति। तत्र मिथ्याज्ञानं नामाऽनात्मनि देहादावात्मबुद्धिः। तदनुकूलेषु रागः। प्रतिकूलेषु द्वेषः। वस्तुतस्त्वात्मनः प्रतिकूलमनुकूलं वा न किंचित्समस्ति, परस्पराऽनुबन्धाच्च रागादीनां मूढो रज्यति, रक्तो मुह्यति, मूढः कुप्यति, कुपितो मुह्यतीति। ततस्तैर्दोषै, प्राणी प्रतिषिद्धानि शरीरेण हिंसास्तेयादीनि ह्याचरतिः वाचाऽनृतादीनि, मनसा परद्रोहादीनि, सेयं पापरूपा प्रवृत्तिरधर्म्ममावहतीति। एवं शरीरेण प्रशस्तानि दानपरपरित्राणादीनि, वाचा हितसत्यादीनि, मनसा अहिंसा-

दीनि, सेयं पुण्यरूपा प्रवृत्तिर्द्धर्म्मः, सेयमुभयी प्रवृत्तिः। ततः स्वस्वाऽनुरूपं प्रशस्तं निन्दितं वा जन्म शरीरादेः प्रादुर्भावः, तस्मिन्सति प्रतिकूलवेदनीयतया वासनामकं दुःखं भवतीति त इमे मिथ्याज्ञानादयो दुःखान्ता अविच्छेदेन प्रवर्तमानाः। संसारशब्दार्थो घटीयंत्रन्यायेन निरवधिरनुवर्तते। यदा कश्चित्पुरुषधौरेयः पुराकृतसुकृतपरिपाकवशादाचार्य्योपदेशेन सर्व्वमिदं दुःखायतनं दुःखानुषक्तश्च पश्यति, तदा तत्सर्वं हेयत्वेन बुद्ध्यते। ततस्तदविद्यादिकं तन्निवर्त्तयितुमिच्छति, तन्निवृत्त्युपायश्च तत्त्वज्ञानमिति, तत्त्वज्ञानान्मिथ्याज्ञानमपैति, मिथ्याज्ञानापाये दोषा अपयान्ति, दोषापाये प्रवृत्तिरपैति,प्रवृत्त्यपाये जन्मापैति, जन्मापाये दुःखमात्यन्तिकं निवर्तते। सात्यन्तिकी निवृत्तिरपवर्ग्गः। तथा च पारमर्षं सूत्रम्–"दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तराभावादपवर्ग्गः" इति॥ ४१५॥

## कनककुण्डलन्यायः॥ ४१६॥

यथा सुवर्णजन्यकुण्डलस्य सुवर्णाभिन्नत्वम्, तथा ब्रह्मरूपकारणजन्यजगतः कार्य्यस्य ब्रह्मरूपकारणताऽभिन्नत्वमिति।"सर्व्वं खल्विदं ब्रह्म नेह नानास्ति किं चन","एकमेवाऽद्वितीयं ब्रह्म","पुरुष एवेद१७ सर्व्वम्", "एतदात्म्यमिदं सर्व्वं स वै सर्व्वमिदं जगत्" इत्यादिश्रुतेरीति शुद्धाद्वैतमतमिति॥ ४१६॥

## हलान्तं ब्रह्मवर्चसमिति न्यायः ॥ ४१७ ॥

यथा—"राज्यश्रीर्ब्रह्मशापान्ता हलान्तं ब्रह्मवर्चसम् । आचारो घोषवासान्तः कुलस्यान्तं स्त्रियश्चलाः ॥" इति । उक्तञ्च श्रीमद्भागवते तृतीयस्कन्धे नवमाध्याये—"नाभिह्रदादिह सतोऽम्भसि यस्य पुंसो विज्ञानशक्तिरहमासमनन्तशक्तेः । रूपं विचित्रमिदमस्य विवृण्वतो मे मारीरिषीष्ट निगमस्य गिरां विसर्गः ॥" इति । अस्य श्लोकस्य टीका—अम्भसि सतो यस्य नाभिह्रदादिहासं, विज्ञाने शक्तिर्यस्य महत्तत्त्वात्मकस्य चित्तस्य तदभिमानी, अस्य रूपमिदं विस्तारयतो मे निगमस्याऽवयवभूतानां गिरां विसर्ग उच्चारणं मारीरिषीष्ट हलान्तं ब्रह्मवर्चसमिति न्यायेन मा लुप्यतामिति ॥ ४१७ ॥

## तत्स्थानापन्नस्तत्कार्य्यं लभत इति न्यायः ॥ ४१८ ॥

अयं "स्थानिवदादेशोऽनल्विधौ" १ । १ । ५६ । इति सूत्रस्थमहाभाष्ये ध्वनितः । तद्यथा—"लोके यो यस्य प्रसङ्गे भवति लभतेऽसौ तत्कृतानि कार्य्याणि । तद्यथा—उपाध्यायस्य शिष्यो याज्यकुलानि गत्वा अग्रासनादीनि लभते" इति ॥ ४१८ ॥

## अन्वयव्यतिरेकिन्यायः ॥ ४१९ ॥

यथा—यत्सत्त्वे यत्सत्त्वमन्वयो, यदभावे यदभावो व्यतिरेकः॥अन्वयव्यतिरेकौ स्तोऽस्मिन्,इनिः। अन्वयेन व्यतिरेकेण

च व्याप्तिमति हेतावयं प्रवर्तते। यथा वह्नौ साध्ये धूमवत्त्वम्।
यत्रयत्र धूमस्तत्रतत्राग्निरित्यन्वयव्याप्तिः । यत्र वह्निर्ना-
स्ति तत्र धूमोपि नास्तीति व्यतिरेकव्याप्तिः। यथा महान-
सादौ ॥ ४१९ ॥

## चातकजीमूतन्यायः ॥ ४२० ॥

यत्राभीष्टसिद्धौ सत्यां बहुकालिक्यपि तत्तृष्णोपशा-
म्यति, तत्रास्य प्रवृत्तिरिति। "शमयति जलधरधारा चात-
कयूनां तृषां चिरोपगताम्। क्षपयति च वधूलोचनजल-
धारा कामिनां प्रवासरुचिम्॥" इति। 'सर्व्वंसहापतितमम्बु
न चातकानाम्' इत्यादि ॥ ४२० ॥

## गतानुगतिको लोको न लोकः पारमार्थिक इति न्यायः ॥ ४२१ ॥

यथा केनचिद्ब्राह्मणेन कस्माच्चित्पुरुषाच्छ्रुतं यत् कस्मि-
श्चिद्ग्रामे कश्चिद्दाता धनाढ्यः प्रतिब्राह्मणं रौप्यकमण्डलुं
ददातीति । तदाकर्ण्य स लुब्धब्राह्मणस्तत्र गन्तुकामः
पथ्येव भूमौ गर्तं विधाय संस्थाप्य च तत्र स्वताम्रकमण्ड-
लुं तदुपरि मृत्पिण्डद्वयं निधाय तत्र गतः गते च तस्मि-
न्योयो जनस्तत्र समायातस्सस एव तत्र पिण्डद्वयमवलोक्य
सम्भाव्य च तीर्थबुद्धिं तत्र मृत्पिण्डद्वयं निर्माय स्थापया-
मास। इत्थं कालात्यये जाते दैववशाद्धनिनस्सकाशाद-
प्राप्य राजतकमण्डलुं पुनः स्वधृतताम्रकमण्डलुग्रहणेच्छु-
र्विप्रस्तत्र बहुलोकदत्तमृत्पिण्डव्याप्तकोशद्वयायात्मकभूमि-

मवलोक्य भ्रान्तस्सन्स्वस्थापितकमण्डलुस्थानमनवगत्य शोकाकुलचित्त इमं पद्यं पपाठ-"गतानुगतिको लोको न लोकः पारमार्थिकः। पिण्डद्वयप्रदानेन गतं मे ताम्रभाजनम्॥" इति। अन्यदपि-"एकस्य कर्म्म संवीक्ष्य करोत्यन्योपि गर्हितम्। गतानुगतिको लोको न लोकः पारमार्थिकः॥" इति॥४२१॥

## साधनाऽनुष्ठानतंत्रा हि साध्यसंसिद्धिरिति न्यायः॥ ४२२॥

यथा-साधनानि चत्वारि-नित्यानित्यवस्तुविवेकः १, इहामुत्रार्थफलभोगविरागः २, शमदमादिषट्सम्पात्तिः ३, मुमुक्षुत्वं च ४। नित्यं वस्त्वेकं ब्रह्म, तद्व्यतिरिक्तं सर्वमनित्यम्, अयमेव नित्यानित्यवस्तुविवेकः। विरागः कः-इह स्वर्ग्गभोगेषु चेच्छाराहित्यम्। शमादिसाधनसम्पत्तिः का-शमो दमस्तपस्तितिक्षा श्रद्धा समाधानं चेति। शमः कः-मनोनिग्रहः, दमः कः-चक्षुरादिबाह्येन्द्रियनिग्रहः, तपः किम्-स्वधर्म्मानुष्ठानमेव, तितिक्षा का-शीतोष्णादिसुखदुःखादिसहिष्णुत्वम्, श्रद्धा कीदृशी-गुरुवेदान्तवाक्येषु विश्वासः, समाधानं किम्-चित्तैकाग्र्यम्। मुमुक्षुत्वं किम्-मोक्षो मे भूयादितीच्छा। एतत्साधनानुष्ठानतन्त्रा हि यथा साध्यस्यात्मज्ञानस्य संसिद्धिर्भवति, तथा प्रकृतांतरेऽपीति बोध्यं, विस्तरभिया नेह प्रपञ्च्यते॥ ४२२॥

## द्विगता अपि हेतवो भवन्तीति न्यायः॥ ४२३॥

द्वावर्थौ गताः प्रयोजनद्वयस्य सम्पादका इत्यर्थः। तद्यथा-

"आम्राश्च सिक्ताः पितरश्च प्रीणिताः । एका क्रिया द्व्यर्थ-करी प्रसिद्धा" इति महाभाष्यमतेन मृतपितॄणां श्राद्धतर्प-णादि कर्म्म शास्त्रविहितं नास्तीति वदन्तः परास्ताः । अत एवैतत्पोषकं महाभाष्यवाक्यान्तरम्-"तद्यथा-अयं चेन्म-रिष्यति न च पूर्व्वेभ्यः पितृभ्यो दास्यति" इत्यादि ॥४२३॥

## जामात्रर्थं प्रस्तुतस्य सूपादेरतिथ्युपका-रकत्वमिति न्यायः ॥ ४२४ ॥

यथा-साङ्ख्याभिमतप्रधानकारणवादनिरासाय प्रयुक्ता वेदान्तसूत्रोक्तयुक्तयो योगाभिमतप्रधानकारणमपि निरा-कुर्व्वन्तीति दिगित्यन्यत्र विस्तरः ॥ ४२४ ॥

## गृहार्थमारोपितस्य दीपस्य रथ्योपकारक-त्वमिति न्यायः ॥ ४२५ ॥

पूर्ववत् ॥ ४२५ ॥

## न चान्यार्थं प्रकृतमन्यार्थं भवतीति न्यायः ॥ ४२६ ॥

यथा न हि गोधा सर्प्पन्ती सर्प्पणादहिर्भवतीत्येवं प्रकृतेपि ॥ ४२६ ॥

## अन्यार्थं प्रकृतमन्यार्थं भवतीति न्यायः॥४२७॥

तद्यथा-शाल्यर्थं कुल्याः प्रणीयन्ते, ताभ्यश्च पानीयं पीयते, उपस्पृश्यते च, शालयश्च भाव्यन्ते, तथा प्रकृ-तेपि । 'कुल्याल्पा कृत्रिमा सरित्' इत्यमरः । "बहुगणवतुडति संख्या" १ । १ । २३ । इति सूत्रमहाभाष्ये प्रोक्तं प्रोक्तन्यायद्व-यम् ॥ ४२७ ॥

## वाक्यान्यपि द्विगतानि भवन्तीति न्यायः॥४२८॥

यथा—शब्दस्याप्यर्थवद्विर्गतत्वमित्यर्थः । तद्यथा—श्वेतो धावति, अलम्बुसानां याता। अत्र श्वेत इति छेदेन[1] कीदृश इत्यस्योत्तरमिदामिति । एवं केषां जनपदानां गंता, को वा समर्थ इति प्रश्ने, उत्तरम्—अलम्बुसानां याता अलम्बुसा देशविशेषाः । बुसानां पलालवर्णानां याता प्राप्तिमान्, अलं समर्थ इति चार्थः ॥ ४२८ ॥

## एकस्याप्यनेकशक्तिसम्भवादनेकार्थप्रत्यायनमविरुद्धमिति न्यायः ॥ ४२९ ॥

अनेकार्थशब्देषु चरितार्थोऽयं न्यायः स्पष्टार्थः ॥ ४२९ ॥

## यो हि भुक्तवन्तं प्रति ब्रूयान्मा भुक्था इति किं तेन कृतं स्यादिति न्यायः ॥ ४३० ॥

अयं "स्थानेऽन्तरतमः" १ । १ । ५० । इति सूत्रमहाभाष्ये "अनर्थकश्च" इति वार्तिकव्याख्यावसरे ह्युदाहृतः । भुक्था इति निरनुस्वारपाठ इति बोध्यम्[2] ॥ ४३० ॥

## असति बाधके प्रमाणानां सामान्ये पक्षपात इति न्यायः ॥ ४३१ ॥

स्फुटः ॥ ४३१ ॥

## सति कुडये चित्रमिति न्यायः ॥ ४३२ ॥

स्फुटः ॥ ४३२ ॥

---

१ एतेन श्वा इतो धावतीति ध्वनितमेव । २ माङि लुङ्विधानात् ।

## तृणारणिमणिन्यायः ॥ ४३३ ॥

तृणं प्रसिद्धम्, अरणिस्तु—'निर्म्मन्थ्यदारुणि त्वरणिर्द्वयोः' इति कोशादग्निसिद्ध्यर्थं निर्म्मन्थनीये काष्ठविशेषे वर्तते, मणिस्तु—अग्निगर्भात्मकसूर्यकान्तपदवाच्याश्मविशेषो गृह्यतेऽत्रारणिपदसाहचर्य्यात्। एवं हि "प्रतिभैव श्रुताभ्याससहिता कवितां प्रति। हेतुर्मृदम्बुसंबद्धा बीजपंक्तिर्लतामिव ॥" इति चन्द्रालोकीयपद्यं विवृण्वता गागाभट्टेनोदाहृतः । श्रुतं शास्त्रम् चतुर्दशविद्यास्थानं पुराणादि आयुर्वेदाद्युपवेदचतुष्कञ्च, तस्याभ्यासः पठनपाठनावेक्षणपौनःपुन्यम्, तत्सहिता प्रतिभा बुद्धिविशेष एव कविताम्प्रति कवित्वविशेषं प्रति हेतुः कारणम् बीजपंक्तिर्लतामिव। मृदम्बुसम्बद्धेति बीजपंक्तेर्विशेषणम्, शास्त्रपदञ्चालंकारिकव्यवहारगजतुरगखङ्गलक्षणग्रन्थानामुपलक्षणम्। यदि च तादृशप्रतिभाभावेपि काव्यकर्तृत्वानुभवस्तदा काव्यविशेष दृष्टस्य कारणतास्तु, न तु सर्वत्र काव्ये मानाभावात्, अदृष्टकल्पनागौरवाच्च । न च सत्यां तादृशप्रतिभायां काव्यानुत्पत्तिः कथमिति वाच्यम्, इच्छादिरूपकारणान्तरभावेन तदुपपत्तेः। एवं च विजातीयकाव्येऽदृष्टस्य कारणता, सजातीयकाव्ये प्रतिभायाः, यतस्तृणारणिमणिन्यायेन हेतुत्वान्न व्यभिचार इत्यादि। एवं तार्णवह्निं प्रति तृणस्य, आरणवह्निं प्रत्यरणेः, मणिजन्यवह्निं प्रति मणेश्च कारणत्वम्। न तु वह्नित्वावच्छिन्नं प्रति तृणादेः कारणत्वम्,

परस्परव्यभिचारात्, एवं यत्र कार्यकारणभावबाहुल्यं, कार्यता-वच्छेदकं कारणतावच्छेदकं च नाना तत्रास्य प्रवृत्तिः॥४३३॥

## दण्डचक्रन्यायः ॥ ४३४ ॥

यथा दण्डचक्रसूत्रसलिलादेर्घटत्वाद्यनेकधर्म्मावच्छिन्नं प्रति कारणत्वमेवं विवक्षायामस्य प्रवृत्तिः। ननु काव्यस्य कार्य्यमात्रवृत्तितया कार्य्यतावच्छेदकत्वेन तदवच्छिन्नं प्रति हेतुतयाऽदृष्टस्य कारणताऽस्ति इति चेन्न, तादृशनियमे माना भावात्। अस्तु वा इच्छात्वेन हेतुतेति दिक्। एतेन काव्य-मात्रेऽदृष्टस्य कारणता, अदृष्टाभ्यासप्रतिभानां च दण्डच-क्रन्यायेन कारणतेति काव्यप्रकाशोक्तिः परास्तेति गाग्गा-भट्टः ॥ ४३४ ॥

## जहत्स्वार्थावृत्तिन्यायः ॥ ४३५ ॥

यथा-जहति पदानि उपसर्ज्जनीभूतानि स्वार्थं यस्यां सा जहत्स्वार्था। परार्थाभिधानं वृत्तिः। परस्य शब्द-स्य योऽर्थस्तस्याभिधानं शब्दान्तरेण यत्र सा वृत्तिरि-त्यर्थः। एवं हि दृश्यते लोके-पुरुषोयं परकर्म्मणि प्रवर्त-मानः स्वं कर्म्म जहाति। तद्यथा-तक्षा राजकर्म्मणि प्रवर्तमानः स्वं तक्षकर्म्म जहातीत्यादि "समर्थः पदविधिः" २।१।१। इति सूत्रमहाभाष्ये स्पष्टम्॥ किञ्च-यत्र वाच्या-र्थस्याऽन्वयाभावस्तत्र जहत्स्वार्था वृत्तिः प्रवर्तते। यथा-मंचाः क्रोशन्ति, अत्र मंचपदं मञ्चस्थपुरुषे लाक्षणिकं, वाच्यार्थस्य क्रोशनकर्तृत्वान्वयाऽसम्भवादिति भावः ॥ ४३५ ॥

## अजहत्स्वार्थावृत्तिन्यायः ॥ ४३६ ॥

यथा एवं हि दृश्यते लोके—भिक्षुकोयं द्वितीयां भिक्षां समासाद्य पूर्वां नो जहाति, सञ्चयायैव प्रवर्तते। किञ्च—यत्र वाच्यार्थस्याऽर्थाऽन्वयस्तत्राऽजहत्स्वार्था वृत्तिर्भवति । यथा—छत्रिणो गच्छन्ति, काकेभ्यो दधि रक्ष्यतामित्यादि । अत्र छत्रिपदमेकसार्थवाहित्वेन छत्र्यछत्रिपरमस्ति । काकपदं च काकतदितरसाधारणदध्युपघातकत्वावच्छिन्नपरमस्तीति ज्ञेयम् ॥ ४३६ ॥

## जहदजहत्स्वार्थावृत्तिन्यायः ॥ ४३७ ॥

यत्र वाच्यैकदेशत्यागेनैकदेशान्वयस्तत्रायं प्रवर्तते । यथा—सोऽयं देवदत्त इत्यादौ तत्तांशस्येदानीमसंभवाद्धा-नम्, इदन्तांशस्य सम्भवादहानमिति भावः ॥ ४३७ ॥

## सामान्यातिदेशे विशेषानतिदेश इति न्यायः ॥ ४३८ ॥

अयम्भावः—सामान्ये ह्यतिदिश्यमाने विशेषो नातिदिष्टो भवति। तद्यथा—ब्राह्मणवदस्मिन्क्षत्रिये वर्तितव्यमिति । सामान्यं यद्ब्राह्मणकार्य्यं तत्क्षत्रियेऽतिदिश्यते, यद्विशिष्टं माठरे कौण्डिन्ये वा न तदतिदिश्यते, एवं प्रकृतेपि । अयं न्यायः " स्थानिवदादेशोऽनल्विधौ " १ । १ । ५६ । इति सूत्रमहाभाष्ये स्पष्टः ॥ ४३८ ॥

## मण्डूकप्लुतिन्यायः ॥ ४३९ ॥

यथा मण्डूका उत्प्लुत्योत्प्लुत्य गच्छन्ति, तद्वत्प्रकृते-

पि। अयम् "इको गुणवृद्धी" १।१।३। इति सूत्रमहाभाष्येऽभिहित इति ॥ ४३९ ॥

## समुदाये वाक्यपरिसमाप्तिरिति न्यायः ४४०

अयम् "हलोऽनन्तरास्संयोगः" १।१।७। इत्यादिसूत्रमहाभाष्येऽभिहितः। तद्यथा—"गर्गाः शतं दण्डयन्तामर्थिनश्च राजानो हिरण्येन भवन्ति न च प्रत्येकं दण्डयन्ति" इति ॥ ४४० ॥

## स्वभावसिद्धन्यायः ॥ ४४१ ॥

अयम् "स्थानेऽन्तरतमः" १।१।५०। इति सूत्रमहाभाष्ये ध्वनितः—"तद्यथा—"समाजेषु समासेषु समवायेषु चास्यताम्" इत्युक्ते, नैव कृशाः कृशैस्सहासते, न पाण्डवः पाण्डुभिः, येषामेव किंचिदर्थकृतमान्तर्य्यं तैरेव सहासते। तथा—गावो दिवसञ्चरितवत्यों यो यस्याः प्रसवो भवति तेन सह शेरते। तथा यान्येतानि गोयुक्तकानि संघुष्टकानि भवन्ति तान्यन्योन्यमपश्यन्ति शब्दं कुर्वन्ति। एवं तावच्चेतनावत्सु, अचेतनेष्वपि। तद्यथा—लोष्टः क्षिप्तो बाहुवेगं गत्वा नैव तिर्य्यग्गच्छति, नोर्द्ध्वमारोहति, पृथ्वीविकारः पृथिवीमेव गच्छत्यान्तर्य्यतः। तथा—या एता आन्तारिक्ष्यः सूक्ष्मा आपस्तासां विकारो धूम, स धूम आकाशे निवाते नैव तिर्य्यग्गच्छति,नार्वागवरोहति,अब्विकारोऽप एव गच्छत्यान्तर्य्यतः। तथा—ज्योतिषो विकारोऽर्चिराकाशदेशे निवाते सुप्रज्वलितं नैव तिर्य्यग्गच्छति, नार्वागवरोहति,

ज्योतिषो विकारो ज्योतिरेव गच्छत्यान्तर्य्यतः" इति, तथा प्रकृतेपि। उक्तश्चान्यत्रापि-"घृष्टंघृष्टं पुनरपि पुनश्च-न्दनं चारुगन्धं छिन्नंछिन्नं पुनरपि पुनः स्वादु चैवेक्षुकाण्डम्। दग्धंदग्धं पुनरपि पुनः काञ्चनं कान्तवर्णं न प्राणान्ते प्रकृतिविकृतिर्जायते चोत्तमानाम्॥" इति ॥४४१॥

## मृगतृष्णान्यायः ॥ ४४२ ॥

यथा-ग्रीष्मे मरुदेशे सिकतासु सूर्य्यरश्मयः प्रतिकल्पिता अपां धारा इव भवन्ति, मृगास्तृषितास्ता अपां धारा मत्वा पश्यन्ति, भ्रमन्ति च न च तास्सन्ति, सा भ्रान्तिर्मृगतृष्णापदवाच्या, सास्त्यस्याम् 'अर्शआद्यच्' उक्तं च "रे चित्त चिन्तय चिरञ्चरणौ मुरारेः पारं गमिष्यसि यतो भवसागरस्य। पुत्राः कलत्रमितरे सुहृदस्सहायाः सर्वं विलोकय सखे मृगतृष्णिकाभम्॥" इति ॥ ४४२ ॥

## गन्धर्वनगरन्यायः ॥ ४४३ ॥

गन्धर्वाणां नगरमिव गन्धर्व्वनगरम्। यथा-राजनगराऽऽकारनीलपीतादिवर्णाकृतिपताकाध्वजतोरणान्वितसूर्य्यमयूखसँय्युक्तमेघरचनाविशेषरूपं ह्यन्तरिक्षे प्रतीयते, दूरतो दृश्यते, उपसृत्य च नोपलभ्यते, तद्वदसज्जगादिति ज्ञेयम्। उक्तं च तत्त्वविवेके-"अनेकवर्णं वियतीन्द्रचापं ग्रहात्समन्तात्परिवेष उक्तः। तथैव भानां पतनञ्च विद्युत्तथैव गंधर्वपुरं विचित्रम्॥" इत्यादि ॥ ४४३ ॥

## सन्नियोगशिष्टानामन्यतराऽपाय उभयो-रप्यपाय इति न्यायः ॥ ४४४ ॥

तद्यथा—देवदत्तयज्ञदत्ताभ्यामिदं कार्य्यं कर्तव्यमित्यादेशे देवदत्ताऽपाये यज्ञदत्तोपिन करोति, तथा प्रकृतेपि अयम् "पूतक्रतोरै च" ४।१।३६। इति सूत्रमहाभाष्ये-ऽभिहितः ॥ ४४४ ॥

## अभ्यन्तरे हि समुदायेऽवयव इति न्यायः॥४४५॥

तद्यथा—वृक्षः प्रचलन्सहावयवैः प्रचलतीति "एकाचो द्वे प्रथमस्य" ६।१।१। इति सूत्रमहाभाष्येऽभिहितः। तथा च "लक्ष्यलक्षणे व्याकरणम्" इति वार्तिकस्थमहाभाष्ये प्रकारान्तरेण ध्वनितः। तद्यथा— "समुदायेषु हि शब्दाः प्रवृत्ता अवयवेष्वपि वर्तन्ते। तद्यथा—पूर्वे पञ्चालाः, उत्तरे पञ्चालाः, तैलं भुक्तम्, घृतं भुक्तम्, शुक्लः, नीलः, कृष्ण इति। एवमयं समुदाये व्याकरणशब्दः प्रवृत्तोऽवयवेपि प्रवर्तते", एवं प्रकृतेपि ॥४४५॥

## उभयतस्स्पाशारज्जुरिति न्यायः ॥ ४४६ ॥

अयं पक्षद्वयदोषसत्त्वे प्रवर्तते। 'स्पश—बाधनस्पर्शनयोः' इति भौवादिकस्य, 'स्पश—ग्रहणसंश्लेषणयोः' इति चौरादिकस्य वा स्पाशेति रूपमेतट्टाबन्तमिति ज्ञेयम्। "सैषोभयतस्स्पाशारज्जुर्भवति" इति "हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्" ६।१।६८। इति सूत्रमहाभाष्यकैय-

टयोरुक्तत्वात् । उभयतः पाशा रज्जुरिति सकाररहितपा-
शेति टाबन्तरूपन्त्वशुद्धमेव, पूर्वोक्तभाष्यविरोधात्, 'पाशो
बन्धनशस्त्रयोः' इत्यभिधानात्पाशशब्दस्य पुंस्त्वाच्च । यथा-
मृगादिबन्धनादुभयत्र कृतायां स्पाशायां रज्जौ प्रविष्टो
मृगादिः कुतश्चिदपि मार्ग्गाद्गन्तुं न शक्नोति, तथा राजेत्यत्र
नलोपे कर्तव्ये संयोगान्तलोपस्यासिद्धत्वान्नकारान्तं पदं न
भवति, किन्तु सकारान्तम् । यदा तु 'स्वादिष्वसर्वनाम-
स्थानेऽयचि' इति अयचि सर्वनामस्थाने पूर्वं पदमिति
व्याख्यानम्, तदा सावपि परतः पदसंज्ञायां सत्यां नलोपः
सिद्ध्यति । कृते तु नलोपे संयोगान्तत्वाभावात्सुलोपो न
प्राप्नोतीत्युभयथा दोषप्रसङ्गः । तथा वा-भावकार्य्यस्य
तत्पूर्वकत्वनियमात्तस्य किञ्चित्कार्य्यं वाच्यम् । तच्च किम-
ज्ञानम् ब्रह्म वा । आद्ये आत्माश्रयः, द्वितीयेऽनवस्था-
दीति प्रकृतन्यायापात इति ॥ ४४६ ॥

## नञिवयुक्तमन्यसदृशाऽधिकरणे तथा ह्यर्थ-गतिरिति न्यायः ॥ ४४७ ॥

नञ्युक्तमिव युक्तञ्च यत्किञ्चिद्दृश्यते तत्र तस्माद्भिन्ने
तत्सदृशेऽधिकरणे द्रव्ये कार्य्यं विज्ञायते, हि यतस्त-
थार्थगतिरस्ति, तादृशस्यैवार्थस्य गतेर्लोके प्रतीतिरस्ती-
ति भावः । तद्यथा-अब्राह्मणमानयेत्युक्ते ब्राह्मणसदृशं
क्षत्रियमेवानयति, नासौ लोष्टमानीय कृती भवतीति
नञ्युक्तस्योदाहरणम् । न चायं न्यायः प्रसज्जकविष

स्तस्य निषेधपरत्वात्। तथोक्तं हारिणा—" उभौ नञौ समाख्यातौ पर्य्युदासप्रसज्जकौ। पर्य्युदासः सदृग्ग्राही प्रसज्जस्तु निषेधकृत्॥" इति। इवयुक्तोदाहरणं तु लोके प्रसिद्धमेव चन्द्रमिव मुखं पश्येत्यादि। अयम् " भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः " ३। १। १२। इति सूत्रमहाभाष्ये स्पष्टः। " सुट् कात्पूर्वः " ६। १। १३५। इति सूत्रमहाभाष्ये त्वस्य न्यायस्य 'नञ्युक्तमिवयुक्तं चान्यस्मिन्सदृशे कार्य्यं विज्ञायते ' इति स्वरूपान्तरमुक्तमिति ज्ञेयम्। परिभाषेन्दुशेखरे लौकिकन्यायसिद्धपरिभाषात्वेन व्यवहृतो यमिति तत्रैव विस्तरः॥ ४४७॥

## अवयवे शास्त्रार्थसम्प्रत्यय इति न्यायः ४४८

" वसन्ते ब्राह्मणोऽग्नीनादधीत " इति सकृदाधाय कृतः शास्त्रार्थ इति कृत्वा पुनः प्रवृत्तिर्न भवतीति " गर्भाष्टमे ब्राह्मण उपनेयः " इति सकृदुपनीय कृतः शास्त्रार्थ इति कृत्वा पुनः प्रवृत्तिर्न भवतीति, तथा " त्रिर्हृदयंगमाभिरद्भिरशब्दाभिरुपस्पृशेत् " इति सकृदुपस्पृश्य कृतः शास्त्रार्थ इति कृत्वा पुनः प्रवृतिर्न भवतीति, तथा प्रकृतेपि " एकः पूर्व्वपरयोः " ६। १। ८४। इति सूत्रस्थमहाभाष्ये विवृतोयं न्यायः, विस्तरभयान्नेह प्रपञ्च्यते॥४४८॥

## सम्भवति सामानाधिकरण्ये वैयधिकरण्यस्याऽन्याय्यत्वमिति न्यायः॥ ४४९॥

आधारोऽधिकरणम्, समानमधिकरणं ययोस्तयोर्भा-

वस्सामानाधिकरण्यमेकाश्रयत्वम् । पदयोरेकार्थनिष्ठत्वमेकविशेष्यकप्रतीतिजनकत्वमिति यावत् । न चैकार्थनिष्ठत्वे सत्येकविभक्तिकत्वं सामानाधिकरण्यमिति वाच्यम् । देवदत्तः पचतीत्यत्रास्ति सामानाधिकरण्यं न त्वेकविभक्तिकत्वम्, गौरश्व इत्यत्रास्त्येकविभक्तिकत्वं न तु सामानाधिकरण्यमिति कैयटोक्तेः । अत एव " वृद्धिरादैच् " १ । १ । १ । इति सूत्रमहाभाष्ये " इदं खल्वपि भूयस्सामानाधिकरण्यमेकविभक्तिकत्वञ्च द्वयोश्चैतद्भवति " इति भेदेनोपादानमिति तद्भिन्नं वैयधिकरण्यमिति ॥ ४४९ ॥

## न ह्येकमुदाहरणं योगारम्भं प्रयोजयतीति न्यायः ॥ ४५० ॥

" मुद्गादण् " स्पष्टः ॥ ४५० ॥

## मूषासिक्तताम्रन्यायः ॥ ४५१ ॥

' तैजसावर्तनी मूषा ' इत्यमरः । तैजसमावर्तते यत्र सा तैजसावर्तनी स्वर्णादिपाकार्थः पात्रविशेषो मूषा स्यात् । 'कुठाली' इति मुलतानभाषायां ख्याता । ' मूष--स्तेये ' इत्यस्माद्धातोर्भिदाद्यङिति । यथा तत्र मूषायां द्रुतं ताम्रं

---

१ एकमुदाहरणं सामान्यतो योगारम्भं न प्रयोजयतीत्यर्थः । महाभाष्यकृताऽपि ' नामि ' इति सूत्रे ' ह्रस्वनद्यापः-- ' इति सूत्रस्थह्रस्वग्रहणफलकथनावसरे--" इदं तर्हि त्वं नृणां नृपते जायसे शुचिः । नह्येकमु० " इत्यादिनाऽयमेवार्थोध्वनितः । तथा च--'मुद्गादण्' 'मध्यान्मः' इत्याद्युदाहरणं कथमिति विभावयन्तु सुधियः ।

२ इगुपधलक्षणकप्रत्ययेन सिद्धत्वादेतदर्थविवक्षायामपि "गुरोश्च हलः" इत्यप्रत्ययेन सिद्धेभिदादित्वकल्पनस्याऽन्याय्यत्वाच्चैतच्चिन्त्यप्रयोजनमिति भाति । मुषेतिपाठस्वीकारे तु 'मुष--स्तेये' इति क्रैयादिकाद्यथास्थितमपि साधु ।

सिक्तं सत्तन्निभं जायते तत्समानाकारवद्भवति, तथा रूपादी-न्विषयान्व्याप्नुवद्विषयीकुर्वच्चित्तमवश्यं तत्सदृशमुपलभ्यत इति भावः। उक्तञ्च पंचदश्याम्—"मूषासिक्तं यथा ताम्रं तन्निभं जायते तथा। रूपादीन्व्याप्नुवच्चित्तं तन्निभं दृश्यते ध्रुवम्॥" इति॥ ४५१॥

## इन्द्रजालन्यायः॥ ४५२॥

इन्द्रेण योगविशेषेण जालमित्यर्थः। यथा—मन्त्रौषधा-दिना यथास्थितस्य वस्तुनोऽन्यथा प्रत्यायनं भवति, तथा सर्व्वं जगन्मायामयं मिथ्याभूतमित्यर्थः। उक्तञ्च वृद्धैः— "एतस्मात्किमिवेन्द्रजालमपरं यद्गर्भवासस्थितं रेतश्चेतति हस्तमस्तकपदप्रोद्भूतनानांकुरम्। पर्य्यायेण शिशुत्वयौवन-जरावेषैरनेकैर्वृतं पश्यत्यत्ति शृणोति जिघ्रति तथाऽगच्छ-त्यथो गच्छति॥" इति॥ ४५२॥

## चक्षुर्दीपन्यायः॥ ४५३॥

यथाऽन्धकारावृतघटादिदर्शने चक्षुर्दीपावुभावप्यपेक्ष्येते, दीपदर्शने तु तथा न किन्त्वेकं चक्षुरेवापेक्ष्यते तथा "ब्रह्म-ण्यज्ञाननाशाय वृत्तिव्याप्तिरपेक्षिता। स्वयं स्फुरणरूप-त्वान्नाभास उपयुज्यते॥" इति॥ ४५३॥

## या प्रीतिरविवेकानां विषयेष्वनपायिनी। त्वामनुस्मरतस्सा मे हृदयान्मापसर्प्पतु॥ इति न्यायः॥ ४५४॥

" इति न्यायेन सर्व्वस्माद्भोग्यजाताद्विरक्तधीः। उप-

संहृत्य तां प्रीतिं भोक्तर्य्यैव बुभुत्सते॥"। अयमर्थः—भोग्येषु प्रेमत्यागपुरस्सरमात्मप्रेमकर्तव्यतायां दृष्टान्तत्वेनेश्वरे प्रेमप्रार्थनापुरस्सरं पुराणवचनरूपन्यायमुदाहरति—या प्रीतिरिति। नास्ति विवेको येषां तेऽविवेकाः। अर्शआदिभ्योऽच्। अर्थादविवेकिनामात्मज्ञानशून्यानां विषयेष्वनपायिनी दृढा या प्रीतिरस्ति हे माप लक्ष्मीपते सा प्रीतिस्त्वामनुस्मरतस्त्वां सदा चिन्तयतो मम हृदयान्मनसः सर्प्पतु अपगच्छतु। मम मनो विषयेष्वासक्तिं परित्यज्य त्वय्येव सदा तिष्ठत्वित्यर्थः। यद्वा—अविवेकिनां विषयेषु दृढा या यादृशी प्रीतिरस्ति सा तादृशी विषयेषु विद्यमाना प्रीतिस्त्वामनुस्मरतो मे हृदयान्माऽपसर्पतु मा अपगच्छतु-सदा तिष्ठत्वित्यर्थः। भवत्वेवं पुराणे श्रुतौ किमायात, मित्यत आह—इति न्यायेनेति। इत्यनेन पुराणोक्तन्यायेन सर्व्वस्माद्भोग्यजातात्पतिजायादिलक्षणाद्विरक्तधीः विरक्ता धीर्य्यस्याऽसौ विरक्तधीः पुरुषस्तां भोग्यगोचरां प्रीतिं भोक्तर्य्यात्मनि ह्युपसंहृत्यैवमात्मानं बुभुत्सते बोद्धुमिच्छतीति भावः। उक्तञ्च कयाचिद्भक्तशिरोमणिगोप्या-"हस्तमुत्क्षिप्य यातोसि बलात्कृष्ण किमद्भुतम्। हृदयाद्यदि निर्य्यासि पौरुषं गणयामि ते॥" इति ॥४५४॥

## हिरण्यनिधिन्यायः॥ ४५५ ॥

यथा—सति त्रिविधभूतभाविवर्त्तमानाऽन्यतमप्रतिबन्धे ज्ञानं नोदेति। तद्यथा—हिरण्यनिधिं निहितं क्षेत्र उपर्य्युपरि

संचरन्तो न विन्देयुः, एवमेवेमाः प्रजास्सर्व्वा अहरह-र्ब्रह्मलोकं गच्छन्ति ह्यत एतं ब्रह्मलोकं न विन्दन्तीति संक्षेपः ॥ ४५५ ॥

## अतीतमहिषीस्नेहन्यायः ॥ ४५६ ॥

यथा—कश्चिद्यतिः पूर्व्वं गार्हस्थ्यदशायां कस्यांचिन्म-हिष्यां स्नेहं कृत्वा पश्चात्संन्यासानन्तरं श्रवणे प्रवृत्तोऽपि तेनैव स्नेहजनितप्रतिबंधनेन तत्त्वं गुरुणोपदिष्टमपि न ज्ञात-वानिति लोके गाथा प्रतीयते, तथाभूतोऽपि प्रतिबन्धो ज्ञानमवरुणद्धि। विस्तरस्तु वेदान्तग्रंथेषु बोध्यः ॥ ४५६ ॥

## व्यभिचारिणीन्यायः ॥ ४५७ ॥

यथा परपुरुषाऽऽसक्ता व्यभिचारिणी स्त्री निजगृहक-र्म्मणि व्यग्रापि निजजारसङ्गजन्यकामाऽऽनन्दं स्वान्तेन प्रतिक्षणं ध्यायाति, तथा धीरो लोके व्यवहरन्नप्यखण्डब्रह्मा-नन्दरसं हृदयाब्जे स्वादयतीति भावः। उक्तं च—"यथा व्यस-निनी नारी व्यग्रापि गृहकर्म्मणि। तदेवाऽऽस्वादयत्यन्तः पर-सङ्गरसायनम् ॥ एवं तत्त्वे परे शुद्धे धीरो विश्रान्तिमागतः। तदेवाऽऽस्वादयत्यन्तर्बहिर्व्यवहरन्नपि ॥" इति ॥ ४५७ ॥

## मणिप्रदीपप्रभान्यायः ॥ ४५८ ॥

मणिश्च प्रदीपश्च मणिप्रदीपौ, तयोः प्रभा मणिप्रदीप-प्रभा। यथा—कस्मिंश्चिन्मन्दिरे अपवरकस्य आवरकस्य आच्छादकस्येति यावद्, अन्तर्द्दीपस्तिष्ठति तस्य प्रभा बहिर्द्वारप्रदेशे रत्नमिव वर्तुला ह्युपलभ्यते, तथाऽ-

न्यस्मिन्मन्दिरेऽपवरकस्यान्तःस्थितस्य रत्नस्य प्रभा बहिर्द्वारप्रदेशे दीपप्रभेव रत्नसमानोपलभ्यते, तथाविधं प्रभाद्वयं दूरतो दृष्ट्वाऽयं मणिरयं मणिरिति बुद्ध्या द्वौ पुरुषावभिधावनं कुरुतस्तयोर्द्वयोरपि प्रभाविषये जायमानं मणिज्ञानं भ्रान्तमेव। अथापि दीपप्रभायां मणिबुद्धिं कृत्वा धावता पुरुषेण मणिर्नोपलभ्यते, मणेः प्रभायां मणिबुद्ध्या धावता मणिर्लभ्यत एव। अयं भावः—या दीपप्रभायां मणि-भ्रान्तिरस्ति स विसंवादिभ्रमः, या मणिप्रभायां मणिबुद्धि-रस्ति स सँवादिभ्रम इति। एवं हि-" स्वयं भ्रमोपि संवादी यथा सम्यक्फलप्रदः। ब्रह्मतत्त्वोपासनापि तथा मुक्तिफलप्रदा ॥ " इत्युक्तमित्यन्यत्र विस्तरः ॥ ४५८ ॥

## सुभगाबालोदिताख्यायिकान्यायः ॥ ४५९ ॥

सुभगा बालयोदिता आख्यायिका। कथेत्यर्थः। यद्वा-सुभगया बालायोदिता सुभ[1]गाबालोदिता। यथा—" बाल-स्य हि विनोदाय धात्री वक्ति शुभां कथाम्। क्वचित्सन्ति महाबाहो राजपुत्रास्त्रयः शुभाः॥ द्वौ न जातौ तथैकस्तु गर्भे एव न च स्थितः। वसन्ति ते धर्म्मयुक्ता अत्यन्तासति पत्तने ॥ स्वकीयाच्छून्यनगरान्निर्गत्य विमलाशयाः। गच्छ-न्तो गगने वृक्षान्ददृशुः फलशालिनः ॥ भविष्यन्नगरे तत्र राजपुत्रास्त्रयोऽपि ते। सुखमद्य स्थिताः पुत्र मृगयाव्यवहा-रिणः ॥ धात्र्येति कथिता राम बालकाख्यायिका शुभा।

---

१ पुंवद्भावस्तु न शंक्यः, प्रियादिष्वेतत्पाठात्।

निश्चयं निर्ययौ बालो निर्विचारणया धिया ॥" इति, तथा " इयं संसाररचना विचारोज्झितचेतसाम् । बालकाख्यायिकेवेत्थमवस्थितिमुपागता ॥" इत्यन्यत्र विस्तरः ४५९॥

## राहोश्शिर इति न्यायः ॥ ४६० ॥

अयं न्यायो भाष्यप्रदीपभाष्यप्रदीपोद्द्योतयोः कैयटनागोजिभट्टाभ्यामुदाहृतः । तथाहि—महाभाष्यपस्पशाह्निके-"अथ व्याकरणमित्यस्य शब्दस्य कः पदार्थः । सूत्रम् । सूत्रे व्याकरणे षष्ठ्यर्थोऽनुपपन्नः । सूत्रे व्याकरणे षष्ठ्यर्थो नोपपद्यते व्याकरणस्य सूत्रमिति " ॥ इति मीमांसायां बहुधानुयुज्य प्रत्युच्य च " नैष दोषः । व्यपदेशिवद्भावेन भविष्यति" इति समाहितामिति । अत्र कैयटः-'व्यपदेशिवद्भावेनेति—यथा राहोश्शिर इत्येकस्मिन्नपि वस्तुनि शब्दार्थभेदाद्भेदव्यवहारः, एवमिहापि व्याकरणशब्देन शास्त्रस्य व्याकृतिक्रियायां करणरूपत्वमुच्यते । सूत्रशब्देन तु समुदायरूपतेति भेदव्यवहार उपपद्यते' इति। अत्र शब्दार्थभेदादिति प्रतीकमादाय नागेशः— 'अनेकावस्थायुक्तं शिरो राहुशब्दार्थः, यत्किञ्चिदेकावस्थायुक्तं शिरश्शब्दार्थः, तादृशराहुशब्दार्थस्य तादृशशिरःपदार्थोऽवयव इति षष्ठ्यर्थोपपत्तिरिति भावः । सूत्रशब्देन तु समुदायरूपतेति कैयटः । अत्रैकावस्थायुक्तस्य तस्य व्याकृतिक्रियाकरणावस्था विशिष्टमवयव इति तद्रूपावयवस्याऽयं समुदाय इत्यर्थः । ईदृशे स्थले विकल्पात्मकं ज्ञानं वस्तुशून्यमेव । व्यपदेशिवद्भावविषयेप्येवमेव । "शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः " इति योगसूत्रे पतञ्जल्युक्ते-

रित्यन्य' इति नागेशः । अत्र केचिदित्थं मिथो विवदन्ते राहुः शिरः, कबन्धो वाऽयं प्रश्नः, केतुः शिरः कबन्धो वेति च। यदि च-राहुश्शिरः, कबन्धः केतुश्चेदेवं ब्रूषे तर्हि राहुः-कथं लक्षयति, केतुश्च कथं न लक्षयति। राहोर्लक्षा नास्त्येव शिरोमात्रत्वात्, केतोश्च कबन्धरूपत्वाल्लक्षा सम्भवति। ज्योतिश्शास्त्रे तु केतुजन्यलक्षादोषो नाभिहितः, राहोश्चोक्तः। किञ्च-शिखी केतुरित्यपि कथमशिरस्कस्य शिखाया असम्भवादिति। अथ च कबन्धो राहुः शिरः केतुरिति मतं मतिमतो भवतो भवति चेत्-कथं तर्हि लिखितमस्ति-"सन्त्यन्ये च बृहस्पतिप्रभृतयस्सम्भाविनः पञ्चश (षा) स्तान्प्रत्येष विशेषविक्रमरुची राहुर्न वैरायते। द्वावेव ग्रसते दिनेश्वरनिशाप्राणेश्वरौ भास्वरौ भ्रातः पर्व्वणि पश्य दानवपतिश्शीर्षावशेषाकृतिः॥" इति। किञ्च-"एक एव हि तेजस्वी सैंहिकेयो विधन्तुदः। शिरोमात्रावशेषेण जीयन्ते येन शत्रवः॥" इति। किञ्च-"एकस्स एव जीवति हृदयविहीनोऽपि सहृदयो राहुः। यस्स किल लघिमभाजनमुदरं न बिभर्ति दुष्पूरम् ॥" इति। ईदृशानि वचनानि बहूनि सन्ति। राहोश्शिर इति न्यायरूपाभियुक्तोक्तिश्च कथमित्यलं बहुना॥ किञ्च-ग्रहणकारकोऽष्टमग्रहो राहुरस्ति न वा। अस्तीति-कथम्, किमाकारः, न वेति कथमिति मीमांसायामुच्यते-अत्र बहवो विकल्पाः। तथाहि-केचित्तु-पुरा सैंहिकेयोऽसुरविशेषो राहुः पीतामृतो विष्णुचक्रच्छिन्नशिरस्कोपि न मृतः। ब्रह्मवरप्रदान-

तश्च ग्रहत्वं गत इति । उक्तं च-“ कश्यपस्य गृहिणी तु सिंहिका राहुवास्तुतनयावजीजनत् । पूर्व्वजो हरिनिकृत्तकन्धरो देवतैरवरजो निपातितः ॥ ” इत्यादि । किञ्च-जातग्रहत्वेऽप्यसितत्वात्सूर्य्यादिग्रहवन्न दृश्यते गगने पर्व्व-कालादन्यत्र ब्रह्मवाक्यादिति ॥ अन्ये तु-मुखपुच्छविभक्ताङ्गं राहुं वदन्तीति । मुखपुच्छाभ्यां विभक्तान्यंगानि यस्य सः । तदाह वीरभद्रः-“ सिंहिकातनयस्यास्य राहोः पुच्छमुखादृते । नाऽन्यदस्त्यपरं बाहुकटिपादादिकं तथा ॥” इति । अपरे तु-भुजंगाकारमिमं प्राहुः । यथोक्तम्-“भषद्कान्तरितो राहुः सूर्य्याचन्द्रमसावुभौ । छादयत्युरगाकारो वरदानात्स्वयम्भुवः ॥ ” इति । देवलस्तु-“ अन्धकारमयो राहुर्मेघखण्ड इवोत्थितः । आच्छादयति सोमार्कौ पर्व्व-काले ह्युपस्थिते ॥”इत्याह । अपरे तु-मूर्तिरहितमन्धकारमयं राहुमाहुरिति । तमोमयस्य तमसः ’ इति सिद्धान्तोक्तेः । इत्यादिबहवो विकल्पाः । एवं यथाकथञ्चिदस्तु राहुस्स एव सूर्य्याचंद्रमसोर्ग्रहणं करोतीति बह्वाचार्य्यमतम् । इदमेव च राहुकृतं ग्रहणं लोके आगोपालाङ्गनादिप्रसिद्ध-मिति कथयन्ति केचित् । वराहमिहिराचार्य्यस्तु-पूर्व्वाचार्य्यकृतनानाविकल्पान्स्वप्रौढयुक्तिभिर्निराकृत्य स्वमतमाहेत्थम्-“एवमुपरागकारणमुक्तमिदं दिव्यदृग्भिराचार्य्यैः । राहुरकारणमस्मिन्नित्युक्तः शास्त्रसद्भावः ॥ योसावसुरो राहुस्तस्य ब्रह्मणा वरोऽयमाज्ञप्तः । आप्यायनमुपरागे दत्तहुतांशेन ते भविता ॥ तस्मिन्काले सान्निध्यमस्य तेनोपचर्य्यते

राहुः।यास्योत्तरा शशीगतिर्गणिते ह्युपचर्य्यते तेन॥" एतदुक्तं भवति। "किञ्च गोलगणितेषु जिष्णुजः सोमरोमकमयाद-योऽपि च। पर्य्ययेण ननु राहुपातयोर्न्नामनी विदधुरेव तान्त्रि-काः॥"।अस्यार्थः–जिष्णुजो ब्रह्मगुप्तः,सोमः प्रसिद्धः,रोमको मुनिः,मयो मयासुरः, आदिपदेन ब्रह्मवसिष्ठादीनां ग्रहणम्, एते तान्त्रिकाः शास्त्रप्रणेतारो राहुपातयोर्न्नामनी पर्यायेणैव विदधुः, पातपर्य्याये राहुशब्दं प्रयुञ्जते घटकलशवदिति। तथा चोक्तम्–"कुमुदिनीपतिपातो राहुमाहुरिह केऽपि तमेव" इति। अतो यः पातः स एव राहुरिति सोमरोमकादीनाम-केर्वृत्तसम्पात एव राहुरित्यर्थः। एवं च सिंहिकासुतदैत्यवि-शेषो राहुस्तत्कबन्धः केतुर्वा स्वतन्त्रतया साक्षात्सूर्य्येन्द्वो-श्छादको नास्ति, किन्तु शरवृत्तक्रांतवृत्तयोर्द्वौ किल संपातौ-एकश्चन्द्रपातस्थानम्, द्वितीयस्तत्सप्तमं च। द्वे अपि राहो, स्थाने,ह्येकं राहोरपरं केतोश्च। तयोर्दूरगो रविश्चन्द्रो वा ग्रासं नैति, शरबाहुल्यात्। शरो हि–राहुचन्द्रबिम्बमध्ययोरन्त-रम्, अतो मानैक्यार्द्धादूने शरे सत्येव ग्रहणं न त्वधिके इत्येतद्ग्रहगणिते प्रसिद्धम्। एवं च चन्द्रविक्षेपज्ञानार्थं यश्च-न्द्रपातः परिकल्पितस्स एव लोके राहुरित्युच्यते, स एव ग्रहणे कारणमिति मिहिराशयः। उक्तं च सूर्य्यसिद्धान्ते-"दक्षिणोत्तरतोप्येवं पातो राहुः स्वरंहसा।विक्षिपत्येष विक्षेपं चंद्रादीनामपक्रमात्॥"। राहुरिति-पातस्थानाधिष्ठात्री देवता राहुर्जीवविशेषः, चन्द्रपातस्तु दैत्यविशेषो राहुः–'रहत्यागे' धातुः, रहति त्यजति ग्रहं राहुरिति व्युत्पत्तेः। बाहुल-

काडुण् इति तट्टीका। सिद्धान्तशिरोमणावपि—"दिग्देशकालावरणादिभेदान्न च्छादको राहुरिति ब्रुवन्ति। तन्मानिनः केवलगोलविद्यास्तत्संहितावेदपुराणगुह्यम्॥ राहुः कुभामण्डलगः शशाङ्कं शशाङ्कगश्छादयतीनबिम्बम्। तमोमयो ब्रह्मवरप्रदानात्सर्व्वागमानामविरुद्धमेतत्॥" इति। तथाहि संहितायाम्—" जिह्वावलेढि परितस्तिमिरतुदो मण्डलं यदि सलेहम्" इति। "अशनिभयसम्प्रदायी पाटलिकुसुमोपमो राहुः" इति। तथा च श्रुतिः—"स्वर्भानुर्ह वा आसुरिः सूर्य्यं तमसा विव्याध" इति माध्यंदिनी श्रुतिः। अथर्व्वश्रुतौ हंसोपनिषदि च—" सोहं धनामिति धनमिति किलिकिलिलक्षराहोः शिर आच्छादयति भाच्छन्नं पाप्मा वै छाया रजनीरूपा पाप्मानं करोदुराधर्षयाति कर्षयति घृणी विरश्मिविरेचयाति पृथ्वीमाच्छादयति दीप्तिमाच्छादयति द्युतिमाच्छादयति" इत्यादि। तथा च पुराणवाक्यम्—"सर्व्वं गंगासमं तोयं सर्व्वे ब्रह्मसमा द्विजाः। सर्व्वं भूमिसमं दानं राहुग्रस्ते दिवाकरे॥" इति। तथा च स्मृतिवाक्यम्—"न प्रशस्तं निशि स्नानं राहोरन्यत्र दर्शनात्" इति। "सर्व्वेषामेव वर्णानां सूतकं राहुदर्शने" इति च। एतेन यद्वराहमिहिरो न राहुरित्याह ताण्डवितबाहुरुच्चकैस्सा[1] तदुक्तिश्चिन्त्येत्यलं बहुविस्तरेण॥ ४६०॥

## नागृहीतविशेषणा बुद्धिर्विशेष्यमुपसंक्रामतीति न्यायः॥ ४६१॥

---

१ अत्र 'रित्याद्यु—' इत्यपि पाठः, सङ्गतिस्तु मनीष्यूह्या।

जातिरेव शब्दार्थ इति मीमांसकमतम् । तथाहि-व्यक्तीनामानन्त्यादेकव्यक्तौ शक्तिग्रहे व्यक्त्यन्तराबोधाच्च न व्यक्तौ शक्तिसम्भवः । जातिविशिष्टायां व्यक्तौ शक्तिरित्युक्तौ तु नागृहीतविशेषणा बुद्धिर्विशेष्यमुपसंक्रामतीति न्यायादावश्यकत्वाच्च जातावेव शक्तिरस्तु व्यक्तिबोधस्त्वाक्षेपादित्यन्यत्र विस्तरः ॥ ४६१ ॥

## अयाचितमण्डनन्यायः ॥ ४६२ ॥

अजगरप्रवर्त्तनवद्याच्ञां विनैव लब्धं वस्तु विशेषमयाचितामित्युच्यते । मण्डनं भूषणम् "अलङ्कारस्त्वाभरणं परिष्कारो विभूषणम् । मण्डनञ्च" इत्यमरात् । अयाचितं च तन्मण्डनञ्चेति समाहारः । यथेश्वरसुहृदः स्वयं निर्द्धना अपि तदीयेन धनेन फलभाजः, तद्वद्यत्र व्यवहारस्तत्रास्य प्रवृत्तिरिति । अत्रेदं बोध्यम्–नीलं घटं करोतीत्यादौ घटपदोत्तरद्वितीयया कर्म्मत्वस्याभिहिततया नीलपदोत्तरं द्वितीया न प्राप्नोतीत्याशङ्क्य नीलं करोति घटं करोतीति पृथगेवाऽन्वयः, पश्चान्मानसो नीलघटयोरभेदाऽवगम इति समाहितम् । 'तिङ्कृत्तद्धित'–इति परिगणनन्तु नाश्रयणीयमित्याशयः । यदाऽयाचितमण्डनन्यायेनैकस्मिन्नेव कर्म्मणि घटपदादिवन्नीलपदादपि द्वितीयेति पक्षस्तदा साधुत्वार्थकत्वप्रवादः । अत एव " अनभिहिते " २ । ३ । १ । इति पाणिनीयसूत्रमहाभाष्ये प्रोक्तम् । तथाहि-प्रकृतसूत्र २।३।१। प्रत्याख्यानकर्त्तव्याऽकर्तव्यतामीमांसायामारम्भवादिभाष्यमाह–" कटं करोति भीष्ममुदारं शोभनं

दर्शनीयमिति कटशब्दादुत्पद्यमानया द्वितीययाऽभिहितं कर्म्मेति कृत्वा भीष्मादिभ्यो द्वितीया न प्राप्नोति । का तर्हि प्राप्नोति । प्रथमा । तद्यथा—कृतः कटो भीष्म उदारः शोभनो दर्शनीय इति । करोतेरुत्पद्यमानेन क्तेनाऽभिहितं कर्म्मेति कृत्वा भीष्मादिभ्यो द्वितीया न भवति । का तर्हि । प्रथमा भवति । नैष दोषः । न हि ममाऽनभिहिताधिकारोऽस्ति, नापि परिगणनम्, सामर्थ्यान्मे विभक्तीनामुत्पत्तिर्भविष्यति । अस्ति च सामर्थ्यम् । किं कर्म्मविशेषो वक्तव्यः । अथ वा कटोपि कर्म, भीष्मादयोपि कर्म्मणीत्येव सिद्धम् । अथ वा कट एव कर्म्म, तत्सामानाधिकरण्याद्भीष्मादिभ्यो द्वितीया भविष्यति " इत्यादि । 'विशेष्यसमानविभक्तित्वं विशेषणे न्याय्यमिति भावः । तद्यथा—ईश्वरस्य सुहृदः स्वयं निर्द्धना अपि तदीयेन धनेन धनफलभाजस्तद्वत्' इति कैयटः । विस्तरस्तु भाष्यादिषु ॥ ४६२ ॥

## नामार्थयोरभेदान्वय इति न्यायः ॥४६३॥

नम्यतेऽभिधीयतेऽर्थोऽनेन 'णम—प्रह्वत्वे शब्दे च' इति धातोः "नामन्सीमन्-" इति निपातितः । वा 'म्ना—अभ्यासे' इति धातोर्नामन्नित्यादिना निपातनान्मलोपः । वा—नमति आख्यातार्थं प्रति विशेषणीभवतीति नाम । नामाऽत्र "अर्थवदधातुरप्रत्ययः प्रातिपदिकम्" १ । २ । ४५ । "कृत्तद्धितसमासाश्च" १ । २ । ४६ । इति सूत्रद्वयलक्षितप्रातिपदिकाऽपरपर्य्यायत्वेन गृह्यते । अर्य्यते गम्यते, ऋच्छति वा 'ऋ-ग-

तौ' "उषिकुषिगार्तिभ्यस्थन्"इति थन्।यद्वा-अर्थ्यते याच्यते सुखरूपत्वात्सर्वैरित्यर्थः 'अर्थोऽभिधेये' इत्यमरः। अर्थः, अभिधेयः,वाच्य इति पर्य्यायाः।तयोरभेदस्तादात्म्यसम्बन्ध इति भावः। अत एव पुरोवर्तिपदार्थं दृष्ट्वा वाचकजिज्ञासया कोऽयमिति प्रश्ने देवदत्तोऽयमित्युत्तरम् । अत एवोक्तं पातञ्जलभाष्ये—"सङ्केतस्तु पदपदार्थयोरितरेतराध्यासरूपः, स्मृत्यात्मकोऽयं शब्दः सोऽर्थः योऽर्थः स शब्दः" इति। इतरेतराध्यासः परस्परात्मकारोपः। अन्यस्मिन्नन्यधर्म्मावभासोऽध्यासः। स्मृत्यात्मक इत्यनेन ज्ञात एव सङ्केतः शक्तिबोधक इति सूचितम्।कः शब्दः, कोऽर्थ इति प्रश्ने घट इत्ययं शब्दो घट इत्ययमर्थ इति समानाधिकरणोत्तरदर्शनाच्छब्दाऽर्थयोरध्याससिद्धिः। अत एव "रामेति द्व्यक्षरं नाम मानभङ्गः पिनाकिनः। शौर्य्यभङ्गं रावणस्य मदभङ्गं तु वालिनः॥"इत्यादौ शब्दार्थयोरप्यभेदेन व्यवहारः।'ओमित्येकाक्षरं ब्रह्म' इत्यादावपि अभेदेनैव। निर्द्देशः। कैयटोऽप्याह-'अयं गौरयं शुक्ल इति शब्दार्थयोरभेदेन लोके व्यवहारदर्शनात्, इत्यादि, अभेदस्याऽध्यस्तत्वाच्च । भेदव्यवहारोऽपि—अस्यार्थस्याऽयं वाचक इति।अत एवोक्तं हरिणा—"तादात्म्यमुपन्यस्येव शब्दोऽर्थस्य प्रकाशकः"इति।अत्रेवशब्देन तादात्म्यस्यातात्त्विकत्वं सूचितमिति। यत्तु शब्दशब्दार्थयोरभेदेऽग्न्यादिशब्दैर्मुखदाहापत्तिरीति, तन्न, उक्तयुक्तया तादात्म्यस्यारोपितत्वेन दाहादिशक्तेरभावादित्यलं विस्तरेण। अत्र द्विधा नियमः—नामार्थयोरभेद एवेति,अभेदो नामार्थयोरेवे-

ति। आद्ये राज्ञः सुतस्य धनमित्यादौ व्यभिचारः। द्वितीये तु स्तोकं पचतीत्यत्रेत्यादि नेह प्रपञ्च्यते विस्तरभियेति ४६३

## यद्विवाहस्तद्गीतगानमिति न्यायः॥ ४६४॥

यथा यद्वधूवरयोर्विवाहो भवति लोके गानमपि तत्सम्बन्धि गीयते, नान्यदिति। तथा तत्तद्देवतापुराणादिषु तत्तद्देवतामाहात्म्यवचनानि ह्युपपद्यन्त इति नापि क्षतिर्नापि परस्परं विरोधः पुराणानामिति॥ ४६४॥

## कुशकाशालम्बनन्यायः॥ ४६५॥

यथा नद्यादौ पतितः सन्नन्यदालम्बनमलभमानो व्याकुलचित्तः कुशकाशादीनालम्बते, तथा वादे दृढासु युक्तिषु निरस्तासु भ्रान्तचित्तः पुमान्निर्बलां युक्तिमवलम्बमानः कृतकृत्यो भवतीति भावः॥ ४६५॥

## मानाधीना मेयसिद्धिरिति। प्रमाणाधीना प्रमेयसिद्धिरिति। न्यायः॥ ४६६॥

मानप्रमाणशब्दौ पर्य्यायवाचकौ। एवं मेयप्रमेयशब्दावपि ज्ञेयाविति। प्रमाता येनार्थं प्रमिणोति, प्रमीयते वा तत्प्रमाणम्। यत्प्रमीयते तत्प्रमेयम्। 'माङ्-माने' "अचो यत्" ३।१।९७। इति यति "ईद्यति" ६।४।६५। इतीत्वे "सार्व०" इति गुणः। प्रमातुं योग्यं, प्रत्यक्षादिप्रमाणैः परिच्छेद्यमिति यावत्। यथा—जीवब्रह्मैक्यं शुद्धचैतन्यं वेदान्तानां प्रमेयमिति। "आत्मशरीरेन्द्रि-

यार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयम् " इति गौतमसूत्रमिति । अत एव " प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्ताऽवयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगमः " इति न्यायशास्त्रादिमसूत्रे प्रमाणशब्दः प्रथमोपात्तः । तदनुसारेण लक्षणस्य कथनीयतया सूत्रे प्रथमोद्दिष्टस्य प्रमाणस्य प्रथमं लक्षणं कथ्यते । साधनाश्रयाऽव्यतिरिक्तत्वे सति प्रमाव्याप्तं प्रमाणम् । तच्च मतभेदाद्बहुविधम् । तथाहि–प्रत्यक्षमेकमिति बृहस्पतिमतानुयायिनास्तिकशिरोमणिलोकायतमित्यन्वर्थनामधेयकचार्वाकाः ॥ " दृष्टमनुमानमाप्तवचनञ्च सर्व्वप्रमाणसिद्धत्वात् । त्रिविधं प्रमाणमिष्टप्रमेयसिद्धिः प्रमाणाद्धि ॥" इति कापिलपातञ्जलाः ॥ प्रत्यक्षानुमानोपमानशब्दभेदात्तच्चतुर्विधमिति न्यायमतम् ॥ वैशेषिकास्तु–"शब्दोपमानयोर्न्नैव पृथक्प्रामाण्यमिष्यते । अनुमानगतार्थत्वादिति वैशेषिकं मतम् ॥" इत्युक्तेः प्रत्यक्षमनुमानं च प्रमाणम्, शब्दोपमानयोस्त्वनुमानविधयैव प्रामाण्यमिति वदन्तीति ॥ प्रत्यक्षाऽनुमानोपमानशब्दाऽर्थापत्तिभेदात्पञ्चविधमिति प्राभाकराः ॥ प्रत्यक्षाऽनुमानोपमानशब्दाऽर्थापत्त्यभावाख्यानि षट् प्रमाणानीति वैदिकाः ॥ प्रत्यक्षा नानोपमानशब्दार्थापत्त्यभावसम्भवैतिह्याख्यान्यष्टौ प्रमाणानीति पौराणिकाः ॥ प्रमेयं द्वादशप्रकारकमात्मशरीरेत्यादि पूर्व्वमुक्तं बोध्यमिति ॥ ४६६ ॥

## असाधारण्येन व्यपदेशा भवन्तीति न्यायः ॥ ४६७ ॥

असाधारण्यश्च तदितरावृत्तित्वे सति सकलतद्वृत्तित्व-मिति । व्यपदेशत्वञ्च-“ व्याजेनात्माभिलाषोक्तिर्व्यपदेश इतीर्य्यते” इति । तथा–प्रमाणादिपदार्थषोडशके प्रतिपाद्य-माने कथमिदं न्यायशास्त्रमिति व्यपदिश्यत इत्याशङ्कायां प्रकृतन्यायेन न्यायस्य परार्थानुमानापरपर्यायशब्दस्य सकलविद्यानुग्राहकतया सर्व्वकर्मानुष्ठानसाधनतया प्रधान-त्वेन तथा व्यपदेशो युज्यत इति समाधानमिति । तथाऽ-भाणि सर्व्वज्ञेन–“ सोऽयं परमो न्यायः विप्रतिपन्नपुरुष-प्रतिपाद्यकत्वात्तथा प्रवृत्तिहेतुत्वाच्च” इति । पक्षिलस्वामिना च–सेयमान्वीक्षिकी विद्या प्रमाणादिभिः पदार्थैः प्रविभज्य माना–“ प्रदीपः सर्व्वविद्यानामुपायः सर्व्वकर्म्मणाम् । आश्रयः सर्व्वधर्माणां विद्योद्देशे परीक्षिता ॥ ” इति बोध्यम् ॥ ४६७ ॥

## उष्ट्रकण्टकभक्षणन्यायः ॥ ४६८ ॥

यथोष्ट्रस्य शमीकण्टकवेधजातदुःखकालेऽपि शमीपत्रभ-क्षणजसुखलेशो भवति, तथाऽभीष्टविषयोपार्ज्जनदुःखकाले तदुपार्ज्जितद्रव्यजसुखलेशो यत्रोपदिश्यते, तत्रास्य प्रवृत्ति-रिति ॥ ४६८ ॥

## बहुसपत्नीकन्यायः ॥ ४६९ ॥

यथा–बहुसपत्नीकः पुरुषः सर्वासां पत्नीनां युगपत् कामनाकरणेऽशक्तो दुःखमनुभवति, तथा नानेन्द्रियविष-

यभोगेन तत्तदिन्द्रियपरोपि युगपत्कार्य्यप्राप्तौ दुःखमनुभवतीति । यथा चोक्तम्—" जिह्वैकतोऽमुमपकर्षति कर्हि तर्षा शिश्नोऽन्यतस्त्वगुदरं श्रवणं कुतश्चित् । घ्राणोऽन्यतश्चपलदृक् क च कर्म्मशक्तिर्बह्व्यस्सपत्न्य इव गेहपतिं लुनन्ति ॥" इति ॥ ४६९ ॥

## सुप्तप्रबुद्धन्यायः ॥ ४७० ॥

अयं न्यायः श्रीमद्भागवतीयाऽद्यश्लोकीयः 'तेने ब्रह्म हृदा य आदिकवये' इति वाक्यं विवृण्वता श्रीधरस्वामिनोल्लेखि श्रीभागवतभावार्थदीपिकायाम् तथाहि—'ननु सुप्तप्रबुद्धन्यायेन स्वयमेव वेदमुपलभता, नेत्याह, यद्यस्मिन्ब्रह्मणि सूरयोपि मुह्यन्ति, तस्माद्ब्रह्मणोऽपि पराधीनज्ञानत्वात् स्वतःसिद्धज्ञानः परमेश्वर एव जगत्कारणमित्यादि । दीपन्याख्यतट्टिपण्यां तु—श्रीराधारमणदासगोस्वामिना सुस्फुटार्थं कृतोयं न्यायः । तथाहि—ननु ब्रह्मेतिलोकेष्वतिप्रसिद्धोर्थोपि न्यायपदाभिधः । यथा—पूर्वेद्युराचार्य्याद्वेदमधीत्यसुप्त्वा परेद्युः प्रबुद्धो गुरुर्निरपेक्ष एव वेदं पठति, तद्वदैनंदिनकल्पे महाकल्पादौ तु—जातिस्मरवददृष्टविशेषात्कल्पान्तराऽनुष्ठितकर्म्मोपासनबललब्धब्रह्मत्वाधिकारः कल्पान्तरस्थं वेदं स्मरत्वित्यर्थः । शुक्लयजुर्वेदमंत्रभागस्योव्वटकृतभाष्येऽपि प्रोक्तम् । तथा हि—"तत्र पूर्वस्मिन्कल्पे विशिष्टकर्म्मजनितस्मृतिसंस्कारसन्तानानुच्छितधर्म्माणः सुप्तप्रबुद्धन्यायेन हिरण्यगर्भप्रभृतयः कल्पादौ सह विद्ययाऽभिव्यज्यमानाः स्मर्तारो द्रष्टारः ऋषय इत्युच्यन्ते" इत्यादि ॥ ४७० ॥

## यः कल्पः स कल्पपूर्वक इति न्यायः॥४७१॥

एवं हि संसारस्यानादित्वादीश्वरस्य च सर्वज्ञत्वादीश्वरो गतकल्पीयं वेदमस्मिन्कल्पे स्मृत्वोपादिशतीति भावः। "यथापूर्व्वमकल्पयत्" इति श्रुतेरिति ॥ ४७१ ॥

## गुणानां परार्थत्वादसंबन्धस्समत्वात्स्यादिति न्यायः ॥ ४७२ ॥

अत्र गुणपदेन 'गुणे शुक्लादयः पुंसि' इत्यभिधानात्, "अथ द्रव्याश्रिता ज्ञेया निर्गुणा निष्क्रिया गुणाः" इत्यभियुक्तोक्तेश्च "सत्त्वे निविशतेऽपैति पृथग्जातिषु दृश्यते। आधेयश्च क्रियाजश्च सोऽसत्त्वप्रकृतिर्गुणः॥ अपरआह—उपैत्यन्यज्जहात्यन्य दृष्टो द्रव्यान्तरेष्वपि। वाचकः सर्व्वलिङ्गानां द्रव्यादन्यो गुणः स्मृतः ॥" इति महाभाष्याच्च शुक्लादयो ग्राह्यास्तेषां पारार्थ्यं गुणत्वेन च साम्यं परस्परमसम्बन्धत्वञ्च स्फुटमेव। केचित्तु गुणवचनशब्देन समस्तकृदन्ततद्धितान्तसर्वनामजातिसङ्ख्यासञ्ज्ञाशब्दातिरिक्तशब्दो गृह्यते, आकडारसूत्रभाष्यपर्य्यालोचनया तादृशानामेव तत्सञ्ज्ञालाभात् । तत्र हि—प्रातिपदिकमात्रस्य गुणवचनसञ्ज्ञामुक्त्वाऽग्रे तद्बाधकत्वेनैताः क्रमेण पठिताः 'सत्त्वे निविशते' इत्यादि । "वोतो गुणवचनात्" ४ । १ । ४४ । इति सूत्रस्थभाष्यन्त्वेकदेशि, बहुविशेषणानां वैयर्थ्यात्, भाष्यकृताऽख्यातत्वाच्च। तस्मादाकडारसूत्रोक्तमेव भाष्यसम्मतमिति वदन्तीति दिग् ॥ ४७२ ॥

## क्षीरदग्धजिह्वान्यायः ॥ ४७३ ॥

यथा तप्तक्षीरेण दग्धजिह्वः कश्चित्तक्रं फूत्कृत्य पिबति, तथा दैवात्सुखकारिवस्तुतः प्राप्ताऽनिष्टविवक्षायां बोध्योऽयमिति । उक्तञ्च—"क्षीरेण दग्धजिह्वस्तक्रं फूत्कृत्य पामरः पिबति । दांभिनमवलोक्य जनस्तद्वन्मां शंकते त्वया त्यक्तम् ॥" इति भक्तवाक्यं भगवन्तं प्रति ॥ ४७३ ॥

## कान्तारोत्तरणाय सार्थ इति न्यायः ॥४७४॥

'कान्तारं वर्त्म दुर्गमम्' इति, "वृन्दभेदास्समैर्वर्ग्गः संघसार्थौ तु जन्तुभिः" इति चामरः । अयं न्यायः "इको गुणवृद्धी" १ । १ । ३ । इति सूत्रस्थकैयटेऽभिहितः । तथाहि—"सम्बन्धमनुवर्तिष्यते" इति महाभाष्यस्थसम्बन्धमिति प्रतीकमादाय संबध्यते इति सम्बन्धम्, कर्म्मणि घञ्, नपुंसकस्याभिधेयत्वान्नपुंसकनिर्देशः । आदैज्ग्रहणाऽसंबद्धं वृद्धिग्रहणम् "अदेङ् गुणः" १ । १ । २ । इत्यत्रानुवर्तते, तेनाऽदेङ्भिर्न्न संबध्यते । इह त्वनुवृत्तमादैचौ जहाति कान्तारोत्तरणाय सार्थस्येव त्यागोपादाने" इति ॥ ४७४ ॥

## आगन्तुकानामन्ते निवेश इति न्यायः॥४७५

आगन्तुकोऽनित्यस्थायी । अयमपि—"इको गुणवृद्धी"१। १ । ३ । इति सूत्रस्थभाष्यप्रदीपोद्द्योते निरूपितः । तथाहि—" यदीग्ग्रहणं क्रियते द्यौः पन्थाः स इमम् । एतेपीकः प्राप्नुवन्ति । सञ्ज्ञया विधाने नियमः । संज्ञया ये विधीयन्ते तेषु नियमः । किं वक्तव्यमेतत् । नहि ।

कथमनुच्यमानं गंस्यते। गुणवृद्धिग्रहणसामर्थ्यात्" इत्यादिभाष्यमिति। 'नन्वेवं सत्युत्तरत्र निषेध्यसमर्पणार्थं गुणवृद्धिग्रहणस्य चारितार्थ्येन सामर्थ्यं दुरुपपादम्, अनुवर्तमानस्य स्वरूपपरत्वेन निषेध्यसमर्पकत्वाभावादिति चेन्न, 'आगन्तुकानामन्ते निवेश' इति न्यायेन अदेङ्सूत्रे गुणपदोत्तरं वृद्धिपदोपस्थित्या तत्साहचर्य्येण तत्र सूत्रस्वरूपपरत्वं तस्य' इत्यादि विवरणे स्पष्टमित्यलं बहुना॥४७५॥

## फलमुखगौरवं न दोषावहमिति न्यायः॥४७६॥

यत्र गौरवे फलसम्पत्तिर्भवेत्तत्रायं प्रवर्त्तते। यथा चायं न्यायो मुक्तावल्यां समासलक्षणानिरूपणप्रस्तावे निरूपितस्तथाहि—अत एव "निषादस्थपतिं याजयेत्" इत्यत्र न तत्पुरुषो लक्षणापत्तेः, किन्तु कर्म्मधारयः लक्षणाभावात्। न च निषादस्य संकरजातिविशेषस्य वेदानधिकाराद्याजनासम्भव इति वाच्यम्, निषादस्य विद्याप्रयुक्तेस्तत एव कल्पनत्वाल्लाघवेन मुख्यार्थान्वये तदनुपपत्त्या कल्पनायाः फलमुखगौरवतयेति दिक्॥ ४७६॥

## मत्तकाशिन्यादृष्टा तिर्य्यक्षु कामितेति न्यायः॥ ४७७॥

अयं न्यायो यत्राधिकार्थलाभेऽल्पार्थे वृत्तिरिति विवक्षा तत्र प्रवर्त्तते। मत्तकाशिनी स्त्रीविशेषः[1]॥ ४७७॥

---

१ "वरारोहा मत्तकाशिन्युत्तमा वरवर्णिनी" इति कोशात्।

## न हि सर्वः सर्वं जानातीति न्यायः ॥४७८॥

स्फुटः ॥ ४७८ ॥

## न हि सर्वत्रानीशशक्तिरिति न्यायः॥४७९॥

स्फुटः ॥ ४७९ ॥

## क्षीरोदकसम्पृक्तन्यायः ॥ ४८० ॥

अयं न्यायः "सन्यङोः" ६ । १ । ९ । इति सूत्रमहाभाष्येऽभिहितः। अस्यायमर्थः। संमिश्रत्वान्न ज्ञायते कियत्क्षीरम्, कियदुदकमिति। कस्मिन्वाऽवकाशे क्षीरम्,कस्मिन्वाऽवकाश उदकमिति। प्रकृतिप्रत्ययसंश्लेषेऽस्य न्यायस्य प्रवृत्तिर्दर्शिता भाष्यकारेणेत्यलमतिपल्लवितेन । किञ्चायं न्यायः । "तस्यादित उदात्तमर्द्धह्रस्वम्" १ । २ । ३२ । इति सूत्रमहाभाष्येऽपि विस्तरेणोक्त इति ॥ ४८० ॥

## सामर्थ्ययोगन्यायः ॥ ४८१ ॥

अयं न्यायः "इको यणचि" ६ । १ । ७७ । इति सूत्रमहाभाष्येऽभिहितः । तथाहि—"जश्त्वं न सिद्धं यणमत्र पश्य यश्चापदान्तो हलचश्च पूर्वः। दीर्घश्च यण् ह्रस्व इति प्रवृत्तं सम्बन्धवृत्त्या गुणवृद्धिबाध्यम्॥ नित्ये च यः शाकलभाक्समासे तदर्थमेतद्भगवाँश्चकार। सामर्थ्ययोगान्न हि किञ्चिदस्मिन्पश्यामि शास्त्रे यदनर्थकं स्यात्॥" इति । किञ्च—"प्रभुः स्वातन्त्र्यमापन्नो यदिच्छति करोति तत्। पाणिनेर्न नदी गङ्गा यमुना च स्थली नदी॥" इति ॥ ४८१ ॥

## न हि भुक्तवान्पुनर्भुंक्त इति न्यायः ॥४८२॥

स्फुटः । उक्तश्चायम् "इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च" ६ । १ । १२७ । इति सूत्रभाष्ये ॥ ४८२ ॥

## उक्तार्थानामप्रयोग इति न्यायः ॥ ४८३ ॥

अनित्योयं न्यायः "उक्तार्थानामपि प्रयोगो दृश्यते । तद्यथा–अपूपौ द्वावानय, ब्राह्मणौ द्वावानयेति "प्रत्यभिवादेऽशूद्रे" ८ । २ । ८३ । इति सूत्रभाष्यात् ॥ ४८३ ॥

## तात्स्थ्यात्ताच्छब्द्यमिति न्यायः ॥४८४॥

अयम् "पुंयोगादाख्यायाम्" ४ । १ । ४८ । इति सूत्रमहाभाष्येऽभिहितः । तद्यथा–" मञ्चा हसन्ति, गिरिर्दह्यते " इति स्पष्टः ॥ ४८४ ॥

## ताद्धर्म्यात्ताच्छब्द्यमिति न्यायः ॥ ४८५ ॥

तद्यथा–जटिनं यान्तं ब्रह्मदत्त इत्याह । ब्रह्मदत्ते यानि कार्य्याणि जटिन्यपि तानि क्रियन्तेऽतो जटी ब्रह्मदत्त इत्युच्यत इति ॥ ४८५

## तत्सामीप्यात्ताच्छब्द्यमिति न्यायः ॥४८६॥

गंगायां घोषः, कूपे गर्गकुलमित्यादिषु स्पष्टोयं न्यायः ॥ ४८६ ॥

## तत्साहचर्य्यात्ताच्छब्द्यमिति न्यायः ॥४८७॥

कुन्तान्प्रवेशय, यष्टीः प्रवेशयेत्यादिषु स्पष्टोयं न्यायः४८७॥

## अव्याविकन्यायः ॥ ४८८ ॥

तद्यथा–अवेर्मांसमिति विगृह्याविशब्दादुत्पन्नं भवत्या-

विकमिति । एवमथर्व्वाणमधीत इति विगृह्याथर्व्वणिक-मिति भविष्यतीति भाव इति भाष्ये स्पष्टम् ॥ ४८८ ॥

## शते पञ्चाशदिति न्यायः ॥ ४८९ ॥

यथा—व्यापकशतसंख्यायां व्याप्यपञ्चाशत्संख्या निविष्टा, एवं यत्र व्यापके व्याप्यस्य निवेशस्तत्रास्य प्रवृत्तिः । अयं न्यायः "यावानर्थ उदपाने सर्वतः सम्प्लुतोदके । तावान्सर्वेषु वेदेषु ब्राह्मणस्य विजानतः ॥ " इति भगवद्वाक्यव्याख्यायामित्थमुदाहृतः शङ्करानन्दस्वामिना । यावानिति—उदमुदकं पिबन्त्यस्मिन्नित्युदपानं जलाशयः । जातावेकवचनम् । तस्मिन्नुदपाने जलाशये सर्वत्र विद्यमानवापीकूपतडागपुष्कारिणीनदनद्यादौ पुण्यतीर्थे स्नानदानार्चनादिक्रियया साध्यमानोर्थः पुण्यलक्षणो यावान् यावत्परिमाणकः सिध्यति । सर्वतः सम्प्लुतोदके सर्वत्र सम्प्लुतं परिपूर्णमुदकं यस्य स सर्वतःसम्प्लुतोदकः समुद्रस्तस्मिन्नेव स्नानदानार्चनादिक्रियया लभ्यमानः पुण्यरूपोर्थस्तावानेव गंगादिपुण्यतीर्थेषु तत्रतत्र पृथक्पृथक् क्रियमाणस्नानदानादिक्रियालभ्यमानपुण्यविशेषैः समानपरिमाण एव सिध्यति, न ततो न्यूनायते, प्रकृतन्यायेन परिच्छिन्नजलानां गंगादीनां समुद्रेऽन्तर्भावात् । एवमेव सर्वेष्वृगादिवेदेषु प्रसिद्धैः कर्म्मभिर्यागयज्ञदानाध्ययनव्रततपोयोगादिभिरन्यैश्च पुण्यविशेषैः सम्पद्यमानः श्रुत्युक्त आनन्दः सार्वभौमादिब्रह्मान्तः पुनःपुनः शतगुणितो यावान् भवति, तावानानन्दो विजानतः सर्वमिदमहं ब्रह्मैवेति जगत्सर्वं

स्वश्च सच्चिदानन्दब्रह्मैव पश्यतः ब्राह्मणस्य ब्रह्मविद्यतेर्ब्र-ह्मानुभूत्या सिध्यति, एवमन्यत्रापि ज्ञेयमिति ॥ ४८९ ॥

## शतपत्रपत्रभेदन्यायः ॥ ४९० ॥

यथा–सूच्या शतपत्रपत्रभेदने कालयौगपद्यप्रतीतेर्भ्रमः, तथाहि–प्रथमक्षणे सूचीक्रियया तस्याः पत्रेण संयोगः, द्वितीये पत्रावयवयोः, तृतीये तयोर्विभागः, तुरीय आरंभसं-योगनाशः, पञ्चमे पत्रनाश इति प्रतिपत्रभेदने बहुक्षणवि-लम्बस्य युक्तिसिद्धत्वात्, तथा दीर्घशष्कुल्यादिभक्षणादौ रासनादिज्ञानानां यौगपद्यप्रतीतेर्भ्रम इति । एवं क्रमेण जायमानायां क्रियायां यौगपद्यभ्रमो यत्र विवक्ष्यते, तत्रास्य प्रवृत्तिरिति ॥ ४९० ॥

## यत्कृतकं तदनित्यमिति न्यायः ॥ ४९१ ॥

कृतकं कार्य्यं, जन्यभाव इति यावत्।तथा च–कार्य्यमात्र स्योत्पत्तेः प्रागसत्त्वेन प्रागभावप्रतियोगित्वान्न प्रागभावा प्रतियोगित्वघटितनित्यत्वम् । ध्वंसस्य प्रागभावप्रतियोगि-त्वेपि भाववत्त्वाभावान्न व्यभिचार इति तार्किकाः। वेदांति मते तु ध्वंसस्यापि नाशाभ्युपगमेन न भावत्वं विशेषणी-यमिति भेदः ॥ ४९१ ॥

## औपाधिकाऽऽकाशभेदन्यायः ॥ ४९२ ॥

यथौपाधिकाकाशगोचरं ज्ञानं सविशेषणे हीति न्यायेनो-पाधिभेदविषयम्, तथा जीवब्रह्मभेदविषयं प्रत्यक्षादिकं तदुपाधिभेदविषयमित्येवं यत्र विवक्ष्यते, तत्रायं प्रवर्तते ।

"घटसंवृत आकाशे नीयमाने। यथा पुनघटो नीयेत नाऽऽकाशं तद्वज्जीवो नभोपमः॥" इति श्रुत्युक्तिश्चैतन्न्यायमूलिकेति ॥ ४९२ ॥

## अन्धकूपपतनन्यायः ॥ ४९३ ॥

अनेन पथा गंतव्यमिति सत्पुरुषेणोपदिष्टस्तं पन्थानं मुञ्चन्नन्धो यथा कूपे पतति, एवं वेदाद्युपदिष्टमार्गं परित्यजन्नज्ञो नरकादिदुःखेषु पततीत्यस्य न्यायस्य तत्र प्रवृत्तिरिति ॥ ४९३ ॥

## अपवादन्यायः ॥ ४९४ ॥

अधिष्ठाने भ्रान्त्या प्रतीतस्य तदतिरेकेणाभावनिश्चयोऽपवादः। यथा—स्थाण्वादौ प्रतीतस्य पुरुषादेः स्थाण्वाद्यतिरेकेणाभावनिश्चय इति ॥ ४९४ ॥

## कफोणिगुडन्यायः ॥ ४९५ ॥

कं सुखं स्फोरयति 'स्फुर-स्फुरणे सञ्चलने च' णिजन्तः। अच इः, पृषोदरादिः। यद्वा—केन सुखेन फणति, स्फुरति वा 'फण्—गतौ','स्फुर—संचलने'ततइन्, पृषोदरादिः।"भुजबाहू प्रवेष्टोदोः स्यात्कफोणिस्तु कूर्प्परः" इत्यमरः। कफोणौ भुजमध्यग्रंथौ—'कोहणी-कूणी-किहुनी—इडक'इति प्रसिद्धे गुडाभावेऽपि तदाशया यथा लेहनमेवं यत्र वस्त्वसद्भावेऽपि तत्प्रत्याशया व्यापारभेदस्तत्रास्य प्रवृत्तिरिति ॥ ४९५ ॥

## काकमांसं शुनोच्छिष्टं स्वल्पं तदपि दुर्लभमिति न्यायः ॥ ४९६ ॥

अत्यंतनिकृष्टस्यातितुच्छस्यापि दुर्लभत्वेऽयं न्यायः प्रवर्तत इति ॥ ४९६ ॥

## दग्धबीजन्यायः ॥ ४९७ ॥

यथा दग्धस्य बीजस्य नाङ्कुरोत्पादत्कता, एवमविवेकनाशे न संसारवृक्षप्ररोह इत्येवं यत्र विवक्षा, तत्रास्य प्रवृत्तिरीति ॥ ४९७ ॥

## बिलवर्तिगोधान्यायः ॥ ४९८ ॥

यथा बिले गर्ते वर्तमानाया गोधाया विभजनं विभाजकधर्म्मेण निर्द्देशो न सम्भवति तस्या अदृष्टत्वात्, एवमज्ञातपरसिद्धान्तस्य तद्दूषणाय प्रवृत्तिर्भवतीत्येवं विवक्षायामस्य प्रवृत्तिरीति। अत्र गोधापदं बिलनिवासिनां सर्प्पादीनामुपलक्षणं ज्ञेयमिति ॥ ४९८ ॥

## मणिमन्त्रन्यायः ॥ ४९९ ॥

यथा मणिमन्त्रादीनां वह्नेर्दाहं प्रति स्वातन्त्र्येण प्रतिबंधकत्वं लोकप्रसिद्धं न च तत्र युक्त्यापेक्षा, एवं कामिनो जिज्ञासाया अपि ज्ञानमात्रं प्रति प्रतिबंधकत्वमित्येवं यत्र पृथक्प्रतिबंधकत्वं, तत्रास्य प्रवृत्तिरीति ॥ ४९९ ॥

## यद्विशेषयोः कार्य्यकारणभावोऽसति बाधके तत्सामान्ययोरपीति न्यायः ॥ ५०० ॥

यथा—तार्किकाणां घटत्वकुलालकृतित्वादिना कार्य्यकारणभावे सिद्धे कार्य्यत्वेन कृतित्वेन च कार्य्यकारणभा-

वः, न तु कुलालकृतेर्ज्जातित्वेन द्रव्यत्वेन घटादिकं प्रति कारणत्वम्, तथात्वे तयोरन्यथासिद्धत्वेनाकारणत्वं स्यात्, कारणतां प्रत्यन्यथासिद्धेर्बाधकत्वात्। अत एव न द्रव्यत्वेन दण्डादेर्घटादिकं प्रति कारणत्वं, नापीन्द्रियत्वेन प्रत्यक्षत्वावच्छिन्नं प्रति, इन्द्रियत्वस्यैकस्याऽभावादिति ॥ ५०० ॥

इति श्रीमद्विद्वद्वृन्दवन्दितपादारविन्दश्रीमन्महानुभाव
विद्वद्वर्य्यश्रीमत्पण्डितविभवरामशिष्यमुलतान-
नगरवास्तव्यसेतुपालोपनामकठाकुरदत्त-
शर्म्मविरचितभुवनेशन्यायसाहस्री-
ग्रन्थे पूर्व्वार्द्धं समाप्तम् ॥



॥ श्रीगणेशाय नमः ॥

# अथोत्तरार्द्धमारभ्यते ॥

## रक्तपटन्यायः ॥ ५०१ ॥

यदा त निराकांक्षेऽपि वाक्ये आकांक्षामुत्थाप्यैकवाक्यता क्रियते, तदा रक्तपटन्यायप्रवृत्तिः। यथा पटोस्तीति वाक्यस्य निराकांक्षस्यापि कीदृश इत्याकांक्षामुत्थाप्य रक्त इत्यनेनैकवाक्यता क्रियते, तथा प्रकृतीनां दर्शपूर्णमासादीनां स्वप्रकरणस्थांगैर्निवृत्तोपकाराकांक्षाणामनारभ्याधीताङ्गैर्विकृतीनां चातिदिष्टाङ्गैः परिपूर्णानां शरमयादिभिः सहोत्थिताकांक्षाविरहेऽप्युत्थापिताकांक्षयान्वय इत्येवं विषयेऽस्य प्रचारः ॥ ५०१ ॥

## लूतातन्तुन्यायः ॥ ५०२ ॥

लूता कीटविशेषः। स यथा स्वदेहात्तन्तून्निर्म्मांति संहरति च स्वदेहे, तथा च तस्याः स्वतस्तन्तुनिर्म्माणे स्वतो निमित्तकारणत्वरूपकर्तृत्वं, स्वदेहापेक्षयोपादानकारणत्वं च, एवं ब्रह्मणो जगतां स्वतः कर्तृत्वम्, स्वशक्तिमायाद्वारोपादानत्वं च। एवं च जगत् स्वशक्त्या निर्म्मांति, स्वशक्तौ संहरति चेत्येवं विवक्षायामस्य प्रवृत्तिरिति ॥ ५०२ ॥

## लोष्टलगुडन्यायः ॥ ५०३ ॥

यथा लोष्टस्योपमर्द्दको लगुडस्तथोपमर्द्योपमर्द्दकयोः सा-

चित्यविवक्षायामस्य प्रवृत्तिरीति। लोष्टो मृत्पिण्डः, लगुडो दण्डः ॥ ५०३ ॥

## विशेष्ये विशेषणं तत्रापि च विशेषणमिति न्यायः ॥ ५०४ ॥

यथा भूतलं जलवद्घटवदित्यादौ भूतले घटो विशेषणम्, स च भूतलांशे विशेषणमिति रीत्या यत्र भासते, तत्रास्य प्रवृत्तिरीति ॥ ५०४ ॥

## शङ्खवेलान्यायः ॥ ५०५ ॥

यथा वेलाविशेषे शंखध्वनिविशेषो यत्र नियमितस्तत्र शंखध्वनिना वेलाविशेषज्ञानं जायते, तथा यत्र विवक्षा तत्रास्य प्रवृत्तिः । यथा—चैत्रोत्तरं वैशाखः, वैशाखोत्तरं ज्येष्ठ इति क्रमविशेषज्ञानमिति ॥ ५०५ ॥

## श्यामरक्तन्यायः ॥ ५०६ ॥

यथा घटपटादौ श्यामगुणनाशे रक्तगुणोत्पत्तिरेवं यत्र पूर्वगुणनाशेऽपरगुणसमावेशस्तत्रास्य प्रवृत्तिरीति ॥ ५०६ ॥

## सन्दंशपतितन्यायः ॥ ५०७ ॥

सन्दंशः 'सनासी' इति यस्य प्रसिद्धिः । सावयवयोः मध्यपातिनः पदार्थस्य यथा ग्रहणमेवं पूर्वोत्तरयोर्ग्रहणेन तन्मध्यस्थपदार्थस्य ग्रहणं यत्र विवक्ष्यते, तत्रास्य प्रवृत्तिरीति ॥ ५०७ ॥

## अथ सन्निहितादपि व्यवहितं साकांक्षं बलीय इति न्यायः ॥ ५०८ ॥

शाब्दबोधयोग्यतया साकाङ्क्षस्य स्वार्थान्वयबोधप्रयोजकतेति नियमेन तस्य चासत्तिक्रममनादृत्यान्वययोग्यपदार्थवाचकशब्दस्य व्यवहितत्वेऽप्यासक्तिं प्रकल्प्य यथा का मादावन्वयः, एवं यत्र साकांक्षत्वं तत्रैव तस्यान्वय इति यत्र विवक्षा तत्रास्य प्रवृत्तिरिति ॥ ५०८ ॥

## सन्निहिते बुद्धिरन्तरंगमिति न्यायः ॥ ५०९ ॥

सान्निकृष्टविप्रकृष्टयोरुभयोर्यत्रान्वयसम्भावना तत्र सन्निहितस्यैवासत्तिबलादन्वयो न विप्रकृष्टस्येत्येवं विवक्षायामस्य प्रवृत्तिरिति ॥ ५०९ ॥

## समूहालम्बनन्यायः ॥ ५१० ॥

यत्रोपस्थितपदार्थानां विशेषणविशेष्यभावेनान्वयासम्भवस्तत्रोपस्थितपदार्थानां समूहमालम्ब्यैव बोधः । यथा—घटः पटश्चेत्यादौ घटपटयोरुभयोरेव विशेष्यता, समूहालम्बनबोधे च विशेष्यताद्वयम्, संशये त्वेका विशेष्यतेति भेदः ॥ ५१० ॥

## सर्वापेक्षन्यायः ॥ ५११ ॥

यथा बहुषु निमंत्रितेषु एकस्मिन्नागतेपि तस्मै भोजनं न दीयते अपेक्ष्यन्ते च सर्वे, एवं यत्र सर्वापेक्षा तत्रास्य प्रवृत्तिरिति ॥ ५११ ॥

## स्थविरलगुडन्यायः ॥ ५१२ ॥

वृद्धहस्तपातितलगुडस्य यथा यथास्थानं न पतनमेवं लक्ष्यस्थानेऽपतनं यत्र तत्रास्य प्रवृत्तिरिति ॥ ५१२ ॥

## अधिकन्तु प्रविष्टे न तद्धानिरिति न्यायः ॥ ५१३ ॥

यत्राधिकप्रवेशेपि प्रकृतस्य न हानिस्तत्रायं प्रवर्त्तत इति ॥ ५१३ ॥

## गोशृंगग्राहिकान्यायः ॥ ५१४ ॥

यथा केनचिदस्माकं गौः केति पृष्टःकश्चित्तस्या गोः शृङ्गमादाय हस्तेनेयं गौर्भवतामिति गां दर्शयति, तथा आत्मा क इति शिष्यपृष्टो गुरुः"सत्यं ज्ञानमनन्तं ब्रह्म" इति,"यतो वा इमानि भूतानि जायन्ते" इति च स्वरूपतटस्थलक्षणाभ्यां ब्रह्मोपदिशतीति भावः ॥ ५१४ ॥

## पिपीलिकागतिन्यायः ॥ ५१५ ॥

यथा पिपीलिका वृक्षशिरःस्थितमधुरफलरसास्वादने झटित्यशक्ता सत्यपि वहायासेन गच्छन्ती कालान्तरे तद्रसमवश्यमास्वादते, तथैवाज्ञानी पुरुषः श्रुतिस्मृतिपुराणविहितकर्मोपासनादिमार्गसञ्जातशुद्धान्तःकरणतया जन्मान्तरेषु कदाचित्प्राप्तपूर्णज्ञानोवश्यं ब्रह्मानन्दमनुभवतीति ॥५१५॥

## प्लवङ्गमगतिन्यायः ॥ ५१६ ॥

यथा पिपीलिकापेक्षया प्लवंगमः शाखातः शाखान्तरे उत्प्लवमानो द्वित्रिचतु (तै) रुत्प्लवैरुच्चतरमपि तारवफलं

स्वल्पायासेन लभते, तथैव मध्यमाधिकारी आज्ञान्यपेक्षया जन्मान्तरीयशुद्धसंस्कारतया शुद्धमनस्कः सद्गुरुसकाशाल्लब्धाध्यात्मविद्यश्चिद्घनानन्दीयरसं झटित्यास्वादत इति ५१६

## विहङ्गमन्यायः ॥ ५१७ ॥

यथा पिपीलिकाप्लुवङ्गमापेक्षया विहंगमोऽनायासेनोच्चतममपि मधुरं फलरसमास्वादते, तथैवोत्तमाधिकारी ज्ञानी मध्यमाधिकार्य्यपेक्षयाऽनायासेन जन्मान्तरीयसंस्कारैः शुद्धान्तःकरणतया लब्धपूर्णज्ञानोऽचिरादेव चिदानन्दरूपतां प्राप्नोतीति ॥ ५१७ ॥

## शूकरवाटिकान्यायः ॥ ५१८ ॥

यथा शूकरः पुष्पितां पुष्पवाटिकां प्रविश्य तत्रत्यविचित्राणि सुरभीणि तरुफलपुष्पाणि परित्यज्य विष्ठामेव चिनुते, तथैव खलः सतां गुणसमुदायमुपेक्ष्य केवलच्छिद्रमन्वेषयतीति संक्षेपः ॥ ५१८ ॥

## सर्वं पदं हस्तिपदे निमग्नमिति न्यायः॥५१९॥

यत्र महति लघ्वारोपस्तत्रायं प्रवर्तत इति ॥ ५१९ ॥

## अश्रेष्ठः श्रेष्ठानुसारीति न्यायः ॥ ५२० ॥

यथा चोक्तं गीतायां भगवता श्रीकृष्णेन—“यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः । स यत्प्रमाणं कुरुते लोकस्तदनुवर्त्तते ॥” इति अ० ३, श्लो० २१ । “यदि ह्यहं न वर्तेयं जातु कर्म्मण्यतन्द्रितः । मम वर्त्मानुवर्त्तन्ते मनुष्याः पार्थ सर्वशः ॥” इति च अ० ३, श्लो० २३ इति ॥ ५२० ॥

## न द्वेष्ट्यकुशलं कर्म्म कुशले नानुषज्जत इति न्यायः ॥ ५२१ ॥

ज्ञानी हि अकुशलं कर्म्म न द्वेष्टि, कुशले कर्म्मणि त्व-नुसक्तो न भवति, समबुद्धित्वादिति भावः ॥ ५२१ ॥

## अकामस्य क्रिया काचिद्दृश्यते नेह कर्हिचित् । यद्यद्धि कुरुते जन्तुस्तत्तत्कामस्य चेष्टितम् ॥ इति न्यायः ॥ ५२२ ॥

अनेन पुंसः सकलकर्म्माचरणकारणं सर्वानर्थबीजं काम एवेति बोधितमिति । योग्यत्वाऽयोग्यत्वविचारमंतरेण वस्तु दृष्टं श्रुतं च । कामयति पुमांसमिति कामः, वैषयिकी प्रबलेच्छाऽत्र कामशब्देनोच्यते । अत एवोक्तं भगवता- "काम एष क्रोध एष रजोगुणसमुद्भवः । महाशनो महापाप्मा विद्ध्येनमिह वैरिणम् ॥" इति ॥ ५२२ ॥

## गृहस्थः स्त्रियमुद्वहेदिति न्यायः ॥ ५२३ ॥

यथात्र 'गृहिणी गृहमुच्यते' इत्युक्ते गृहे गृहिण्यां तिष्ठतीति गृहस्थस्सन् स्त्रियमुद्वहेदिति वाक्ये भाविष्याद्विवाहित्वमादाय गृहस्थत्वव्यपदेशः, तथा प्रकृतेपीति बोध्यम् ॥ ५२३ ।

## सर्वे वेदा यत्पदमामनन्तीति न्यायः ॥ ५२४ ॥

यथा-सर्वस्यापि शास्त्रस्य महत्तात्पर्य्यं निर्विशेष ए ब्रह्मणीति पर्य्यवसितमिति ॥ ५२४ ॥

## वायुर्न्नावमिवाम्भसीति न्यायः ॥ ५२५ ॥

यथा नद्याः परं पारं गच्छन्तीं नौकां प्रतिकूलो वायुर्गृहीत्वा महावर्त्ते पातयति, जलेनापूर्य्य वा मज्जयति, महापाषाणेनाभिहत्य भञ्जयति, पुनरपारं विषमस्थानं वा गमयति, सर्वथाऽनर्थवतीमेव करोति, तथा विदुषोऽपि प्रज्ञां विवेकबुद्धिमनाद्यविद्यावासनाभिरुच्चावचाभिराकृष्टं मनो विषये वा कर्म्मणि वा योगे वाप्युपास्तौ वा व्यवहारे वान्यत्र वा पातयित्वा वायुर्न्नावमिव विध्वंसयतीत्यर्थः ॥ ५२५ ॥

## समुद्रमापः प्रविशन्ति यद्वदिति न्यायः ॥५२६॥

यथा समुद्रमापः गङ्गानर्म्मदागोदावरीकृष्णाकावेरीसिन्ध्वादिमहानदीनदानां नानामुखेभ्यस्समागता नानाविधवर्णरसगंधगुणफलवत्यः स्वकीयशुक्लनीलारुणपीतादिगुणविशेषं, मधुराऽम्लतिक्तकषायादिरसविशेषं, परिमलपूत्यादिगन्धविशेषं, लघुत्वगुरुत्वादिगुणविशेषमेकद्वित्रिचतुःपञ्चषट्सप्ताष्टनवदशशतकृच्छ्रसमानपुण्यविशेषं, तत्तन्नामविशेषञ्च परित्यज्य समुद्रभावमेव गच्छन्ति, समुद्रं प्राप्य तत्सम्बन्धिमहिम्ना नामरूपगुणविशेषैः समुद्रान्न भिद्यन्त इत्यर्थः, तथा प्रकृतेपि ॥ ५२६ ॥

## ऋतुमतीकन्यकान्यायः ॥ ५२७ ॥

यथा कन्यका स्वयमृतुमती भूत्वा जननीं जनकं भ्रातरञ्च सर्वं स्वजनं त्यक्त्वा भर्तारमेवैकमाश्रित्य तदेकालम्बना भूत्वा तत्रैव रमते, तेनैव तृप्यति, हृष्यति, आनन्दति,

नाऽन्यं श्रृणोति, पश्यति, स्मरति, स्पृशति, स्वयं पतिव्रता भूत्वा तत्रैव तिष्ठति, तथैव ब्रह्मविदो यतेः प्रज्ञा समाधिना प्रौढीभय देहं प्राणमिन्द्रियजातञ्च सर्वं दूरतः परित्यज्य सच्चिदानन्दैकरसं परब्रह्मैकमेवाश्रित्य तदेकालम्बना भूत्वा तत्रैव रममाणा नन्दन्ती, तुष्यन्ती, हृष्यन्ती सती पतिव्रतावन्नान्यच्छृणोति,पश्यति, मनुते, विजानाति, स्वयं सदा तदात्मना तिष्ठतीति ॥ ५२७ ॥

## योग्यप्रयुक्तं साधनं कार्य्यसाधकमिति न्यायः ॥ ५२८ ॥

यथा–नाहं कर्म्म करोमीत्यभिमानवन्मूढतमकृतत्वात्संन्यासस्य तदपेक्षया परमेश्वरमाराध्याहं तरिष्यामीतीश्वरार्प्पणबुद्ध्या निरभिमानिना मुमुक्षुणा क्रियमाणत्वात्कर्म्म ज्याय इति भावः । अत एवोक्तं भगवता–"नियतं कुरु कर्म्म त्वं कर्म्म ज्यायो ह्यकर्म्मणः" इति ॥ ५२८ ॥

## एका क्रिया द्व्यर्थकरी बभूवेति न्यायः॥५२९॥

यथा–मुमुक्षुणा श्रोत्रियेण क्रियमाणं कर्म्म सत्त्वशुद्धिद्वारा स्वस्य मोक्षहेतु भवति, वृष्ट्यादिद्वारा जगत्स्थितिहेत च भवत्यत उभयथापि कर्म्म कर्तव्यमेवेति ॥५२९॥

## निमित्ताभावे नैमित्तिकस्याप्यभाव इति न्यायः ॥ ५३० ॥

यथा–"चिद्धीदं सर्वं, सद्धीदं सर्वं, सर्व्वं खल्विदं ब्रह्म, ब्रह्मैवेदं सर्वम्" इत्यादिश्रुतिभिः "हरिरेव जगज्जगदेव हरि-

हरितोपि जगन्नहि भिन्नतनुः" इत्याद्याप्तोक्तिभिश्चेदं सर्वं ब्रह्मैव ब्रह्मकार्यत्वात्। मृत्कार्य्यभूतो घटो मृद्यथा। इदं सर्वं ब्रह्मैव ब्रह्मण्यारोपितत्वात्, शुक्तिरजतवदित्यादियुक्तिभिर्मृदादिदृष्टान्तैश्च सम्यग्विचार्य्यमाणे सर्वं ब्रह्मैवास्तीत्येवं श्रुतिस्मृतियुक्तिदृष्टान्तानुभावैर्जगतो ब्रह्ममात्रत्वे सिद्धे जगतः कार्यत्वं निवृत्तम्। तन्निवृत्त्या ब्रह्मणोऽपि निमित्तापायेति न्यायेन कारणत्वं निवृत्तमेव भवतीति कश्चिद्वादी ॥ ५३० ॥

## बहुभ्यः श्रोतव्य बहुधेति न्यायः ॥ ५३१ ॥

अयं न्यायः सत्सु बहुषु गुरुष्वत्र कश्चिदेको ब्रह्मवित्तमो लभ्यते, ततः संसारभ्रमापनोदकं सम्यग्ज्ञानं सलक्षणं सिध्यतीत्यभिप्रायकोस्ति। न तु बहुभ्यो ज्ञानं सम्पादनीयमिति, "श्रोत्रियं ब्रह्मनिष्ठम्" इत्येकवचनश्रवणात्, "उपासीदेकमेव सद्गुरुं ब्रह्मवित्तमम्" इत्येकवचनाच्चेति ॥५३१॥

## देशकालवयोवस्थाबुद्धिशक्त्यनुरूपतः।
## धर्मोपदेशो भैषज्य वक्तव्यं धर्मपारगैः॥
## इति न्यायः ॥ ५३२ ॥

स्पष्टः ॥ ५३२ ॥

## न हि स्वस्कन्धं स्वयमारोढुं शक्नोतीति न्यायः ॥ ५३३ ॥

यत्र त्वेकस्यैव कर्तृकर्म्मभावो लोकशास्त्रविरुद्धः प्रतीयते, तत्रायं प्रवर्तत इति ॥ ५३३ ॥

## श्रेयांसि बहुविघ्नानि भवन्ति महतामपीति न्यायः ॥ ५३४ ॥

यत्र शुभे कर्म्मणि विघ्नबाहुल्यं भवेत्तत्रायमवतरतीति भावः ॥ ५३४ ॥

## जन्मान्तरसहस्रेषु बुद्धिर्या भाविता पुरा। तामेव भजते जन्तुरुपदेशो ह्यनर्थकः ॥ इति न्यायः ॥ ५३५ ॥

यत्र तु नानाविधश्रुतिस्मृतिप्रभृत्युपदेशसत्त्वेपि तमनादृत्य स्वाभीष्टमते प्रवृतिर्भवेत्तत्रायमवतरतीति ॥ ५३५ ॥

## कपिञ्जलाधिकरणन्यायः ॥ ५३६ ॥

कपिञ्जलस्तित्तिराख्यपक्षिविशेषः "कपिञ्जल इति प्राज्ञैः कथितो गौरतित्तिरः" इत्युक्तेः। अधिकरणं नाम वेदविचारग्रंथात्मिका मीमांसेत्यर्थः। यथाहुः—"विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरः। निर्णयश्चेति पञ्चाङ्गं शास्त्रेधिकरणं स्मृतम्॥" इति। एवं क्रमेण विवेचनमत्राधिक्रियत इत्यधिकरणम् षष्ठीतत्पुरुषः। यत्र बहुवचनस्य त्रित्वे पर्य्यवसानं तत्रायं प्रवर्तते। यथा—"कपिञ्जलानालभेत" इति। आङ्पूर्वकात् 'डुलभष् प्राप्तौ' इति धातोर्हिंसार्थकत्वादालभेतेत्यस्य हिंस्यादित्यर्थः। अत्र कपिञ्जलानिति बहुवचनेन त्र्यादयः परार्द्धावधिकाः कपिञ्जलाः, त्रयो वा, चत्वारो वा, पञ्च वेत्यादि, कपिञ्जलत्वावच्छेदकावच्छिन्ना वेति संशये शिष्टकृतव्याख्यानात्त्रित्वे पर्य्य-

वसितमिति सिद्धान्तः । विस्तरस्तु पूर्वमीमांसादर्शने ज्ञेय इति ॥ ५३६ ॥

## प्रधाने गृहीतेऽप्रधानग्रहस्यान्याय्यत्वादिति न्यायः ॥ ५३७ ॥

यथायं समुद्र इत्यत्र तरङ्गफेनबुद्बुदादिप्रत्ययादर्शनमिति भावः ॥ ५३७ ॥

## इन्द्रियाभ्यामजय्याभ्यां द्वाभ्यामेव हतं जगत् । अहो उपस्थजिह्वाभ्यां ब्रह्मादिमशकावधि ॥ इति न्यायः ॥५३८॥

यथा—अनाद्यविद्यया विषयभोगलाम्पटयमेवानुगमितमिदं जगज्जङ्गमप्राणिजातं सर्वञ्चेति भावः ॥ ५३८ ॥

## क्रियाभेदात्फलभेद इति न्यायः ॥ ५३९ ॥

यथा—यथा यद्यत्करोति, तथा तत्तत्फलमाप्नोतीति ॥ ५३९ ॥

## कृतात्ययेऽनुशयवानिति न्यायः ॥ ५४० ॥

कृतस्य कर्म्मणोऽत्ययो नाशः कृतात्ययस्तस्मिन् अनुशयवान् भवति । "भवेदनुशयो द्वेषे पश्चात्तापानुबन्धयोः" इति मेदिनी । वेदविहितकर्म्मानुष्ठानञ्च, तद्वानित्यर्थः । कर्मफलसंक्षये शेषकर्म्मानुभूत्यै निवर्तत इति भावः ५४०॥

## अर्द्धलौकिकन्यायः ॥ ५४१ ॥

अयं न्यायः "स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा"

इति श्रीमद्भागवतप्रथम १ स्कन्धचतुर्थाऽ ४ ध्यायपञ्च-
विंश २५ पद्यविवरणे श्रीमद्वल्लभाचार्य्यैरुक्तः । तथाहि-
यद्यप्यलौकिकप्रकारेण वेदसाध्यं फलमप्यलौकिकमिति
नान्येन तत्सिद्धिः, अथाप्यर्द्धलौकिकन्यायेन भट्टेष्विव
पुराणेप्यर्द्धलौकिकन्यायेन वा भारतादिना कार्य्यं सेत्स्य-
तीति भावः ॥ ५४१ ॥

## यावत्सम्पातमुषित्वेति न्यायः ॥ ५४२ ॥

यावत्पुण्यफलानुभूतिनिर्णयस्तावत्पर्य्यन्तं स्वर्गभोगान-
नुभवन्ति सुकर्म्मिण इति ॥ ५४२ ॥

## कार्य्यं सर्वं कारणमात्रमिति न्यायः ॥५४३॥

यथा–कार्यं सर्व्वं घटादिरूपं मृन्मात्रमित्यर्थ इति॥५४३

## स्वयं तीर्णः पराँस्तारयतीति न्यायः ॥५४४॥

यथा जलतरणविद्याकुशलः स्वयं तीर्णः परानपि
तारयितुं शक्नोतीति, तथा सुगुरुः शिक्षानुशिष्टः स्वशिष्या-
ञ्छिक्षयतीति भावः ॥ ५४४ ॥

## श्रुतानुमितयोः श्रुतसम्बन्धो बलीयानिति न्यायः ॥ ५४५ ॥

श्रुतेनैव सम्बन्धो नानुमितेन प्रकरणादिप्राप्तेनेत्यर्थः ।
प्रकरणादितः श्रुतेर्बलवत्त्वादिति भावः । श्रुतत्वं साक्षादु-
च्चारितत्वम् । यथा प्रत्यक्षस्य सामग्रीसत्त्वेऽनुमितेश्च
सामग्रीसत्त्वे समाने विषय आदौ प्रत्यक्षमेवोत्पद्यते, ततो-
नुमितिसामग्रीसत्त्वे सा भवति, एतादृशानुभवसिद्धत्वेन

प्रत्यक्षसामग्र्याः प्रथमोत्पन्नप्रमितिजनकत्वात्तादृशसामग्री-जन्यप्रमितिकरणं प्रत्यक्षप्रमाणं दुर्बलसामग्रीजन्यानुमिति-करणानुमानापेक्षया प्रबलमिति व्यवहारः । तथा साक्षाच्छुतस्थले शाब्दसामग्रीसम्भवात्तत्राप्यनुमानापेक्षया शाब्दप्रमितिकरणस्य प्राबल्यमित्यन्यत्र विस्तरः ॥ ५४५ ॥

## विशेषणाभावे विशिष्टाभाव इति न्यायः ॥५४६॥

इमं न्यायं नैयायिकाःपक्षतालक्षणे प्रकाशयन्ति।तद्यथा-'सिषाधयिषाविरहविशिष्टसिद्ध्यभावःपक्षता'इति लक्षणे सति प्रकृतन्यायेन सिद्धौ सत्यामपि सिषाधयिषासत्त्वेऽनुमितिर्भवत्येव। तत्र सिषाधयिषाविरहात्मकविशेषणाभावात्प्रतिबन्धकीभूतायाः विशेषायाः सिद्धेरप्यभावः, एवमन्यत्र ॥५४६॥

## विशेषाऽभावे विशिष्टाऽभाव इति न्यायः॥५४७॥

अयमपि न्यायः पक्षतालक्षणे संघटते । तद्यथा—यत्र सिद्धिर्नास्ति तत्र सिषाधयिषायां सत्यामसत्यामपि प्रकृतन्यायेन पक्षता भवति । तत्र विशेषीभूतायाः सिद्धेरभावाद्विशेषणस्याप्यभावः, एवमन्यत्र ॥ ५४७ ॥

## उभयाभावे विशिष्टाभाव इति न्यायः॥५४८॥

अस्य न्यायस्याप्युदाहरणं पक्षता सम्भवति। तद्यथा—यत्र सिद्धिरस्ति सिषाधयिषा च नास्ति तत्र प्रकृतन्यायेन पक्षता न भवति । पक्षताप्रतिबन्धकसिषाधयिषाविरह-विशिष्टायाः सिद्धेः सत्त्वात् । सिषाधयिषाविरहविशिष्टसि-

द्ध्यभावस्याऽसत्त्वादुभयाभावप्रयुक्तविशिष्टाभाव इत्यलमतिविस्तरेण ॥ ५४८ ॥

## आरोपगुणकथनं स्तुतिरिति न्यायः ॥५४९॥

स्तुतिरूपार्थवाद इत्यर्थः ॥ ५४९ ॥

## कीटोद्धारन्यायः ॥ ५५० ॥

यथा नदीप्रवाहपतिताः कीटा आवर्तादावर्तान्तरमाशु व्रजन्तो दुःखितास्सन्तस्सत्कर्म्मपरिपाकात् (पूर्वोपार्जितपुण्यकर्म्मपरिपाकात्) कृपालुना केनचित्पुरुषविशेषेणोद्धृता नदीप्रवाहाद्बहिर्न्निसारितास्सन्तस्तीरतरुच्छायां प्राप्य सुखं यथा भवति तथा विश्राम्यन्ति, तथैवमाशु स्वकृतकर्म्मजन्यफलभोगाय मनुष्यादियोनिषु जन्मनो जन्म व्रजन्तो जीवास्संसारानलदग्धा दुःखं लभमानाः पूर्वोपार्जितपुण्यकर्म्मपरिपाकादेव तत्त्वदर्शिनः प्रत्यगभिन्नब्रह्मसाक्षात्कारवदाचार्य्यात्सद्गुरोस्सकाशादुपदेशं तत्त्वमस्यादिमहावाक्यार्थजन्यज्ञानरूपमवाप्य मोक्षसुखं प्राप्नुवन्तीति । यद्यप्ययं विषयः निम्नगाप्रवाहन्याये १५१ ह्युक्तस्तथापि न्यायान्तररूपप्रदर्शनाय पुनरुक्तौ न दोष इति सुधीभिर्व्विभावनीयम् ॥ ५५० ॥

## यद्यथा वर्त्तते तस्य तथात्वं भाति मानत इति न्यायः ॥ ५५१ ॥

यच्छुक्त्यादि यथा येन शुक्तिकादिरूपेण वर्त्तते, तस्य तथात्वं शुक्त्यादिरूपत्वं प्रमाणतः स्फुरतीत्यर्थः । उक्तञ्च-

"यद्यथा वर्तते तस्य तथात्वं भाति मानतः । अन्यथात्वं भ्रमेणेति न्यायोयं सार्वलौकिकः ॥" इति ॥ ५५१ ॥

## वस्तुशक्तिन्यायः ॥ ५५२ ॥

यत्र पदार्थशक्तेः प्राबल्यं विवक्ष्यते, तत्रायं प्रवर्तते । तद्यथा—"जले तैलं खले गुह्यं पात्रे दानं मनागपि । प्राज्ञे शास्त्रं स्वयं याति विस्तारं वस्तुशक्तितः ॥" इति ॥ ५५२ ॥

## अनुवृत्तिन्यायः ॥ ५५३ ॥

अनुवृत्तिः सेवा, अभ्यास इति यावत् । यत्राऽभ्यासप्राबल्यविवक्षा तत्राऽयं प्रवर्वते । तद्यथा—"सिंहो बली द्विरदशूकरमांसभोक्ता संवत्सरेण कुरुते रतिमेकवारम् । पारावतः खरशिलाकणभोजनोपि कामीति नित्यमनुवृत्तिरिहापि हेतुः ॥" इति ॥ ५५३ ॥

## पनसोदुम्बरादिवदिति न्यायः ॥ ५५४ ॥

अयं कश्यपसंहितायामुदाहृतः । तथाहि—ननु क्वचिद्रजोदर्शनं विनापि गर्भसम्भवो दृश्यते, क्वचित्तु सत्यपि रजसि गर्भाऽनुपलम्भ इति । नैष दोषः—गर्भधारणं हि रजो विना न भवतीत्येषा व्याप्तिः । तत्र क्वचित्प्रकटं क्वचिदप्रकटमन्तरेऽवतिष्ठते । तत्राऽप्रकटेऽपि रजस्यन्तर्गतरजस्सत्त्वाद्गर्भधारणसम्भवोऽतः प्रागुक्तदोषाभावः । अत आह—"वर्षद्वादशकादूर्ध्वं यदि पुष्पं बहिर्नहि । अन्तः पुष्पं भवत्येव पनसोदुम्बरादिवत्॥" इति । 'पनसः कण्टाकिफले' इत्यमरः । 'कटफल, कटहर इति, 'फनस' इति, च

भाषा । "उदुम्बरो जन्तुफलो यज्ञाङ्गो हेमदुग्धकः ॥" इत्यमरः । 'गूलर' इति, 'डुमर' इति च भाषा ॥ ५५४ ॥

## नास्ति नष्टे विचार इति न्यायः ॥ ५५५ ॥

यत्र प्राक्तनदुष्कृतजन्यपरिपाकप्राप्ताऽनर्थपरम्परावशतः कुसङ्गनिलीनता प्रतीयते तत्रायमवतरतीति । तद्यथा—"भिक्षो कन्था श्लथा ते नहि शफरवधे जालमश्नासि मत्स्याँस्तेऽमी मद्योपदंशा मधु पिबसि समं वेश्यया यासि वेश्याम्। दत्त्वाङ्घ्रिं मूर्ध्न्यरीणां तव किमु रिपवो भित्तिभेत्ताऽस्मि येषां चौरोऽसि द्यूतहेतोस्त्वयि सकलमिदं नास्ति नष्टे विचारः ॥" इति ॥ ५५५ ॥

## चक्रवाकीचक्रवाकन्यायः ॥ ५५६ ॥

श्रूयते हीमौ जलचरपक्षिदम्पती दिने सम्पृक्तौ सन्तौ यथेच्छं नदीतीरे विहरतः, सूर्य्यास्तवेलायामन्यतर उड्डीय नद्याः परे पारे गत्वा शब्दायते, इहत्यस्तदनुकृत्योड्डीय परे पारे याति, परस्थ आवारतीर आयाति, पुनः पारस्थ आवारमारवास्थः पारं यात्यायाति चैवं रात्रिपर्य्यन्तं कुरुतः । दिने पुनर्मिलतो रात्रौ वियुञ्जात इत्येवं विषयविवक्षायामयमवतरतीति ॥ ५५६ ॥

## काकिणीन्यायः ॥ ५५७ ॥

'वराटकानां दशकद्वयं यत्सा काकिणी' इतिपद्येन विवृतोऽयम् । यथा—"भिद्यन्ते भ्रातरो दाराः पितरस्सुहृदस्तथा। एकाऽऽस्निग्धाः काकिणिना सद्यस्सर्व्वेऽरयः कृताः ।" इति।

अस्यार्थः-भिद्यन्ते स्नेहं त्यजन्ति। कथम्भूताः-एकास्निग्धाः एके एकप्राणास्ते च ते आस्निग्धा अतिप्रियाश्चेत्यर्थः।कुतः-काकिणिना, पुंस्त्वमार्षमिति श्रीभागवते एकादश११-स्कन्धे त्रयोविंशा २३ ध्याये ॥ ५५७ ॥

## कार्य्यात्कारणजन्मेति न्यायः ॥ ५५८ ॥

यत्र कार्य्यात्कारणोत्पत्तिर्विवक्ष्यते, तत्राऽयं प्रवर्त्तते। तद्यथा—"अम्बुजमम्बुनि जातं कुत्रापि न जातमम्बुजा-दम्बु। मुरभिदि तद्विपरीतं चरणसरोजान्महानदी जाता॥" ॥ १ ॥ इति। "जाता लता हि शैले जातु लतायां न जायते शैलः। सम्प्रति तद्विपरीतं कनकलतायां गिरिद्वयं जातम्॥" ॥२॥इति।"सरसि भवं सरोजं नास्ति सरोजाज्जनिस्सरस्याः क्व। नूत्नमिदं व्रजवनितानेत्रसरोजान्नदीशतं वहति॥" ॥३॥ इति।"पङ्कात्पङ्केरुहमिति धातुः सृष्टेति नियन्त्रिता नियतिः। मुखपङ्केरुहमध्याल्लोचनपङ्केरुहोद्भवश्चित्रम्॥" ॥ ४ ॥ इति। "पुष्पाणाम्प्रभवो वै विख्यातो वृक्षशाखायाः आकर्णिता न दृष्टा तव पदमूलात्सरोजजनिः॥" ॥५॥ इति च ॥५५८॥

## दृष्टे सम्भवत्यदृष्टकल्पना न न्याय्येति न्यायः ॥ ५५९ ॥

प्रत्यक्षप्रमाणसिद्धे कार्य्येऽप्रत्यक्षकल्पना न कार्य्या तस्या अयोग्यत्वादिति। महाभारतोद्योगपर्वैकोनषष्ट्यधिकशततमाऽध्याये १५९-"य आत्मनो दुश्चरितादशुभं प्राप्नुयान्नरः। न स कालं न वा देवानेनसा गन्तुमर्हति॥" इति नवम-

९ श्लोकटीकायाम्—एनसा दोषेण देवान् कालं वा गन्तुमुपालब्धुं नार्हति, दृष्टे सम्भवत्यदृष्टकल्पनाया अन्याय्यत्वाद्दृष्टाऽपराधे देवस्य कालस्य वोपालम्भः कर्त्तुमुचितो न तु तस्मिन्त्सतीत्यर्थ इत्युक्तमिति। अयं पीयूषधारायामप्याभिहितः। तथाहि-"ननु ज्योतिश्शास्त्राऽध्ययनं न्यायशास्त्रादिवत् किं वादमात्रफलम्, उत—चिकित्साशास्त्रवत्प्रत्यक्षदृश्यफलमिति। प्रोच्यते—दृष्टे सम्भवत्यदृष्टकल्पना न न्याय्येति न्यायेन दृष्टार्थताप्यस्य शास्त्रस्य,वादरूपन्तु फलं सर्व्वेष्वपि शास्त्रेषु तुल्यमिति। उक्तञ्च—" अन्यानि शास्त्राणि विनोदमात्रं न किञ्चिदेषान्तु विशिष्टमस्ति। चिकित्सितं ज्यौतिषमन्त्रवादाः पदेपदे प्रत्ययमावहन्ति॥" इति॥ ५५९॥

## स्थूलात्सूक्ष्मं ज्याय इति न्यायः॥ ५६०॥

अयमपि तेनैव विवृतस्तत्रैव-यदा तु महापातस्य स्थितिरूपसूक्ष्मकालज्ञानं स्यात्तदा स्थूलात्सूक्ष्मं ज्याय इति न्यायेन स एव पातमध्यकालो विवाहादिमंगलकृत्येषु त्याज्योऽन्यथा गणितग्रन्थेषु पातस्थितिकालानयनवैयर्थ्यप्रसङ्ग इति निष्कृष्टोऽर्थ इत्युक्तः॥ ५६०॥

## खपुष्पन्यायः॥ ५६१॥

अयमपि पक्षमध्ये तिथिद्वयवृद्धिस्तु खपुष्पन्यायतुल्यैवेत्युक्तस्तेनैवेति॥ ५६१॥

## महादोषत्यागोऽल्पदोषांगीकारो यथा लोकप्रसिद्धिरिति न्यायः॥ ५६२॥

स्पष्टोऽयमिति॥ ५६२॥

## ऊषरवापितबीजन्यायः ॥ ५६३ ॥

वैयर्थ्यबोधकोयम् । यत्र क्रिया निष्फला तत्रैवाऽवतरतीति स्पष्टार्थः ॥ ५६३ ॥

## प्रसक्तानुप्रसक्तन्यायः ॥ ५६४ ॥

अयमन्योद्देशेनाऽन्यदीयस्याऽपि सहानुष्ठाने—अन्योद्देशेन प्रवृत्तावन्यस्याऽपि सिद्धौ यावत्तत्र प्रवर्तते । यथा अलं प्रसक्ताऽनुप्रसक्तेनेत्युक्तिः प्रायो ग्रन्थेषु दृश्यते ॥ ५६४ ॥

## रथ्यादीपन्यायः ॥ ५६५ ॥

यथा—रथ्यायां प्राक् पश्चाच्च नीयमानस्य दीपस्याऽग्रे दीपप्रभा यस्मिन्प्रदेशे गच्छति तस्मिन्नेव प्रदेशे क्षणान्तरे दीपोऽपि गच्छत्येवंविधविवक्षा यत्र तत्रायं प्रवर्तते । 'रथ्या प्रतोली विशिखा' इत्यमरः । 'गली' इति भाषा ॥ ५६५ ॥

## दत्ततिलांजलिन्यायः ॥ ५६६ ॥

यत्र पुत्रादिदत्ततिलांजलिवद्वस्तूत्सृज्यते, तत्राऽस्याऽवतार इति संक्षेपः ॥ ५६६ ॥

## बहूनामनुरोधो न्याय्य इति न्यायः ॥५६७॥

स्पष्टः ॥ ५६७ ॥

## निमित्तान्तरमेवाऽनैमित्तिकमिति न्यायः ॥ ५६८ ॥

यथा—"षोडशर्तुनिशाः स्त्रीणां तासु युग्मासु संविशेत्" इति याज्ञवल्क्यर्षिवचसा षोडशादिनातिक्रमे ऋत्वन्तरम-

पेक्ष्य देशकालशुद्धिं विचार्य्य गर्भाधानं कार्य्यमेवेति संक्षेपः ॥ ५६८ ॥

## समीपलक्षकशब्दमङ्गीकृत्य तदर्थः क्रियत इति न्यायः ॥ ५६९ ॥

अयं ज्योतिश्शास्त्रे व्यवहृतः । तथाहि-"सर्वेषामेव वर्णानां सूतकं राहुदर्शने" इत्यादिबहुषु वाक्येषु राहुदर्शनपदमुक्तम्, नैतत्सहृदयहृदयङ्गमं प्रतिभाति । यतः-"अदृश्यरूपाः कालस्य मूर्त्तयो भगणाश्रिताः । शीघ्रमन्दोच्चपाताख्या ग्रहाणां गतिहेतवः ॥" इति सूर्य्यसिद्धान्ते चन्द्रादिग्रहपातानामदृश्यतोक्ता।पातो राहुश्च पर्य्यायः।उक्तञ्च तत्रैव-'दक्षिणोत्तरयोरेव पातो राहुश्च' इति । अतो राहोर्दर्शनमेव गगनकुसुमायमानम्। न च ग्रहणे सूर्य्यचन्द्रयोश्छादको राहुर्दृश्यत एवात एव 'राहुग्रस्ते निशाकरे' इत्यादिपुराणोक्तिः सङ्गच्छत इति वाच्यम्, 'छादको भास्करस्येन्दुर्भूछाया चन्द्रस्य च'इति सिद्धान्तात्।पुराणेन सह विरोधपरिहारस्तु-"राहुः कुभामण्डलगः शशांकं शशांकगश्छादयतीनविम्बम्।तमोमयो ब्रह्मवरप्रदानात्सर्वागमानामविरुद्धमेतत्" इति भास्कराचार्य्यैरेवोक्त इति। सर्वागमानामिति-"स्वर्भानुर्ह वा आसुरिः सूर्यं तमसा विव्याध"इति माध्यंदिनी श्रुतिः।"सर्वं गङ्गासमं तोयं सर्वे ब्रह्मसमा द्विजाः।सर्वं भूमिसमं दानं राहुग्रस्ते दिवाकरे ॥"इति पुराणवाक्यमतोऽविरुद्धमुच्यते। राहुर्नियतगतिस्तमोमयो ब्रह्मवरप्रदानाद्भूभाबिम्बं प्रविश्य चन्द्रं छादयति, चन्द्रं प्रविश्य रविं छादयतीति सर्वागमानामविरुद्धमिति ।

"तस्मिन्काले सान्निध्यमस्य तेनोपचर्यते राहुः" इति वराहोक्तेरिति । एवं सति राहोर्दर्शनं राहुदर्शनमिति तत्पुरुषोऽप्युपपन्न इत्यत आह—समीपलक्षकशब्दमंगीकृत्य तदर्थः क्रियत इति न्यायेन समाहितः । विस्तरस्तु पूर्वं ४६० न्याये प्रोक्त इति ॥ ५६९ ॥

## विशेषवाक्यादर्शने हि सामान्यवाक्यस्य नानाविधोऽर्थो व्याकर्त्तुं शक्यत इति न्यायः ॥ ५७० ॥

स्पष्ट इति ॥ ५७० ॥

## विशेषसन्निधाने ह्याम्नातं सामान्यं तद्व्यतिरिक्ते सामान्ये वर्त्तत इति न्यायः ॥५७१॥

ब्राह्मणा आयाता वशिष्ठोऽप्यागत इतिवत् । यथा— "चतुर्न्नाड्यस्त्वहल्यायां पाञ्चाले पञ्चनाडिकाः । त्रिनाड्यः सर्वदेशेषु वर्जनीयाः प्रयत्नतः ॥" इति जगन्मोहनधृतनारदवचने अहल्यापाञ्चालौ देशविशेषौ । सर्वदेशशब्दोऽहल्यापाञ्चालव्यतिरिक्तदेशेषु वर्त्तत इति ज्योतिश्चिन्तामणिः॥५७१॥

## दृष्टं किमपि लोकेऽस्मिन्न निर्दोषं न निर्गुणमिति न्यायः ॥ ५७२ ॥

अयं—सर्वत्र गुणदोषौ भवत इति विवक्षायां वर्त्तते । स्पष्टार्थ इति ॥ ५७२ ॥

## समं स्यादश्रुतत्वादिति न्यायः ॥ ५७३ ॥

अयं न्यायः पारस्करगृह्यपरिशिष्टकाण्डिकायां धृतः। तथा-हि-ततश्च समं स्यादश्रुतत्वादिति न्यायेनैकैकेन मन्त्रेणैकै-काहुतिरिति ॥ ५७३ ॥

## मुखमस्तीति वक्तव्यं दशहस्ता हरीत-कीति न्यायः ॥ ५७४ ॥

अयमसम्भववस्तुवक्तारि जन आक्षेपरूप इति । स्पष्टः ॥ ५७४ ॥

## सामान्यवाक्यस्य विशेषवाक्यानुरोधा-द्विशेषे पर्य्यवसानमिति न्यायः ॥ ५७५ ॥

यथा पुरोडाशं चतुर्धा करोति, आग्नेयं चतुर्धा करोती-तिवत्। तेन न वैश्वदेवाख्यपुरोडाशस्य चतुर्धा करणमिति। "पुरोडाशो हविर्भेदे चमस्यां पिष्टकस्य च। रसे सोमल-तायाश्च हुतशेषे च कीर्तितः ॥" इति विश्वः ॥ ५७५ ॥

## चण्डालधृतैकहस्तन्यायः ॥ ५७६ ॥

अयं श्लोकेन विवृतः । तथाहि-"यथाहि चण्डालधृ-तैकहस्तो मज्जन्नगाधेऽपि सरित्प्रवाहे। भवेन्न पूतः शशि-भोगतोऽपि तथा न शुध्येदुडु पापयुक्तम्॥" इति ज्योतिश्चि-न्तामणौ विस्तर इति ॥ ५७६ ॥

## यावद्वचनं वाचनिकमिति न्यायः ॥ ५७७ ॥

यथा-ग्रहणोत्पातभयोः षण्मासपर्य्यंतं निषेधस्ततोऽपि

यावद्द्रविणा भुक्त्वा न त्यक्तं तावत्त्यजेदित्युक्तं तत्रैवेति । अन्यत्रापि–यथा च धर्म्माऽधर्म्मयोर्मनुष्याधिकारत्वेन काशीखण्डे पिशाचमोचनाख्याने पिशाचस्यापि तत्स्नानात्पिशाचत्वनाशोक्तिर्निषादस्थपतीष्टिवत्प्रकृतन्यायेन तन्मात्रविषयतैवेति बोध्यमिति ॥ ५७७ ॥

## आदित्यगतिन्यायः ॥ ५७८ ॥

यथाऽऽदित्यगतिः सती प्रत्यक्षेण नोपलभ्यते देशान्तरप्राप्त्यानुमीयते, तथा खट्वावृक्षयोः सदपि लिङ्गं सूक्ष्मत्वात्प्रत्यक्षेणाऽशक्यं ग्रहीतुं तत्कृतकार्य्यदर्शनादनुमीयते, एवं प्रकृतेऽपीति "स्त्रियाः०" ४ । १ । ३ । सूत्रभाष्ये स्पष्टम् ॥ ५७८ ॥

## एकोपि हन्ति गुणलक्षमपीह दोषः कश्चित्परो यदि गुणोऽस्ति न तद्विरोधी । मद्यस्य बिन्दुरपि पावनपञ्चगव्यं सम्पूर्णमत्र कलशं मलिनीकरोति ॥ इति न्यायः ॥५७९॥

स्पष्टाऽभिप्रायकोयं न्यायो ज्योतिर्विदा श्रीपतिनाभिहितः ॥ ५७९ ॥

## एको हि दोषो गुणसन्निपाते निमज्जतीन्दोः किरणेष्विवाङ्क इति न्यायः ॥ ५८० ॥

अयं कुमारसम्भवे कालिदासोक्तिरूपः स्पष्टाऽभिप्रायकः ॥ ५८० ॥

## द्विर्बद्धं सुबद्धम्भवतीति न्यायः ॥ ५८१ ॥

स्पष्टोऽभिप्रायकोऽयम् । किञ्च-शब्देन्दुशेखरे स्त्रीप्रत्ययप्रकरणे-द्योत्यविषये हि उक्तार्थानामप्रयोग इति पूर्वोक्तन्यायो न सञ्चरतीत्याभिप्रेत्य हृदि व्यतिलुनीते इत्यादौ द्विर्बद्धं सुबद्धं भवतीति न्यायेन समुच्चयस्य दृष्टत्वादित्युक्तमिति । अत्रायमभिप्रायः-" कर्त्तरि कर्म्मव्यतिहारे " १ । ३।१४ क्रियाविनिमये द्योत्ये कर्तर्य्यात्मनेपदं स्यादित्यर्थः । व्यतिलुनीते अन्यस्य योग्यं लवनं करोतीत्यर्थः । अयं भावः-यद्यस्य न योग्यं तस्य तत्करणं कर्म्मव्यतिहारः । यथा-शूद्रस्य योग्यं शस्यादिलवनं ब्राह्मणः करोतीत्यर्थः । परस्परकरणमपि व्यतिहारः, सम्प्रहरन्ते राजान इत्याद्यन्यत्र प्रयोगात् । प्रकृते तु व्यत्युपसर्गाभ्यामात्मनेपदेन चैकं कर्म्मव्यतिहारत्वं द्योत्यत इति । उक्तार्थेति न्यायस्य द्विर्बद्धेति न्यायस्य च विषयव्यवस्था लक्ष्यानुरोधाच्छिष्टव्याख्यानाच्च बोध्येत्यलं पल्लवितेनेति ॥ ५८१ ॥

## अजागलस्तनन्यायः ॥ ५८२ ॥

यथा अजायाश्छाग्या गले कण्ठे स्तनौ स्तनाकारौ मांसविकारौ निष्प्रयोजनौ स्तः, तथा प्रकृतेऽपि । उक्तञ्च वसिष्ठसिद्धान्ते-"चलसंस्कृततिग्मांशोः संक्रमो यः सुसंक्रमः । अजागलस्तन इव राशिसंक्रान्तिरुच्यते ॥" इति ॥ ५८२ ॥

## व्याख्यानतो विशेषप्रतिपत्तिर्न हि संदेहादलक्षणमिति न्यायः ॥ ५८३ ॥

अस्यार्थः–विशेषस्याऽन्यतराद्यर्थरूपस्य व्याख्यानाच्छिष्टकृतात्–। शिष्टलक्षणन्तु–"न पाणिपादचपलो न नेत्रचपलो यतिः। न वाचा चपलश्चैवमिति शिष्टस्य लक्षणम्॥" इति। किञ्च–"धर्म्मेणाधिकृतो यैस्तु वेदः सपरिबृंहणः। ते शिष्टा ब्राह्मणा ज्ञेयाः श्रुतिप्रत्यक्षहेतवः॥" इति। व्याख्यानञ्च–"पदच्छेदः पदार्थोक्तिर्विग्रहो वाक्ययोजना। आक्षेपोऽथ समाधानं व्याख्यानं षड्विधं मतम्॥" इत्युक्तलक्षणं ज्ञेयम्।–प्रतिपत्तिर्निश्चयः हि यतः संदेहाच्छास्त्रमलक्षणमननुष्ठापकं लक्षणमलक्षणं तथा न, शास्त्रस्य निर्णयजनकत्वौचित्यादित्यर्थः। असंदिग्धानुष्ठानसिद्ध्यर्थेऽत्र शास्त्रे संदिग्धोच्चारणरूपाचार्य्यव्यवहारेण सन्देहनिवृत्तेर्व्याख्यानातिरिक्तनिमित्तानपेक्षत्वं बोध्यत इति यावत्। अयं न्यायो महाभाष्ये प्राय उक्तः। परिभाषेन्दुशेखरे मुखबन्ध एव परिभाषारूपेणोक्तो नागेशैरित्यलमिति॥ ५८३॥

## अर्थस्योक्तत्वेन पुनःप्रयोगवैयर्थ्यादिति न्यायः॥ ५८४॥

अयम् 'उक्तार्थानाम्–४८३' इति न्यायस्य स्वरूपान्तरम्॥ ५८४॥

## बालिसुग्रीवन्यायः॥ ५८५॥

यथा बालिसुग्रीवयोर्युध्यमानयोर्भगवता श्रीरामचन्द्रेण बालिनि हते बालिनः सुग्रीवापेक्षया दौर्बल्यं मन्यन्ते शूराभिमानिन इत्येवं प्रकृतेऽप्यूह्यमिति॥ ५८५॥

## अबाधेनोपपत्तौ बाधो न न्याय्य इति न्यायः ॥ ५८६ ॥

अयं ज्योतिश्शास्त्रे व्यवहृतः। तत्र हि—ननु संस्कारप्रकरणगृहप्रवेशप्रकरणादीनां पार्थक्योपनिबन्धात्पञ्चांगदोषापवादकता कुतो नास्तीति चेदुच्यते—तत्र हि—'पञ्चांगसंशुद्धदिनादिके च' इति वसिष्ठादिभिः, 'पर्वाख्यरिक्तोनतिथौ शुभेह्नि' इति ग्रन्थकृताप्यतिदेशोपनिबन्धस्य कृतत्वात्। अतः सर्वापवादिकेत्ययुक्तः पक्षः,। तस्मादबाधेनोपपत्तौ बाधो न न्याय्य इति हेतोर्विषयस्य विवेक इत्येव युक्तः पक्ष इत्युक्तं ज्योतिर्विदा गोविन्दशर्म्मणा ॥ ५८६ ॥

## पृष्टाकोटिन्यायः ॥ ५८७ ॥

अयं न्यायो यत्र धर्म्मादिविषये यन्मात्रं पृच्छ्यते तन्मात्रं सर्वमेव वक्तुमसमर्थत्वेऽपि तत्र यत्किञ्चिदुपयोगि तत्कथ्यते, तद्विषये प्रवर्तते। उक्तञ्च धर्म्मनिबन्धे—' अथ सिद्धे दुरिते का तत्संख्येति प्रायश्चित्तकदंबाद्युक्तगणना लिख्यते। सा च पृष्टाकोटिन्यायेन वक्तुमशक्यापि स्थूलोपाधिविषयत्वेनोच्यते' इति ॥ ५८७ ॥

## सन्दिग्धेषु वाक्यशेषादिति न्यायः ॥ ५८८॥

अयं निर्णयसिन्धावनन्तचतुर्दशीप्रकरणेऽभिहितः। तथाहि—तत्त्वन्तु विध्यर्थवादयोर्भिन्नार्थत्वेप्येकवाक्यतायोगात्संदिग्धेषु वाक्यशेषादिति न्यायेन पूर्वा परा वा मध्याह्न-

व्यापिन्येव मुख्येत्युक्तम्। अन्यत्रापि विस्तरशः प्रोक्तोऽयं न्यायो विस्तरभिया नेह प्रपञ्च्यत इति ॥ ५८८ ॥

## तस्मिन्विदिते सर्वं विदितं भवतीति न्यायः ॥ ५८९ ॥

अयं श्रीमद्वल्लभाचार्यैः श्रीमद्भागवतस्य सुबोधिनीटीकायामुदाहृतः। तत्रेत्थम्—'अयमर्थः—विदुरो मैत्रेयसमीपे गत्वा स्वस्य सर्वज्ञतासिद्ध्यै बहु पृष्टवान्। तत्र—तस्मिन्विदिते सर्वं विदितं भवतीति न्यायेन भगवच्चारित्रे ज्ञाते सर्वं ज्ञातं भवति' इत्युक्तमिति ॥ ५८९ ॥

## विमुञ्चेन्मुच्यमानेष्विति न्यायः ॥ ५९० ॥

यथा कालग्रस्तस्वप्राणपितृभ्रातृसुतसुहृदादयोऽनित्यत्वान्नंक्ष्यन्त्येवमेव बुद्ध्वा बुधः पुरैव तेषां स्नेहादिकं मुञ्चेदिति विषयेऽयं न्यायोऽवतरतीति तत्रैव श्रीवल्लभाः ॥ ५९० ॥

## अदोषतैव सगुणो विगुण इति न्यायः॥५९१॥

अयमपि सुबोधिन्यां प्रथम १ स्कन्धत्रयोदशा १३ ध्याय सप्तविंशे २७ पद्ये द्रष्टव्य इति ॥ ५९१ ॥

## नासिप्रोतबलीवर्दन्यायः ॥ ५९२ ॥

यथा बलीवर्दा वृषभा नासि नासिकायाम् "पद्दन्नोमास्" ६। १। ६३ इति नासिकाया नसादेशः। त्रिवृत्कृततन्तुदामभिः प्रोताः स्यूता नासिकाछिद्रस्यूतह्रस्वदामभिराधारभूतायां दीर्घायां तन्त्यां बद्धा इति यावत्, स्वस्वामिनो व्रीह्यादिगोणीर्वहन्ति, तथा ब्राह्मणक्षत्रियवैश्यशूद्रब्रह्म-

चारिगृहस्थवानप्रस्थयतय इतिनामात्मकदामभिर्वाक्तन्त्या विधिनिषेधात्मकवेदलक्षणायां बद्धा वेदलक्षणा दीर्घरज्जुः ब्राह्मणक्षत्रियादिरूपो योनिसम्बन्धः, इन्द्रियाणि बलीवर्दाः, भगवदिच्छा स्तम्भः। एवं सति स्ववर्णाश्रमविहितकर्म्मभिरीश्वरस्य बलिं यज्ञादिलक्षणपूजां कुर्वन्तीति भावः। उक्तञ्च श्रीमद्भागवतप्रथम १ स्कन्धत्रयोदशा१३ ध्यायैकचत्वारिंश-४१ पद्ये-"यथा गावो नसि प्रोतास्तन्त्यां बद्धाश्च दामभिः। वाक्तन्त्यां नामभिर्बद्धा वहंति बलिमीशितुः॥" इति॥५९२॥

## दग्धपटन्यायः ॥ ५९३ ॥

अग्निना दग्धेपि पटे यथा चिह्नं दग्धं न भवति, एवं नष्टेपि सर्वपदार्थेऽभिमानं विद्यत एव, एवंविषयेऽयं प्रवर्तत इति सुबोधिनी ॥ ५९३ ॥

## प्रकृतिवद्विकृतिः कर्तव्येति न्यायः॥ ५९४ ॥

अयं महाभाष्यपस्पशायां कैयटेनोक्तः। तथाहि-"ऊहः खल्वपि" इति भाष्यप्रतीकमादाय-"इह यस्मिन्यागे इति कर्तव्यतोपदिष्टा यागान्तरेणोपजीव्यते सा प्रकृतिः, येनोपजीव्यते सा विकृतिः। प्रकृतिवद्विकृतिः कर्त्तव्येति मीमांसकैर्व्यवस्थापिते न्याये प्रकृतिप्रत्ययादीनामूहं वैयाकरणः सम्यग्विजानाति। तत्राग्नेर्मन्त्रोऽस्ति "अग्नये त्वा जुष्टं निर्वपामि" इति। तत्र "सौर्य्यं चरुं निर्वपेद्ब्रह्मवर्चसकामः" इति सौर्य्ये चरौ मन्त्र ऊह्यते-"सूर्य्याय त्वा जुष्टं निर्वपामि" इति ॥ ५९४ ॥

## भक्ष्यनियमेनाऽभक्ष्यप्रतिषेधो गम्यत इति न्यायः ॥ ५९५ ॥

यथा–"पञ्च पञ्चनखा भक्ष्या इत्युक्तेर्गम्यत एतदन्येऽभक्ष्याः" इति पस्पशायाम् ॥ ५९५ ॥

## प्रत्यवयवञ्च वाक्यपरिसमाप्तिरिति न्यायः ॥ ५९६ ॥

तद्यथा–देवदत्तयज्ञदत्तविष्णुमित्रा भोज्यन्तामिति, न चोच्यते प्रत्येकमिति,प्रत्येकं च भुजिः परिसमाप्यते॥५९६॥

## कुलालचक्रकीटन्यायः ॥ ५९७ ॥

यत्र शीघ्रगत्याऽऽधाराश्रयेणाऽऽधेयस्य प्रतीपगतिः प्रतीयते, तत्रायमवतरतीति । ज्योतिःसिद्धान्तेऽयं व्यवहृतः । तथाहि–"यान्तो भचक्रे लघुपूर्वगत्या खेटास्तु तस्यापरशीघ्रगत्या । कुलालचक्रे भ्रमिवामगत्या यान्तो न कीटा इव भान्ति यान्तः ॥" इति सिद्धान्तशिरोमणिगोलाध्याये भास्कराचार्य्येणोक्त इति । एवं हि श्रीमद्भागवते पञ्चमस्कन्धे द्वाविंशतितमऽध्यायेऽपि यथा कुलालचक्रेण भ्रमता सह भ्रमतां तदाश्रयाणां पिपीलिकादीनां गतिरन्यैव प्रदेशान्तरेष्वप्युपलभ्यमानत्वात्, एवं नक्षत्रराशिभिरुपलक्षितेन कालचक्रेण"इत्यादि ॥५९७॥

## तप्तभ्राष्टतिलन्यायः ॥५९८॥

तद्यथा–तप्ते भ्राष्ट्रे तिलाः प्रक्षिप्ता मुहूर्तमपि नावतिष्ठ-

न्ते, एवं प्रकृतान्तरेऽपि। अयं न्यायः "स्थानेऽन्तरतमः" १।।१।५०। इति सूत्रमहाभाष्ये स्पष्टः ॥ ५९८ ॥

## पाठक्रमादर्थक्रमो बलीयानितिन्यायः ॥५९९॥

यथा-"अनड्वाहमुदहारि या त्वं हरसि शिरसा कुम्भं भगिनि साचीनमभिधावन्तमद्राक्षीः" इति। तस्य यथेष्टमभिसम्बन्धो भवति-उदहारि भगिनि या त्वं कुम्भं हरसि शिरसानड्वाहं साचीनमभिधावन्तमद्राक्षीरिति। अत एवाऽऽनुपूर्व्येण सन्निविष्टानां यथेष्टमभिसम्बन्ध इति न्यायोप्यवतरतीति। "न पदान्त-" १।१।५८। इति सूत्रमहाभाष्यकैयटयोः स्पष्टः ॥५९९॥

## सम्बन्धिशब्दैर्वा तुल्यमेतदिति न्यायः ॥६००॥

तद्यथा-सम्बन्धिशब्दाः-मातरि वर्तितव्यं,पितरि वर्तितव्यं, शुश्रूषितव्यमिति। न चोच्यते स्वस्यां मातरि स्वस्मिन्पितरीति। सम्बन्धाद्गम्यते-या यस्य माता, यो यस्य पितेति "आदिरन्त्येन सहेता" १।१।७१। इति सूत्रमहाभाष्ये स्पष्टम् ॥ ६०० ॥

## नामैकदेशे नामग्रहणमिति न्यायः ॥ ६०१ ॥

यथा-दत्तः-देवदत्तः, भामा-सत्यभामा, भीमः-भीमसेन इत्यादि ज्ञेयम् ॥ ६०१ ॥

## रूपसामान्यन्यायः ॥ ६०२ ॥

तद्यथा-तानेव शाटकानाच्छादयामो ये मथुरायाम्, तानेव शालीन्भुञ्ज्महे ये मगधेषु, तदेवेदं भवतः कार्षापणं

यन्मथुरायां गृहीतमित्यादि। अन्यस्मिँश्चान्यस्मिँश्च रूपसामान्यात्तदेवेदमिति भवतीति "अइउण्" इति सूत्रमहाभाष्य उक्तः॥ ६०२॥

## येषां संघाता अर्थवन्तोऽवयवा अपि तेषामर्थवन्त इति न्यायः॥ ६०३॥

तद्यथा—"एकश्चक्षुष्मान्दर्शने समर्थस्तत्समुदायश्च शतमपि समर्थम्, एकश्च तिलस्तैलदाने समर्थस्तत्समुदायश्च खारीशतमपि समर्थम्" इत्ययं "हयवरट्" सूत्रमहाभाष्ये स्पष्टः॥ ६०३॥

## येषां पुनरवयवा अनर्थकास्समुदाया अपि तेषामनर्थका इति न्यायः॥ ६०४॥

तद्यथा—"एकोन्धो दर्शनेऽसमर्थस्तत्समुदायश्च शतमपि दर्शनेऽसमर्थम्, एका सिकता तैलदानेऽसमर्था तत्समुदायश्च खारीशतमप्यसमर्थम्" इत्यपि "हयवरट्" सूत्रभाष्ये॥ ६०४॥

## अन्येन चाऽन्यस्य विधिर्भवतीति न्यायः॥ ६०५॥

तद्यथा "देवदत्तसमाशं शरावैरोदनेन च यज्ञदत्तः प्रतिविधत्ते, तथा संग्रामं हस्त्यश्वरथपदातिभिः" इति "येन विधिस्तदन्तस्य" १।१।७२। इति सूत्रभाष्य उक्तः॥ ६०५॥

## कार्य्यंविपरिणामात्सिद्धमिति न्यायः॥ ६०६॥

अत्राऽन्यस्य विपरिणामाऽसम्भवात्सामर्थ्यात्कार्य्यत्वेन

बुद्धिर्गृह्यते, तेन तु कार्य्यशब्दो बुद्धिपर्य्याय इति कैयटः। अत एव भाष्ये कार्य्या बुद्धिः, सा विपरिणम्यत इत्युक्तम्। तद्यथा-कश्चित्कश्चिदुपदिशति-प्राचीनं ग्रामादाम्रा इति, तस्य सर्वत्राम्रबुद्धिः प्रसक्ता। ततः पश्चादाह-ये क्षीरिणोऽवरोहवन्तः पृथुपर्णास्ते न्यग्रोधा इति, स तत्राम्रबुद्ध्या न्यग्रोधबुद्धिं प्रतिपद्यते। स ततः पश्यति बुद्ध्या, आम्राँश्चापकृष्यमाणान्न्यग्रोधाँश्चाऽधीयमानान्। नित्या एव च ह्यस्मिन्विषये आम्रा नित्याश्च न्यग्रोधाः, बुद्धिस्तस्य विपरिणम्यत इत्येवं प्रकृतेऽप्यूहनीयम्। प्राचीनमिति-प्राचि देशे प्राक् लुंप्तास्तात्यन्तम्[1]। ततः "विभाषाञ्चेरदिक्स्त्रियाम्" ५। ४। ८। इति स्वार्थे खः। तत्र सप्तम्यर्थस्याभिहितत्वादन्तर्भूतत्वाच्च प्रथमा विभक्तिः कृतेति "स्थानिवदादेशोऽनल्विधौ" १। १। ५६। इति भाष्यकैयटयोः स्पष्टम् ॥ ६०६ ॥

## पितापुत्रन्यायः ॥ ६०७ ॥

तद्यथा स एव कश्चित्प्रति पिता भवति, कश्चित्प्रति पुत्रो भवत्येवं प्रकृतेऽपि बोध्यमिति "तस्मिन्निति निर्दिष्टे पूर्व्वस्य" १। १। ६६ इति सूत्रभाष्ये स्पष्टम् ॥ ६०७ ॥

## भेर्य्याघातन्यायः ॥ ६०८ ॥

तद्यथा भेर्य्याघातो भेरीमाहत्य कश्चिद्विंशतिपदानि गच्छति, कश्चित्त्रिंशत्, कश्चिच्चत्वारिंशदेवं प्रकृतेऽपि॥६०८॥

---

१ "अञ्चेर्लुक्" इति सूत्रात्।

## आत्माश्रयन्यायः ॥ ६०९ ॥

स्वापेक्षत्वमात्माश्रयः । स चोत्पत्तिस्थितिज्ञप्तिद्वारा त्रेधेत्यत्र संक्षेपोऽन्यत्र विस्तरः ॥ ६०९ ॥

## अन्योन्याश्रयन्यायः ॥ ६१० ॥

स्वग्रहसापेक्षग्रहसापेक्षग्राहकरूप इति तार्किकाः । परस्परज्ञानसापेक्षज्ञानाश्रयरूप इति स्मार्त्ताः।यथाऽन्योन्याश्रयाणि कार्याणि शास्त्रे न प्रथन्ते, यथा नौर्नावि बद्धा नेतरत्राणाय भवतीति महाभाष्ये वृद्धिरादैजादिबहुसूत्रव्याख्यानावसरेऽभिहितम् । तथा चाऽन्यत्रोक्तम्–"हलन्त्यम्""आदिरन्त्येन सहेता" इत्येतयोर्मिथो हलिच्छब्दावबोधाय ह्यन्योन्याश्रय आगत इति संक्षेपः । अयमपि चात्माश्रयवत्त्रेधा ॥ ६१० ॥

## चक्रकन्यायः ॥ ६११॥

अन्योन्याश्रय एवाऽऽवर्त्तितः चक्रकं भवति । तच्च स्वापेक्षापेक्ष्यपेक्षित्वरूपमिति । अस्यापि ह्यात्माश्रयवत्त्रैविध्यमिति ॥ ६११ ॥

## अनवस्थान्यायः ॥ ६१२ ॥

उपपाद्योपपादकयोरविश्रान्तिरिति मीमांसकाः । अव्यवस्थितपरंपरोपाधिनाऽनिष्टप्रसङ्गरूप इत्यन्ये । "धातोः"३ । १।९१। इति सूत्रमहाभाष्ये तु–"आ कुतोऽयं धात्वधिकारः । किं प्राग् लादेशादाहो स्विदातृतीयाध्यायपरिसमाप्तेः" इति बहुधा संमीमांस्य"ननु चोक्तमलुनन्नपुनन्नित्यत्रापि प्राप्नोति।

नैष दोषः। लोपे कृते न भविष्यति। नाऽत्र लोपः प्राप्नोति। किं कारणम्। ईत्वेन बाध्यते। नाऽत्रेत्वं प्राप्नोति। किं कारणम्। अन्तिभावेन बाध्यते। नाऽत्रान्तिभावः प्राप्नोति। किं कारणम्। जुस्भावेन बाध्यते। नाऽत्र जुस्भावः प्राप्नोति। किं कारणम्। लोपेन बाध्यते। लोप-ईत्वेन। ईत्वमन्तिभावेन। अन्तिभावो जुस्भावेन। जुस्भावो लोपेनेति चक्रकमनवस्था च प्रसज्येत" इत्याद्युक्तमित्यन्यत्र विस्तरः। किञ्च—पञ्चदशीग्रन्थस्य तत्त्वविवेकाख्यप्रथमविवेके—"विकल्पो निर्विकल्पस्य सविकल्पस्य वा भवेत्। आद्ये व्याहतिरन्यत्राऽनवस्थाऽऽत्माश्रयादयः॥" इत्यत्राऽऽत्माश्रयाऽन्योन्याश्रयचक्रकाऽनवस्थाश्चत्वार एवोक्ताः। तथाहि—विकल्प इति सविकल्पस्य वा निर्विकल्पस्य वा लक्ष्यत्वमिति। तयोर्विकल्पस्त्वया कृतः। स किं निर्विकल्पस्य उत विकल्पस्य भवेत्। आद्ये पक्षे व्याहतिस्त्वयोक्तो व्याघात एव। अन्यत्र द्वितीयपक्षेऽनवस्थादयः। आदिपदेनात्माश्रयाऽन्योन्याश्रयचक्रकाणि गृह्यन्ते। तथाहि—सविकल्पस्य विकल्प-इत्यत्र विकल्पेन सह वर्त्तत इत्यत्र तृतीयान्तविकल्पपदेन प्रथमान्तविकल्पपदेन चैक एव विकल्पोऽभिधीयते, द्वौ वा। एक एव चेत्स्वयमेक एव विकल्पाश्रयविशेषणतयाऽऽश्रयस्तदाश्रितो विकल्पश्चेत्तदात्माश्रयता। द्वौ चेत्तदा तृतीयान्तशब्दनिर्दिष्टस्याऽपि विकल्पस्य सविकल्परूपत्वात्तदाश्रयस्याऽपि सविकल्पत्वात्तद्विशेषणभूतो विकल्पः। किं प्रथ-

मान्तशब्दनिर्द्दिष्ट एव विकल्प उत ताभ्यामन्यः। आद्येऽन्योन्याश्रयता। द्वितीयेऽपि धर्म्मिविशेषणीभूतो विकल्पः किं प्रथमान्तशब्दनिर्द्दिष्ट उत तेभ्योऽन्यः। आद्ये चक्रकापत्तिः। द्वितीये तस्याप्यन्यस्तस्याप्यन्य इत्यनवस्थापात इति ॥ ६१२ ॥

## सुपेटिकास्थापनन्यायः ॥ ६१३ ॥

यथा समीचीनां पेटिकां दृष्ट्वा स्वस्योत्कृष्टं वस्तु सर्वे स्थापयन्ति, तथा भगवतः कीर्त्तिं श्रुत्वा स्वबुद्धिरत्नं भगवति स्थापयन्तीति श्रीवल्लभचरणैः प्रथमस्कन्धसुबोधिन्यां ध्वनित इति ॥ ६१३ ॥

## पूर्वाबाधेन नोत्पत्तिरुत्तरस्य हि सेत्स्यतीति न्यायः ॥ ६१४ ॥

अनेन हि श्रुत्युक्तकालाधिकरणकभोजनादेः प्रवृत्तिमत्पुरुषविषयतया विहितस्य सदोपवासादिबोधनवचनसंकोचतया संकुचितवाक्यार्थस्य यथावदनुष्ठानेन सिध्यत्येव यथोक्तफलसम्पादकत्वमिति बोध्यमिति धर्म्मसन्दर्भः६१४

## अतिदेशन्यायः ॥ ६१५ ॥

तद्वत्करणमतिदेशः। यत्र तत्स्थानापन्ने तद्धर्म्मारोपोऽतिदिश्यते, तत्रायमवतरतीति ॥ ६१५ ॥

## पर्ज्जन्यन्यायः ॥ ६१६ ॥

"पर्ज्जन्यो मेघशब्देऽपि ध्वनदम्बुदशक्रयोः" इति मेदिनीकाराभिधानात्पर्ज्जन्यः सशब्दमेघे वर्त्तते। यथा पर्ज्जन्यो

जलेऽपि वर्षति स्थलेऽपि वर्षत्येवं विवक्षायां प्रवर्त्ततेऽयं न्यायः। अयम् "इको झल्" १।२।९३। इति सूत्रमहाभाष्येभिहितः। तद्यथा-"कृतकारि खल्वपि शास्त्रं पर्ज्जन्यवत्। तद्यथा-पर्ज्जन्यो यावदूनं पूर्णं च सर्वमभिवर्षति". इति। किञ्चायं भ० गी० अ० ९ श्लो० ९ टीकायां नीलकण्ठ्यां व्यवहृतः। तथाहि-'उदासीनवदासीनम्' इति। यथा पर्ज्जन्यो बीजविशेषेषु रागं केषुचिद्द्वेषं चाऽकृत्वोदासीनस्सन्वर्षति, एवमीश्वरोऽपि पुण्यवत्सु रागं पापिषु द्वेषं चाऽकुर्वञ्जगत्सृजतीति प्रोक्तमिति ॥ ६१६ ॥

## तद्गुणमुपलभ्यत इति न्यायः ॥ ६१७ ॥

अयम् "उच्चैरुदात्तः" १।२।२९। इति सूत्रमहाभाष्य उक्तः। तद्यथा-"द्वयो रक्तयोर्वस्त्रयोर्मध्ये शुक्लं वस्त्रं तद्गुणमुपलभ्यते। बदरपिटके रिक्तको लोहकंसस्तद्गुण उपलभ्यते" इति ॥ ६१७ ॥

## जतुकाष्ठन्यायः ॥ ६१८ ॥

यथा जतु काष्ठञ्च समवेतं प्रयत्नभेदेन जतुनः काष्ठं काष्ठाच्च जतु पृथक् क्रियते, तथा यत्र वस्तुतो भिन्नयोः केनचिदुपाधिना श्लिष्टयोः पुनः प्रयत्नान्तरेण पृथक्करणं, तत्रास्यप्रवृत्तिः। यथा चोक्तं साहित्यदर्पणे दशमपरिच्छेदे श्लेषालङ्कारप्रकरणे-"इह केचिदाहुः-सभङ्गश्लेष एव शब्दश्लेषविषयः। यत्रोदात्तादिस्वरभेदाद्भिन्नप्रयत्नोच्चार्यत्वेन भिन्नयोः शब्दयोर्जतुकाष्ठन्यायेन श्लेषः" इति ॥ ६१८ ॥

## नान्तरीयकन्यायः ॥ ६१९ ॥

नान्तरीयमवश्यंभावीत्यर्थः । यथा–प्रतिबन्धकाभावे नान्तरीयकार्य्योत्पत्तिः अवश्यम्भाविनीत्यर्थ इत्युक्तम् । यथा च कश्चिदन्नार्थी शालिकलापं सपलालं सतुषमाहरति नान्तरीयकत्वात्, स यावदादेयं तावदादाय तुषपलालान्युत्सृजति। तथा कश्चिन्मांसार्थी मत्स्यान्सकण्टकान्सशकलानाहरति नान्तरीयकत्वात्, स यावदादेयं तावदादाय शकलकण्टकान्युत्सृजतीति, प्रकृतेप्येवमिति "स्वरितात्संहितायामनुदात्तानाम्" १। २। ३९। इति सूत्रमहाभाष्य उक्तोयम् ॥ ६१९ ॥

## अवयवार्थवत्त्वात्समुदायार्थवत्त्वमिति न्यायः ॥ ६२० ॥

अवयवैरर्थवद्भिस्समुदाया अर्थवन्त इत्यर्थः। तद्यथा–लोके आढ्यमिदं नगरम्, गोमदिदं नगरमित्युच्यते। न च सर्वे तत्राढ्या भवन्ति, न सर्वे वा गोमन्तः, एवं प्रकृतेऽपि। अयं न्यायः 'अर्थवत्–'१।२।४५। इति सूत्रभाष्य उक्तः॥६२०॥

## अवयवा अर्थवन्तो न समुदाय इति न्यायोऽपि ॥ ६२१ ॥

तद्यथा–यस्य हि यद्द्रव्यं भवति स तेन कार्य्यं करोति, यस्य च या गावो भवन्ति स तासां क्षीरं घृतमुपभुंक्ते। अन्यैरेतद्द्रष्टुमशक्यमित्यपि तद्भाष्ये ॥ ६२१ ॥

## अवयवे कृतं लिङ्गं समुदायस्य विशेषकं भवतीति न्यायः ॥ ६२२ ॥

तद्यथा गोः सक्थनि कर्णे वा कृतं लिङ्गं समुदायस्य विशेषकम्भवति, एवं प्रकृतेऽपि । " पूर्ववत्सनः " १ । ३ । ६२ । इति सूत्रभाष्य उक्तः ॥ ६२२ ॥

## छन्दोवत्कवयः कुर्वन्तीति न्यायः ॥ ६२३ ॥

स्पष्टः । "यू स्त्र्याख्यौ नदी" १ । ४ । ३ । इति सूत्रभाष्य उक्तः ॥ ६२३ ॥

## निरंकुशाः कवय इति न्यायः ॥ ६२४ ॥

अभियुक्तोक्तिरूपोऽयं स्पष्टः । यथोक्तम्–"प्रभुः स्वातन्त्र्यमापन्नो यदिच्छति करोति तत् । पाणिनेर्न नदी गङ्गा यमुना च स्थली नदी ॥" इति ॥ ६२४ ॥

## तदेकदेशभूतं तद्ग्रहणेन गृह्यत इति न्यायः ॥ ६२५ ॥

तद्यथा-गङ्गां यमुनां प्रविष्टा अनेका नद्यः गङ्गायमुनाग्रहणेन गृह्यन्ते, तथा च देवदत्तास्थो गर्भो देवदत्ताग्रह-

---

१ "यस्मिन्दश सहस्राणि पुत्रे जाते गवां ददौ । ब्राह्मणेभ्यः प्रियाख्येभ्यः सोऽयमुञ्छेन जीवति ॥" इत्यत्र प्रियाख्यपदे 'अनुपसर्गे हि को विधीयते,इत्याशंक्येत्यादिः । 'मूलविभुजादित्वात्को भविष्यतीति' तत्समाधानानुसन्धाने तु 'श्रेयांसिसर्वाण्यधिजग्मुषस्ते, इत्याद्युदाहरणं बोध्यम् ।

२ "तां पातयां प्रथममास पपात पश्चात्" इत्यादिप्रयोगदर्शनाच्चेति ध्येयम् ।

णेन गृह्यते । " यस्मा० " १ । ४ । १३ । इति सूत्रमहाभाष्य उक्तः ॥ ६२५ ॥

## सर्वे इमे स्वभूत्यर्थं प्रवर्त्तन्त इति न्यायः ६२६॥

## सर्वः स्वार्थं समीहत इति न्यायः ॥ ६२७ ॥

## ननु स्वार्थपरो लोक इति न्यायः ॥ ६२८ ॥

इमे त्रयः समानाऽभिप्रायकाः । प्रथमः—"हेतुमति च" ३ । १ । २६ । इति सूत्रमहाभाष्योक्तः । तथाहि—" ये तावदेते गुरुशुश्रूषवो नाम, तेऽपि स्वभूत्यर्थं प्रवर्त्तन्ते, पारलौकिकञ्च नो भविष्यति, इह च नः प्रीतो गुरुरध्यापयिष्यतीति । तथा य एते दासाः कर्म्मकरा नाम, तेऽपि स्वभूत्यर्थं प्रवर्त्तन्ते, भक्तं चैलं च लप्स्यामहे, परिभाषाश्च नो भविष्यन्ति । तथा य एते शिल्पिनो नाम, एतेऽपि स्वभूत्यर्थं प्रवर्त्तन्ते, मित्राणि नो भविष्यन्तीति वेतनं च लप्स्यामहे " इति । द्वितीयस्तु—पञ्चतन्त्रोक्तः । तृतीयस्तु—श्रीमद्भागवतोक्त इति ॥ ६२६ ॥ ६२७ ॥ ६२८ ॥

## अतस्मिन्स इत्येतद्भवतीति न्यायः ॥६२९॥

अयं "पुंयोगादाख्यायाम्" ४ । १ । ४८ । इति सूत्रमहाभाष्येऽभिहितः । तथाहि—" चतुर्भिः प्रकारैरतस्मिन्स इत्येतद्भवति—तात्स्थ्यात् १, ताद्धर्म्यात् २, तत्सामीप्यात् ३, तत्साहचर्य्या ४ दिति । तात्स्थ्यात्तावत्—मञ्चा हसन्ति, गिरिर्दह्यते । मञ्चा हसन्तीत्यत्र बालेषु मञ्चत्वा-

रोपान्मञ्चशब्दप्रवृत्तिर्हसन्तीति पदान्तरप्रयोगाद्विज्ञायत इति कैयटः। ताद्धर्म्यात्-जटिनं यान्तं ब्रह्मदत्त इत्याह, ब्रह्मदत्ते यानि कार्य्याणि जटिन्यपि तानि क्रियन्त इत्यतो जटी ब्रह्मदत्त इत्युच्यते । तत्सामीप्यात्-गङ्गायां घोषः, कूपे गर्ग्गकुलम् । तत्साहचर्यात्-कुन्तान्प्रवेशय, यष्टीः प्रवेशयेति। इत्येवं यत्र विवक्ष्यते, तत्रायं प्रवर्त्तते ॥ ६२९ ॥

## गुडश्लेष्मन्यायः ॥ ६३० ॥

यथा गुडः श्लेष्मिणः श्लेष्माणं वर्द्धयित्वा पश्चात्त श्लेष्माणं निपातयति,तद्वत्प्रथमं विश्वासमुत्पाद्य शत्रून्संवर्द्धय विनाशने प्रवर्त्तत इति। तथोक्तम्-" उच्छेद्यमपि विद्वांसो वर्द्धयन्त्यरिमेकदा। गुडेन वर्द्धितः श्लेष्मा सुखं वृद्ध्या निपात्यते ॥" इति ॥ ६३० ॥

## अनवयवे शास्त्रार्थसम्प्रत्यय इति च न्यायः ॥ ६३१ ॥

सिद्धन्तु धर्म्मोपदेशनेऽनवयविविज्ञानात्, यथा लौकिकवैदिकेष्विति।सिद्धमेतत्। कथम्।धर्मोपदेशनमिदं शास्त्रम्।धर्मोपदेशनेऽस्मिञ्शास्त्रेऽनवयवेन शास्त्रार्थः सम्प्रतीयते। यथा लौकिकवैदिकेषु च कृतान्तेषु। लोके तावत्-ब्राह्मणो न हन्तव्यः,सुरा न पेयेति। ब्राह्मणमात्रं न हन्यते,सुरामात्रं न पीयते।यदि चावयवेन शास्त्रार्थसम्प्रत्ययस्स्यात्-एकं च ब्राह्मणमहत्वा एकाञ्च सुरामपीत्वाऽन्यत्र कामचारः स्यात्। तथा पूर्ववया ब्राह्मणः प्रत्युत्थेय इति, पूर्ववयोमात्रं प्रत्युत्थीयते।

यदि चावयवेन शास्त्रार्थसम्प्रत्ययः स्यात्-एकं पूर्ववयसं प्रत्युत्थायाऽन्यत्र कामचारस्स्यात् । तथा वेदे खल्वपि—"वसन्ते ब्राह्मणोऽग्निष्टोमादिभिः क्रतुभिर्यजेत"—इति। अग्न्याधाननिमित्तं वसन्तेवसन्ते इज्यते । यदि चावयवेन शास्त्रार्थसम्प्रत्ययः स्यात्, सकृदिष्ट्वा पुनरिज्यायां न प्रवर्त्तेत, एवं प्रकृतेऽपि ॥ ६३१ ॥

## ऊर्ध्वं प्राणा व्युत्क्रामन्ति यूनः स्थविर आयति। प्रत्युत्थानाभिवादाभ्यां पुनस्तान्प्रतिपद्यते ॥ इति न्यायः ॥ ६३२ ॥

अयं न्यायोऽर्थवादरूपः प्रत्युत्थानप्रशंसापरः । इदं न्यायत्रयम् "एकः पूर्वपरयोः" ६ । १ । ८४ । इति सूत्रभाष्ये स्पष्टमिति ॥ ६३२ ॥

## गुरुकृतदण्डो न दोषावह इति न्यायः॥६३३॥

अयं "वाक्यादेरामन्त्रितस्याऽसूयासम्मतिकोपकुत्सनभर्त्सनेषु" ८ । १ । ८ । इति सूत्रमहाभाष्ये ध्वनितः । तथाहि-असूयाकुत्सनयोः कोपभर्त्सनयोश्चैकार्थत्वात्पृथक्त्वानिर्देशस्याऽनर्थकत्वमाशङ्क्यैवं तर्ह्याह—"सामृतैः पाणिभिर्घ्नन्ति गुरवो न विषोक्षितैः। लालनाश्रयिणो दोषास्ताडनाश्रयिणो गुणाः" इति प्रतिवाक्येनेति ॥ ६३३ ॥

## तुलायष्टिन्यायः ॥ ६३४ ॥

यथा तुलायष्टिः स्तोकेनोन्नतिमायाति, स्तोकेन यात्य-

धोगतिम्, एवं खलजनोऽपि स्तोकेनोन्नतिमायाति, स्तोकेनाधोगतिं याति ॥ ६३४ ॥

## सङ्गगुणदोषन्यायः ॥ ६३५ ॥

अयं पद्येन विवृतः। तथाहि—"सन्तप्ताऽयसि संस्थितस्य पयसो नामापि न ज्ञायते मुक्ताकारतया तदेव नलिनीपत्रस्थितं राजते। स्वात्यां सागरशुक्तिकुक्षिपतितं तज्जायते मौक्तिकं प्रायेणाऽधममध्यमोत्तमगुणः संवासतो जायते॥" इति न्यायद्वयं पञ्चतंत्रे विवृतमिति ॥ ६३५ ॥

## अब्धिफेनादिन्यायः ॥ ६३६ ॥

अयं न्यायो दृग्दृश्यद्वयविवेकाऽपरनामवाक्यसुधाकरग्रन्थे व्यवहृतः। तथाहि—"सृष्टिर्नाम ब्रह्मरूपे सच्चिदानन्दवस्तुनि। अब्धौ फेनादिवत्सर्वनामरूपप्रसारणम् ॥" इति। अस्यार्थः—ब्रह्मस्वरूपे सच्चिदानन्दवस्तुन्यारोपितनामरूपयोरवस्तुत्वादधिष्ठानस्य तद्वैलक्षण्यं द्योतयति वस्तुशब्दः।सच्चिदानन्दश्च तद्वस्तु चेति सच्चिदानन्दवस्तु,तस्मिन्—परमार्थसच्चिदानन्दलक्षणे ब्रह्मणीत्यर्थः। नाम च रूपञ्च नामरूपे, सर्व्वे च ते नामरूपे च तयोः प्रसारणं—विस्तारः विततिः, सृष्टिरित्युच्यते। एतदुक्तं भवति ब्रह्मणाऽवस्थिताया विक्षेपात्मिकाया मायायास्तस्मिन्नेव ब्रह्मणि समस्तनामरूपाकारेण विवर्तनं यत्सैव सृष्टिरित्युच्यत इति। अत्र न्यायरूपदृष्टान्तमाह—अब्धौ फेनादिवदिति। अब्धाववस्थिताया विक्षेपात्मिकाया मायायास्तत्रैव फेनत-

रङ्गबुद्बुदाकारेण विवर्तनं सृष्टिशब्देनोच्यते, तथाऽत्रापीति भावः ॥ ६३६ ॥

## निवातस्थितदीपन्यायः ॥ ६३७ ॥

"निवातावाश्रयावातौ शस्त्राऽभेद्यं च वर्म्म यत्" इत्यमरः। अत्र निवातपदेन निरुद्धो निवृत्तो वा वातो वायुर्यस्मादित्यर्थकं वायुरहितं स्थानमुच्यते, निवाते स्थितो निवातस्थितः, निवातस्थितश्चासौ दीपश्चेति निवातस्थितदीपः। यथा निवातस्थले [1]स्थापितो दीपो निश्चलो भवति, तथा शमप्राप्तं चित्तमपि निश्चलं भवतीत्यर्थः। उक्तञ्च वादसुधायाम्—"निर्विकल्पस्समाधिः स्यान्निवातस्थितदीपवत्" इति। श्रीमद्भगवद्गीतायामपि—"यथा दीपो निवातस्थो नेङ्गते सोपमा स्मृता। योगिनो यतचित्तस्य युञ्जतो योगमात्मनः॥" इति अ० ६ श्लो० १९॥ ६३७॥

## जलतरंगन्यायः ॥ ६३८ ॥

यथा जलगुणा माधुर्य्यद्रवशैत्यादयो जलस्योपरि वातवशात्तरङ्ग उत्पन्ने सति जलविवर्त्तत्वेन जलनिष्ठे तस्मिँस्तरङ्गे प्राप्य तरङ्गोत्पत्त्यनन्तरं तरङ्गविवर्त्तत्वेन तरङ्गनिष्ठे फेनेऽप्यनुगताः। जलं, तरङ्गः, फेन इति भेदव्यवहारे विद्यमानेऽपि जलादीनां माधुर्य्यद्रवशैत्यव्यतिरेकेण स्वरूपाभावतया तेषां माधुर्य्यद्रवशैत्यात्मकत्वात्पूर्वपूर्वाऽधिष्ठानस्यैवोत्तरोत्तरव्यावृत्ताकारेण विवर्त्तमानत्वात्। उत्तरोत्तरकार्य्यस्य

---

१ स्थित इति पा०।

पूर्वाधिष्ठानानन्यत्वं प्रदर्शितमनेन न्यायेन। उक्तं च—"माधुर्य्यद्रवशैत्यादिनीरधर्म्मास्तरङ्गके। अनुगम्याथ तन्निष्ठे फेनेप्यनुगता यथा॥" इति वादसुधाकरः॥ ६३८॥

## प्रसिद्धाऽनुवादेनाऽप्रसिद्धं निरूपणीयमिति न्यायः॥ ६३९॥

अयं न्यायो दृग्दृश्यविवेकाऽपरपर्य्यायवाक्यसुधाख्यग्रन्थटीकायां व्यवहृतः। तत्र हि—"रूपं दृश्यं लोचनं दृग्दृश्यं दृक्तु मानसम्। दृश्या धीवृत्तयः साक्षी दृगेव न तु दृश्यते॥" इति प्रथमपद्योपोद्घाते। यथा प्रारीप्सितस्य ग्रन्थस्याविघ्नेन परिसमाप्तिप्रचयगमनाय शिष्टाचारपरिपालनाय च केवलकूटस्थप्रत्यग्बोधरूपपरमात्मस्वरूपानुस्मरणलक्षणं मंगलमाचरन्सच्चिदानन्दाऽखण्डैकरसस्वरूपाऽवस्थानलक्षणस्य मोक्षस्य तत्त्वमस्यादिमहावाक्यार्थापरोक्षज्ञानफलकत्वात्, वाक्यार्थज्ञानस्य चान्वयव्यतिरेकाभ्यां पदार्थपरिशोधनपूर्वकत्वात्, पदार्थपरिशोधनस्य 'प्रसिद्धानुवादेनाऽप्रसिद्धं निरूपणीयम्' इति न्यायेन प्रतिशरीरमहमहमिति प्रसिद्धजीववाचकत्वंपदार्थपरिशोधनपूर्वकत्वात्, श्रीमच्छङ्कराचार्य्यैः श्रीमच्छारीरकमहाशास्त्रे प्रतिपादितमर्थं हृदि निधाय प्राण्यनुजिघृक्षया दृग्दृश्यविवेकद्वारा प्राधान्येन त्वंपदार्थपरिशोधनपरमिदं प्रकरणमारभमाणः परमकृपानिधिः श्रीभारतीतीर्थगुरुः प्रकरणप्रतिपाद्यमानमर्थं संक्षिप्य प्रथमश्लोकेन तावद्दर्शयति—रूपमित्युक्तमिति॥ ६३९॥

## अङ्गारन्यायः ॥ ६४० ॥

यथा—अङ्गार उष्णस्तापयुक्तश्चेद्धस्तं दहति, उष्णेऽङ्गारे गृहीते हस्तो दग्धो भवतीत्यर्थः । शीतलश्चेत्स हस्तं मलिनीकरोति च, एवमंगारस्वभावो दुष्टजनोऽपि । अत एव तत्संसर्ग्गं न कुर्य्यादिति विषयेऽस्य प्रवृत्तिरिति ॥ ६४० ॥

## बुभुक्षितः किं द्विकरेण भुङ्क्त इति न्यायः ६४१॥

अयं लालसातिशये वर्त्तते । यथा—"जागर्त्ति लोको ज्वलति प्रदीपः सखीजनः पश्यति कौतुकं मे । क्षणैकमात्रं कुरु कान्त धैर्य्यं बुभुक्षितः किं द्विकरेण भुङ्क्ते॥" इति॥६४१॥

## बुभुक्षितं न प्रतिभाति किञ्चिदिति न्यायः ६४२॥

उक्तञ्च—"जागर्त्तु लोको ज्वलतु प्रदीपः सखीजनः पश्यतु कौतुकन्ते । क्षणैकमात्रं न करोमि धैर्य्यं बुभुक्षितं न प्रतिभाति किञ्चित्॥" इति पूर्वन्यायस्य प्रतिवाक्यमिदमिति । इमौ द्वौ न्यायौ प्रश्नोत्तररूपौ ज्ञेयाविति ॥ ६४२ ॥

## बुभुक्षितः किं न करोति पापमिति न्यायः ६४३।

## दरिद्रः किं न कुरुत इति न्यायः ॥ ६४४ ॥

इमौ द्वौ स्पष्टार्थाविति ॥ ६४३ ॥ ६४४ ॥

## निरस्तपादपे देश एरण्डोऽपि द्रुमायत इति न्यायः ॥६४५॥

यत्र बहुज्ञसज्जनदुर्लभत्वेऽल्पज्ञादरस्तत्रायं प्रवर्त्तते । उक्तञ्च—"यत्र विद्वज्जनो नास्ति श्लाघ्यस्तत्राऽल्पधीरपि ।

निरस्तपादपे देश एरण्डोऽपि द्रुमायते॥" इति। एरण्डश्चित्र-काख्यः क्षुद्रवृक्षविशेषः ॥ ६४५ ॥

## सर्वं खलस्य चरितं मशकः करोतीति न्यायः ॥ ६४६ ॥

स्पष्टार्थः। उक्तं च-"प्राक्पादयोः पतति खादति पृष्ठमांसं कर्णे कलं किमपि रौति शनैर्विचित्रम्। छिद्रं निरूप्य सहसा प्रविशत्यशंकः सर्वं खलस्य चरितं मशकः करोति॥" इति ॥ ६४६ ॥

## छिद्रेष्वनर्था बहुलीभवन्तीति न्यायः ६४७॥

यत्र दुःखाद्दुःखान्तरप्राप्तिरिति विवक्ष्यते, तत्रायमवतरतीति। उक्तञ्च-"एकस्य दुःखस्य न यावदन्तं गच्छाम्यहं पारमिवार्णवस्य। तावद्द्वितीयं समुपस्थितं मे छिद्रेष्वनर्था बहुलीभवन्ति॥" इति। किञ्च-"क्षते प्रहारा निपतन्त्यभीक्ष्णं धनक्षये दीव्यति जाठराग्निः। आपत्सु वैराणि समुल्लसन्ति चिछद्रेष्वनर्था बहुलीभवन्ति॥" इति विष्णुशर्म्मा ॥ ६४७ ॥

## जलबिन्दुनिपातन्यायः ॥ ६४८ ॥

यथा जलकणिकापातेन घटः क्रमशः पूर्य्यते, एवं विद्यानां धर्म्मस्य धनस्य च क्रमशः सञ्चयो भवतीति विषयेऽस्य प्रवृत्तिरिति। उक्तञ्च-"जलबिन्दुनिपातेन क्रमशः पूर्य्यते घटः। स हेतुस्सर्वविद्यानां धर्म्मस्य च धनस्य च॥" इति ॥ ६४८ ॥

## अनुक्तमप्यूहति पण्डितो जन इति न्यायः ६४९

विचक्षणो जनोऽकथितमपि विषयमनुभवतीति भाव इति विषयेऽस्य प्रचारः। उक्तञ्च–"उदीरितोऽर्थः पशुनापि गृह्यते हयाश्च नागाश्च वहन्ति चोदिताः। अनुक्तमप्यूहति पण्डितो जनः परेङ्गितज्ञानफला हि बुद्धयः॥" इति॥६४९॥

## काचमणिन्यायः ॥ ६५० ॥

यथा मणिकाचयोः परीक्षाकाल एवायं काचोऽयं मणिरिति निश्चीयते, एवं यत्र विवक्षा, तत्रायं प्रवर्तते। उक्तं च–"मणिर्लुठति पादेषु काचः शिरसि धार्य्यते। क्रयविक्रयवेलायां काचः काचो मणिर्मणिः॥" इति ॥ ६५० ॥

## काकपिकन्यायः ॥ ६५१ ॥

## गोगवयन्यायः ॥ ६५२ ॥

एवमिमावपि न्यायौ काचमणिन्यायसमानविषयौ। तथाहि–"काकः कृष्णः पिकः कृष्णः को भेदः पिककाकयोः। प्राप्ते वसन्तसमये काकः काकः पिकः पिकः॥" इति। "यथा गोगवयभ्रान्तिः कस्य नाम न जायते। दोहने ज्ञायते सम्यग्गौरेषा गवयो नहि॥" ॥ ६५१ ॥ ६५२ ॥

## करिघण्टान्यायः ॥ ६५३ ॥

यत्र बलापेक्षया बुद्धेर्महत्त्वं विवक्ष्यते, तत्रास्यावतारः। उक्तं च–"मतिरेव बलाद्गरीयसी यदभावे करिणामियं दशा। इति घोषयतीव डिण्डिमः करिणो हस्तिपकाहतः क्वणन्॥" इति ॥ ६५३ ॥

## षट्कर्णो भिद्यते मन्त्र इति न्यायः ॥६५४॥

मन्त्रः मंत्रणाकार्य्यम् । षट्संख्याकाः कर्णा यस्मिँस्त-थाभूतः, तृतीयपुरुषश्रुत इत्यर्थः । भिद्यते प्रकाशं यातीति स्पष्टः ॥ ६५४ ॥

## अन्धकवर्तकीयन्यायः ॥ ६५५ ॥

अन्ध एव अन्धकः । स्वार्थे कः । नेत्रविहीन इत्यर्थः । वर्तिका पक्षिविशेषः । वनचटका इति प्रसिद्धा । देशभाषायां तु 'बटेरा' इति प्रसिद्धा । "वर्त्तका शकुनौ प्राचाम्" उदीचान्तु वर्त्तिकेति स्त्रीप्रत्यये सि० कौ० गणसूत्रादित्व-विकल्पः । अन्धकश्च वर्त्तिका चाऽनयोस्समाहारः—अन्धकवर्त्तकम् "स नपुंसकम्" २ । ४ । १७ । इति नपुंसकत्वम् । अन्धकवर्त्तकमिवान्धकवर्त्तकीयम् "समासाच्च तद्विषयात्" ५ । ३ । १० । इति सूत्रेण छप्रत्ययः । छस्येयः । अयं न्यायः काकतालीयन्यायविदवितर्क्कितेष्टलाभेऽनिष्टलाभे चावतरति । यथा कश्चिदन्धकः पुमान्करतलेन करं ताडयन्वर्त्तते, तस्य हस्तद्वयमध्ये वर्त्तिका पक्षिविशेषो दैवात्समायाति, स तु दुर्ल्लभः, तथा मानुषजन्मनि सतां सङ्गोऽतिदुर्लभः । अत एवोक्तम्—"संसारसागरमिमं भ्रमता नितान्तं जीवेन मानवभवः समवापि दैवात् । तत्रापि यद्भुवनमान्यकुले प्रसूतिस्सत्सङ्गतिश्च तदिहान्धकवर्त्तकीयम् ॥" इति । किञ्च—यथाऽन्धकस्य पुंसः पादन्यासोऽतर्क्कितो वर्तिकाख्यविहगोपरि पतेत्, तथा तत्सदृशमन्धकवर्त्तकीयमिति । इत्यादयः प्रायेणान्योन्यं मिलन्तीति ॥ ६५५ ॥

## योगाद्रूढिर्बलीयसीति न्यायः ॥ ६५६ ॥

योगादित्यस्य यौगिकात्प्रकृतिप्रत्यययोगलभ्यार्थवाचकादित्यर्थः । रूढिस्तु-प्रकृतिप्रत्ययार्थमनपेक्ष्य शाब्दबोधजनकशब्दात्मिकेति । विस्तरस्त्वन्यत्रेति ॥ ६५६ ॥

## यथा नाम तथा गुण इति न्यायः ॥ ६५७ ॥

स्फुटः ॥ ६५७ ॥

## अशक्तोऽहं गृहारम्भे शक्तोऽहं गृहभञ्जन इति न्यायः ॥ ६५८ ॥

अयम् "सूचीमुखि दुराचारे रण्डे पण्डितमानिनि । असमर्थो गृहारम्भे समर्थो गृहभञ्जने ॥" इति पद्यमूलकः प्रतीयते । चटकाम्प्रति वानरवाक्यमिदम् । अस्याख्यायिका तु पंचतन्त्रादिग्रन्थेभ्योऽवसेया, नेह विस्तरः ॥ ६५८ ॥

## अन्तर्दीपिकान्यायः ॥ ६५९ ॥

अयं मुण्डकोपनिषदीयशाकरभाष्ये । तथाहि–"सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यग्ज्ञानेन ब्रह्मचर्य्येण नित्यम्" इति । नित्यं सदा, नित्यं सत्येन, नित्यं तपसा, नित्यं सम्यग्ज्ञानेनेति सर्वत्र नित्यशब्दोऽन्तर्दीपिकान्यायेनानुषक्तव्य इति ॥ ६५९ ॥

## अस्त्रमस्त्रेण शाम्यतीति न्यायः ॥ ६६० ॥

अयं मण्डनमिश्राऽपरपर्य्यायसुरेश्वराचार्य्यकृतनैष्कर्म्यसिद्धिटीकायामुक्तः। तथाहि–'नन्वस्त्रमस्त्रेण शाम्यतीति

न्यायेन काम्यैः काम्यानां निषिद्धैर्निषिद्धानां निवृत्तिरस्त्वि-त्यत आह—न च काम्यैः' इति ॥ ६६० ॥

## यादृशं तादृशमेव साधयतीति न्यायः ६६१॥

## चौरान्वेषणे चौर एव प्रयोक्तव्य इति न्यायः ॥ ६६२ ॥

इमावपि 'अश्रम० ६६०' इति न्यायसमकक्षायामवत-रत इति ॥ ६६१ ॥ ६६२ ॥

## आकाशमुष्टिहननन्यायः ॥ ६६३ ॥

अयमसम्भववस्तुनि प्रयत्नकरणेऽवतरतीति सर्वदर्श-नसंग्रहीयजैमिनीये ध्वनितः ॥ ६६३ ॥

## कूपयन्त्रघटिकान्यायः ॥ ६६४ ॥

अयं मृच्छकटिकाख्यप्रकरणदशमांकैकोनषष्टितम ५९ श्लोकेन व्याख्यातः। तथाहि—"काँश्चित्तुच्छयति प्रपूरयति वा काँश्चिन्नयत्युन्नतिं काँश्चित्पातविधौ करोति च पुनः काँश्चिन्नयत्याकुलान्। अन्योन्यं प्रतिपक्षसंहतिमिमां लोक-स्थितिं बोधयन्नेष क्रीडति कूपयन्त्रघटिकान्यायप्रसक्तो विधिः॥"इति। अस्यार्थः प्रकारांतरेणाऽपि—गम्भीरकूपादपि यंत्रेण घटिका उत्तोल्यते, एवमतिदुर्बोधत्वेन गम्भीरादपि शास्त्रादुपदेशादिरूपयंत्रेण सारोद्धरणं भवतीति ॥ ६६४ ॥

## क्षीरं विहायाऽरोचकग्रस्तः सौवीररुचिम-नुभवतीति न्यायः ॥ ६६५ ॥

"सौवीरं काञ्जिके स्रोतोऽञ्जने च बदरीफले" इति मेदि-

नीकाराभिधानादत्र सौवीरं काञ्जिकं ज्ञेयमिति। यथा—सुखाभिव्यक्तिर्मुक्तिरिति पक्षं परित्यज्य दुःखनिवृत्तिरेव मुक्तिरिति स्वीकारः प्रकृतन्यायमनुभावयतीति सर्वदर्शनसंग्रहेऽक्षपादीयेऽभिहितः ॥ ६६५ ॥

## गगनरोमन्थन्यायः ॥ ६६६ ॥

अयमप्यसम्भववस्तुनि व्यर्थप्रयत्नकरणे प्रवर्त्तते। पशूनामुद्गीर्य्य चर्वणं रोमन्थ उच्यते। 'उगल' इति मुलतानभाषा। स० द० सं० पाणिनिरामानुजनययोः स्पष्टः ॥ ६६६ ॥

## पवनताडनन्यायः ॥ ६६७ ॥

अयमपि तथा ॥ ६६७ ॥

## पीलुपत्रफलन्यायः ॥ ६६८ ॥

यथा—पीलुवृक्षस्य पत्राणि कटुकानि, फलानि च मधुराणि। द्वयोः पत्रफलयोः पीलुजन्यत्वात्साम्यमिति। अयञ्चाऽत्यन्ताऽसङ्गतमूर्खवितर्ककथनाविर्भावे प्रवर्त्तते। एवञ्चाऽभेदसाधको हेतुर्गोमयपायसीयन्यायवदाभासतपीलुपत्रफलन्यायवदाभासतां च भजेदिति बौद्धे। विस्तांरस्तु तत्रैवेति ॥ ६६८ ॥

## तमोदीपन्यायः ॥ ६६९ ॥

तथाहि—"अज्ञानं ज्ञातुमिच्छेद्यो मानेनाऽत्यन्तमूढधीः। स तु नूनं तमः पश्येद्दीपेनोत्तमतेजसा ॥" इति वेदान्तसिद्धान्तमुक्तावली ॥ ६६९ ॥

## छत्रिन्यायः ॥ ६७० ॥

यथा—लोके छत्रिणो यान्तीति प्रयोगे सपरिवारे राज्ञि गच्छति छत्र्यच्छत्रिसमुदाये छत्रिशब्दो वर्त्तते । अयं न्यायः शारीरकसूत्रशाङ्करभाष्ये १ । २ । ११ ।, १ । २ । १२ ।, ३ । ३ । ३४ । सूत्रत्रयविवृतौ व्यवहृतः । तत्र हि—"ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे पराद्धर्थे । छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेताः ॥" इति कठवल्लीश्रुत्यर्थे—तत्र किमिह बुद्धिजीवौ निर्द्दिष्टौ, उत-जीवंपरमात्मानाविति बहुधा संमीमांस्य ऋतं पिबन्ताविल्यत्र तु जीवे पिबत्यशनाद्यतीतः परमात्माऽपि तत्साह-चर्य्याच्छत्रिन्यायेन पिबतीत्युपचर्य्यत इत्याद्युक्तम् । विस्तर-भिया नेह प्रपञ्च्यत इति ॥ ६७० ॥

## न हि कठोरकण्ठीरवस्य कुरङ्गशावः प्रतिभटो भवतीति न्यायः ॥ ६७१ ॥

कण्ठीरवः सिंहः । 'कण्ठीरवो मृगारिपुः' इत्यमरः । कुरङ्गस्य मृगस्य शावः, शिशुरित्यर्थः । प्रतिभटः सम्मुख-युद्धकर्त्ता । अयं न्यायो बलवता सह निर्बलो नैव योद्धुं क्षमत इत्यर्थविवक्षायां प्रवर्त्तते । उक्तं हि स० द० सं० अक्षपाददर्शने—'ननु गगनादिकमकर्त्तृकं शरीराजन्यत्वा-द्गगनवदिति चेत्—नैतत्परीक्षाक्षममीक्ष्यते, न हि कठोर-कण्ठीरवस्य इत्यादि ॥ ६७१ ॥

## पाटच्चरलुण्ठिते वेश्मनि यामिकजागरण-मिति न्यायः ॥ ६७२ ॥

पाटच्चरश्चौरः । यामिकः प्रहरकः । 'पहिरेदार' इति, 'चौकीदार' इति च भाषा । प्रयोजनाऽनुपयुक्तवेलायामय-मवतरतीति खण्डने स्पष्टः ॥ ६७२ ॥

## मध्यदीपकन्यायः ॥ ६७३ ॥

पुरोक्तमध्यमणिवदस्य प्रवृत्तिरिति ॥ ६७३ ॥

## लोष्टप्रस्तारन्यायः ॥ ६७४ ॥

लोष्टस्य मृत्तिकापिण्डस्य प्रस्तारो विस्तार इति यावत् । अयं यथा मृत्पिण्डस्य कुलालो नानावैचित्र्यं घटशरावप्रति-कृतिप्रभृतिरूपं रचयत्येवं विवक्षायां प्रवर्त्तते । अत एव लोष्टप्रस्तारन्यायेनाऽनन्तवैचित्र्यमुक्तमित्युक्तं दुर्गा-दासेन ॥ ६७४ ॥

## लोष्टप्रस्तरन्यायः ॥ ६७५ ॥

लोष्टो मृत्पिण्डः । प्रस्तरः पाषाणः । यत्र लघुतरवस्त्वपे-क्षया गुरुतरवस्तुनस्तत्त्वं ज्ञायते, तत्रास्य प्रवृत्तिः । अन्ये तु—यत्र गुरुलघुवस्तुनोस्तुल्यान्तरविवक्षा, तत्रास्य प्रवृत्ति-रिति ॥ ६७५ ॥

## वरं सांशयिकान्निष्कादसांशयिकः कार्षा-पण इति न्यायः ॥ ६७६ ॥

संशयेनाऽऽपन्नः सांशयिकः । ठक् प्रत्ययः । सन्देहयुक्त

इत्यर्थः । तस्मात् "साष्टे शते सुवर्णानां हेम्न्युरोभूषणे पले । दीनारेऽपि निष्कोऽस्त्री " इत्यमरात्सुवर्णानामष्टाधिकशतात्मकनिष्कादसांशयिकः कार्षापणो वरम् । कार्षापणं नाम राजतपरिमितरूपकस्य 'रूपैया' इति ख्यातस्येति । न्यायोऽयं संदिग्धबहुमूल्यवस्त्वपेक्षयाऽल्पमूल्यवस्तुवरत्वविषये प्रवर्त्तते ॥ ६७६ ॥

## वरमद्य कपोतः श्वो मयूरादिति न्यायः॥६७७॥

अयमुक्तविषयेऽवतरतीति ॥ ६७७ ॥

## विपुलकदलीफललिप्सया जिह्वाछेदनमिति न्यायः ॥६७८॥

अयञ्च स०द०सं०पूर्णप्रज्ञनये ह्युदाहृतः । तथाहि—एवं च परमेश्वराऽभेदतृष्णया विष्णोर्गुणोत्कर्षस्य मृगतृष्णासमत्वाभिधानं विपुलकदलीफललिप्सया जिह्वाछेदनमनुहरत्येतादृशाविष्णुविद्वेषणान्धतमसप्रवेशप्रसङ्गादिति ॥६७८॥

## शरपुरुषीय इति न्यायः ॥ ६७९ ॥

काकतालीयवदयमिति । यथा—शरश्च क्षिप्तः प्राकाराच्च पुरुष उत्थितस्स तेन हतस्तत्तुल्यं शरपुरुषीयमिति ॥ ६७९ ॥

## शर्करोन्मज्जनीयन्यायः ॥ ६८० ॥

यथा—शर्करा च क्षिप्ता पुरुषस्योन्मज्जनं, तत्तुल्यं शर्करोन्मज्जनीयमिति पूर्ववत् ॥ ६८० ॥

## शिरश्छेदेऽपि शतं न ददाति विंशतिपञ्च-कन्तु प्रयच्छति शाकटिक इति न्यायः ६८१॥

अयं न्यायः स०द०सं०पूर्णप्रज्ञमतेऽभिहितः । तथाहि-ननु प्रपञ्चस्य मिथ्यात्वमभ्युपेयते, नाऽसत्त्वमिति चेत्तदे-तत्सोऽयं शिरश्छेदेपि शतं न ददाति विंशतिपञ्चकं प्रयच्छ-तीति शाकटिकवृत्तान्तमनुहरेन्मिथ्यात्वाऽसत्त्वयोः पर्य्याय-त्वादित्यलमतिप्रसङ्गेन । शकटेन चरति गच्छति-"च-रति" इति ठक् । शाकटिकः । शकटेन गमनकर्त्तेति यावत् । शाकटिकवृत्तं पञ्चतन्त्रे द्रष्टव्यम् ॥ ६८१ ॥

## शीर्षे सर्प्पो देशान्तरे वैद्य इति न्यायः॥६८२॥

उक्तञ्च-"उपरि घनं घनरटितं दूरे दयिता किमेतदाप-तितम् । हिमवति दिव्यौषधयः शीर्षे सर्प्पः समाविष्टः ॥" इति ॥ ६८२ ॥

## अगतिकगतिन्यायः ॥ ६८३ ॥

स्पष्ट इति ॥ ६८३ ॥

## लक्षणाश्रयां लक्ष्यस्य व्यवस्था न्याय्येति न्यायः ॥ ६८४ ॥

स्पष्ट इति ॥ ६८४ ॥

## लक्ष्याश्रयेण तु लक्षणव्यवस्थापनं गत्य-न्तराऽभावादिति न्यायः ॥ ६८५ ॥

स्पष्टः । इति न्यायत्रयं "धातोः कर्म्मणः समानकर्तृ-

कादिच्छायां वा" ३ । १ । ७ । इति सूत्रमहाभाष्यकैयटयोः स्पष्टम् ॥ ६८५ ॥

## सविशेषणानां वृत्तिर्न वृत्तस्य वा विशेषणं न प्रयुज्यत इति न्यायः ॥ ६८६ ॥

## सापेक्षमसमर्थवदिति न्यायः ॥ ६८७ ॥

इमौ द्वौ न्यायौ व्याकरणशास्त्रविषयिणौ प्रकरणप्रसङ्गत्वेनेहोक्तौ । विस्तरभिया न व्याख्यातौ । "सुप आत्मनः क्यच्" ३ । १ । ८ । इति सूत्रभाष्योक्तौ । तस्मादेवाऽवसेयाविति ॥ ६८६ ॥ ६८७ ॥

## श्येनकपोतीयन्यायः ॥ ६८८ ॥

यथा कपोतोऽतर्किंतागतेन श्येनेन गृहीतस्तथा काकतालीयवज्ज्ञेयमिति ॥ ६८८ ॥

## चन्द्रचन्द्रिकान्यायः ॥ ६८९ ॥

यथा—सर्वदेवकारणस्य रुद्रस्य या शक्तिश्चंद्रचंद्रिकान्यायेन तदुद्बोधरूपिणी स्वाधीनवल्लभेति प्रसिद्धा, सैव भवानीति ॥ ६८९ ॥

## न हि भवति कुण्डं बदरमिति न्यायः॥६९०॥

आधेयभावे एकाश्रयत्वे वा न सामानाधिकरण्यं न हि भवति कुण्डं बदरमिति । 'पिठरः स्थाल्युखा कुण्डम्' इत्यमरः । 'टोकनी' इति भाषा । 'सौवीरं बदरं घोण्टा' इत्यमरः । 'बेर' इति प्रसिद्धमिति ॥ ६९० ॥

## प्रदीपे प्रदीपं प्रज्वाल्य तमोनाशाय यतमान इति न्यायः ॥ ६९१ ॥

प्रदीपं प्रज्वाल्य प्रदीपे तमोनाशाय यतमान इत्यर्थः । लघोरुपायात्साध्यसिद्धौ भवन्त्यां गुरावुपाये प्रवर्त्तमानस्य तवैवेदं दोषोद्भावनम्—प्रदीपे प्रदीपं प्रज्वाल्य तमोनाशाय यतमानस्येव पुंस इति । अयं काव्यदीपिकायाम् ॥ ६९१ ॥

## मनोराज्यविजृम्भणन्यायः ॥ ६९२ ॥

स्वचित्तपरिकल्पितमनोरथविकाश इत्यर्थः । "मनोरथानां न समाप्तिरस्ति वर्षायुतेनाप्यथ वाऽब्दलक्षैः । पूर्णेषुपूर्णेषु पुनर्नवानामुत्पत्तयस्सन्ति मनोरथानाम् ॥" इति । अयञ्च स०द०सं०चार्वाकदर्शने, पाणिनिदर्शने च दर्शितः । तथाहि चार्वाके—नद्यास्तीरे फलानि सन्तीति वचनश्रवणसमनंतरं फलार्थिनां नदीतीरे प्रवृत्तिरिति तदेतन्मनोराज्यविजृम्भणमिति । पाणिनीये तु—ननु स्फोटवाचकतापक्षेपि प्रागुक्तविकल्पप्रसरेण घट्टकुटीप्रभायितमिति चेत्तदेतन्मनोराज्यविजृम्भणं वैषम्यादिति ॥ ६९२ ॥

## वदतोव्याघातन्यायः ॥ ६९३ ॥

यथा-जिह्वा मे नास्ति, मम माता बन्ध्येत्यादौ प्रसरतीति स० द० सं० बौद्धनयेऽभिहित इति ॥ ६९३ ॥

## सूर्य्यास्तन्यायः ॥ ६९४ ॥

यथा सूर्य्येऽस्तं गते सति जारचौरानूचानादयः स्वेष्टा-

नुसारेणाऽभिसरणपरस्वहरणसदाचरणादिसमयं बुध्यन्ते, एवं प्रकृतेऽपि ज्ञेयमिति । अयमपि तत्रैव बौद्धे ॥ ६९४ ॥

**परस्परविरोधे हि न प्रकारान्तरस्थितिः ।**
**नैकतापि विरुद्धानामुक्तिमात्रविरोधता ॥**
**इति न्यायः ॥ ६९५ ॥**

न च क्रमाक्रमाभ्यामन्यः प्रकारः समस्ति, परस्परविरोधेहीति न्यायेन व्याघातस्योद्भटत्वादिति तत्रैव बौद्धे ६९५॥

**यद्यदा यत्करणसमर्थं तत्तदा तत्करोतीति न्यायः ॥ ६९६ ॥**

यथा-"सामग्री स्वकार्य्यं समर्था" इति। सामग्री कारणसमूह इत्यर्थ इति तत्र बौद्धे ॥ ६९६ ॥

**यद्यदा यन्न करोति तत्तदा तत्राऽसमर्थमिति न्यायः ॥ ६९७॥**

यथा हि-शिलाशकलमंकुरे इति स० द० सं० बौद्धे ॥ ६९७ ॥

**आयातः प्रवाहः केन वार्य्यत इति न्यायः ॥ ६९८ ॥**

स्पष्टाभिप्रायोऽयम् । स० द० सं० आर्हते उक्तः ॥६९८॥

**मधुररसभाविताम्रबीजन्यायः ॥ ६९९ ॥**

यथा मधुररसभावितानामाम्रबीजानां परिकर्षितायां

---

१ घञन्तादितच् । कृष्टायामिति तु निर्विवादः ।

धरायामुप्तानामङ्कुरकाण्डस्कन्धशाखापल्लवादिषु तद्द्वारा परम्परया फले माधुर्य्यनियमः, तथा प्रकृतेऽपि ॥ ६९९ ॥

## लाक्षारसावसिक्तकार्प्पासबीजन्यायः ॥७००॥

यथा—लाक्षारसावसिक्तकार्प्पासबीजानामंकुरादिपारम्पर्य्येण कार्प्पासादौ रक्तिमनियम इति। यथोक्तम्—"यस्मिन्नेव हि संताने ह्याहिता कर्म्मवासना। फलं तत्रैव बध्नाति कार्पासे रक्तता यथा॥" इत्यादि स० द० सं० आर्हतनये ॥ ७०० ॥

## कार्य्यकारणभावनियमोऽतिप्रसङ्गं भङ्क्तुमर्हतीति न्यायः ॥ ७०१ ॥

अन्यस्योद्देशेऽन्यदीयस्याऽपि सहानुष्ठानमतिप्रसक्तस्तमिति स० द० सं० आर्हते ॥ ७०१ ॥

## कृतप्रणाशाऽकृताभ्यागमप्रसङ्ग इतिन्यायः ७०२

कृतस्य प्रणाशः कृतप्रणाश इति। अकृतयोः पुण्यपापयोरकस्मात्फलदातृत्वेनाभ्यागमः स्वीकार इति यावत्—अकृताभ्यागमस्तयोः प्रसङ्गः, अन्योद्देशेन प्रवृत्तावन्यस्यापि सिद्धिरित्यर्थः। अस्य लक्षणं यथा—'स्मृतत्वे सति ह्युपोद्घातादिपञ्चकभिन्नत्वं प्रसङ्गत्वम्', 'स्मृतस्योपेक्षानर्हत्वं प्रसंगत्वं' वा। तदर्थस्तु—स्मृतिविषयतापन्नत्वे सति द्वेषविषयतानापन्नत्वमित्यनुमितिग्रन्थे गदाधरभट्टाचार्य्य इत्यलं प्रसक्तानुप्रसक्तेन। सर्वदर्शनसंग्रहार्हतरामानुजनययोरयं न्यायो दोषरूपेण वर्णितः। तथाहि—न च कार्य्यकारण-

भावनियमोऽतिप्रसङ्गं भंक्तुमर्हतीति । तथाहि—उपध्याय-बुद्ध्यनुभूतस्य शिष्यबुद्धिः स्मरेत्तदुपचितकर्म्मफलमनुभवेद्वा । तथा च-कृतप्रणाशाऽकृताभ्यागमप्रसङ्ग इत्यार्हते । रामानुजीये तु—न च चिच्छब्दवाच्या जीवात्मानः परमात्मनः सकाशाद्भिन्ना नित्याश्च । तथा च श्रुतिः—“द्वा सुर्णा सयुजा सखायौ” इत्यादिका । अत एवोक्तम्—‘नानात्मानो व्यवस्थातः’ इति । तन्नित्यत्वमपि श्रुतिप्रसिद्धम्—“न जायते म्रियते वा विपश्चिन्नायं भूत्वा भविता वा न भूयः । अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे ॥” इत्यपरथा कृतप्रणाशाऽकृताभ्यागमप्रसङ्ग इति ॥ ७०२ ॥

## कुलालचक्रन्यायः ॥ ७०३ ॥

यथा हस्तदण्डादिभ्रमिप्रेरितं कुलालचक्रमुपरतेऽपि तस्मिँस्तद्बलादेवाऽऽसंस्कारक्षयं भ्रमति, तथा भवस्थेनाऽऽत्मनाऽपवर्ग्गप्राप्तये बहुशो यत्कृतं प्रणिधानं मुक्तस्य तदभावेपि पूर्वसंस्कारादालोकान्तं गमनमुपपद्यत इत्यार्हता आहुः ॥ ७०३ ॥

## व्यपगतलेपालाबून्यायः ॥ ७०४ ॥

यथा मृत्तिकालेपकृतमलाबूद्रव्यं जलेऽधः पतति, पुनरपेतमृत्तिकाबन्धमूर्द्ध्वं गच्छति, तथा कर्म्मरहित आत्माऽसंगत्वादूर्ध्वं गच्छतीत्यार्हताः ॥ ७०४ ॥

## एरण्डबीजन्यायः ॥ ७०५ ॥

यथा—बन्धच्छेदादेरण्डबीजवच्चोर्ध्वगतिरिति ॥ ७०५ ॥

## अग्निशिखान्यायः ॥ ७०६ ॥

यथा स्वभावतोऽग्निशिखोर्ध्वं गच्छति। माघकविनाप्युक्तम्—'प्रसिद्धमूर्द्ध्वज्वलनं हविर्भुजः' इति। तद्वदात्मापि चोर्द्ध्वं गच्छतीत्यार्हताः। एवं हि कुलालचक्रादयश्चत्वारो न्यायास्समानविषयास्सर्वदर्शनसंग्रहार्हतदर्शनेऽभिहिताः। तथाहि— कुलालचक्रवद्व्यपगतलेपालाबूवदेरण्डबीजवदग्निशिखावच्चेति। अत एव पठन्ति—"गत्वागत्वा निवर्त्तन्ते चन्द्रसूर्य्यादयो ग्रहाः। अद्यापि न निवर्त्तन्ते त्वालोकाकाशमागताः॥" इति॥ ७०६ ॥

## हेरम्बनरसिंहन्यायः ॥ ७०७ ॥

यथा—हेरम्बनरसिंहयोरेकदेशे गजत्वं सिंहत्वं वाऽपरस्मिन्नरत्वमिति देशभेदेन विरोधाभावात्तस्याऽऽर्हतस्यैकस्मिन्देश एव सत्त्वाऽसत्त्वादिनाऽनेकान्तत्वाभिधाने दृष्टान्ताऽनुपपत्तेरिति रामानुजीया इति॥ ७०७ ॥

## अप्राप्ते शास्त्रमर्थवदिति न्यायः ॥ ७०८ ॥

अयं स० द० सं० रामानुजीये। तथाहि—"आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इति, "आत्मेत्येवोपासीत," "विज्ञाय प्रज्ञां कुर्वीत," "अनुविद्यं विजानाति" इत्यादिश्रुतिभ्यः। अत्र श्रोतव्य इत्यनुवादः। अध्ययनविधिना सांगस्य स्वाध्यायस्य ग्रहणे अधीतवे-

दस्य पुरुषस्य प्रयोजनवदर्थदर्शनात्। तन्निर्णयाय स्वरस एव श्रवणे प्रवर्त्तमानतया तस्य प्राप्तत्वात्। मन्तव्य इति चानुवादः। श्रवणप्रतिष्ठार्थत्वेन मननस्यापि प्राप्तत्वात्। अप्राप्ते शास्त्रमर्थवदिति ॥ ७०८ ॥

## पिण्याकयाचनार्थं गतस्य खारिकातैल-दातृत्वाभ्युपगम इति न्यायः ॥ ७०९ ॥

"तिलकिट्टन्तु पिण्याकस्तथा तिलखलिः स्मृत।" इत्यभिधानम्। स्पष्टाभिप्रायकोऽयं न्यायः। स० द० सं० पूर्णप्रज्ञनय इति ॥ ७०९ ॥

## यो यं प्रति सेव्यस्स तस्माद्भिन्न इति न्यायः ॥ ७१० ॥

अयमपि तत्रैव। तत्र तथाहि-अनुमानेनापि जीवेश्वरयोर्भेदोऽवसीयते। परमेश्वरो जीवाद्भिन्नः, तम्प्रति सेव्यत्वात्। यो यं प्रति सेव्यस्स तस्माद्भिन्नः, यथा भृत्याद्राजा ॥७१०॥

## अनन्यलभ्यश्शास्त्रार्थ इति न्यायः ॥७११॥

शास्त्रस्वरूपमुक्तं स्कान्दे-"ऋग्यजुस्सामाथर्वा च भारतं पाञ्चरात्रकम्। मूलरामायणं चैव शास्त्रमित्यभिधीयते ॥ यच्चानुकूलमेतस्य तच्च शास्त्रं प्रकीर्तितम्। अतोऽन्यः शास्त्रविस्तारो नैव शास्त्रं कुवर्त्म तत्॥"इति। तदनेनाऽनन्यलभ्यः शास्त्राऽर्थ इति न्यायेन भेदस्य प्राप्तत्वेन तत्र न तात्पर्य्यम्, किन्त्वद्वैत एव वेदवाक्यानां तात्पर्य्यमिति स० द० सं० पूर्णप्रज्ञीय उक्तमिति ॥ ७११ ॥

## अनन्यलभ्यः शब्दार्थ इति न्यायः ॥७१२॥

स एव हि शब्दस्यार्थो यः प्रकारान्तरेण न लभ्यते। अनन्यलभ्यः शब्दार्थ इति न्यायाद्। अत एव गंगापदस्य तीरमर्थः। लक्षणयैव तत्प्रतिपत्तिसम्भवादित्युक्तं मीमासा-न्यायप्रकाशे ॥ ७१२ ॥

## कामाकुलकामिनीन्यायः ॥ ७१३ ॥

यथा– नायकगुणगणसंश्रवणप्रवृद्धाऽनुरागा काचन कामिनी मदनविह्वला विरहक्लेशमसहमाना मदनलेखाऽ-वलम्बनस्वावस्थानिवेदनानि विधत्ते। ततो वेगात्तन्निकट-मटत्यपि। तस्मिन्नवलोकितेऽपि, तदवलोकनं तदीयगुण-परामर्शाभावे जनसाधारणत्वं प्राप्ते हृदयंगमभावं न लभते। यदा तु मूर्त्तिवचनात्तदीयगुणपरामर्शं करोति, तदा तत्क्षणमेव पूर्णभावमत्येति। एवं स्वात्मनि विश्वेश्व-रात्मना भासमानेऽपि, तन्निर्भासनं तदीयगुणपरामर्शविर-हसमयं पूर्णभावं न सम्पादयति। यदा तु गुरुवचनादिना सर्वज्ञत्वसर्वकर्तृत्वादिलक्षणपरमेश्वरोत्कर्षपरामर्शो जायते, तदा तत्क्षणमेव पूर्णात्मतालाभ इति। स० द० सं० प्रत्य-भिज्ञादर्शने ध्वनितोऽयं न्यायः ॥ ७१३ ॥

## मूषकविषाणन्यायः ॥ ७१४ ॥

न हि कश्चित्प्रेक्षावान्मूषकविषाणं प्रतिषेद्धुं यतते॥७१४॥

## गगनारविन्दन्यायः ॥ ७१५ ॥

स्फुटार्थोऽयम् । द्वाविमौ न्यायावत्यन्ताभावदृष्टान्ते प्रवर्त्तेते । औलूक्ये स्पष्टौ ॥ ७१५ ॥

## यद्ग्रहे यदपेक्षं चक्षुस्तदभावग्रहे पि तदपेक्षत इति न्यायः ॥ ७१६ ॥

आलोकग्रहे आलोकापेक्षाया अभावेन तदभावग्रहेऽपि तदपेक्षाया अभावादिति । स०द०सं०औलूक्ये विस्तरः॥७१६॥

## कुलकन्यान्यायः ॥ ७१७ ॥

यथा कुलकन्यका सह सौंदर्य्यादिगुणैर्निजजनकहर्म्ये एव गौरवं प्राप्नोति । तथा च विवक्षायामयमवतरतीति । प्रोक्तं च रुद्रकविना—"सत्यं सन्ति गृहेगृहे सुकवयो येषां वचश्चातुरी स्वे हर्म्ये कुलकन्यकेव लभते जातैर्गुणैर्गौरवम् ॥" इति ॥ ७१७ ॥

## शशविषाणन्यायः ॥ ७१८ ॥

अयमप्यत्यन्ताभावविवक्षायामवतराति । तस्मादीश्वरो हि शशविषाणायत इति चेत्तदेतन्न चतुरचेतसां चेतसि चमत्कारमाविष्करोतीति स०द०सं० अक्षपादीये ॥ ७१८ ॥

## अर्थात्समर्थो विद्वानधिक्रियत इति न्यायः ॥ ७१९ ॥

अयं स०द०सं० जैमिनीये । तथाहि—"तस्मात्सामर्थ्यप्राप्तोऽवबोधो भाव्यत्वेनाऽवतिष्ठते—अर्थात्समर्थो विद्वानधिक्रियत इति न्यायेन दर्शपौर्णमासादिविषयाऽवबोधमवेक्षमाणास्तत्त्वबोधे स्वाध्यायं विनियुञ्जते" इत्यादि ॥७१९॥

## यत्रार्थावगतिरेव नास्ति तत्र संदेहस्य का कथेति न्यायः ॥ ७२० ॥

स्पष्टाभिप्रायकोऽयम् । स०द०सं०जैमिनीये स्पष्टः॥७२०॥

## मध्यासीनो घट इति न्यायः ॥ ७२१ ॥

यथा—समनस्केन्द्रियसन्निकृष्टः स्पष्टालोकमध्यमध्यासीनो घट इति न्याये विषयप्रयोजनयोरसम्भवेन विचारशास्त्रमनारभ्यमिति पूर्वपक्ष इति स०द०सं० जैमिनीये॥७२१॥

## तस्करस्य पुरस्तात्कक्षे स्वर्णमुपेत्य सर्वाङ्गोद्धाटनं प्रतिभातीति न्यायः ॥ ७२२ ॥

अयमपि—स०द०सं०जैमिनीये विस्तृतः । इह विस्तरभिया विरम्यते ॥ ७२२ ॥

## यश्चोभयोस्समो दोषो न तेनैकश्चोद्यो भवतीति न्यायः ॥ ७२३ ॥

वर्णानामेव वाचकत्वोपपत्तौ नातिरिक्तस्फोटकल्पनाऽवकल्प्यत इति स०द०सं० पाणिनीयेऽभिहितः ॥ ७२३ ॥

## पुष्करपलाशन्यायः ॥ ७२४ ॥

यथा—पद्मपत्रं जलेन लिप्तं न भवति, तत्समकक्षायामवतरत्ययम् । यथोक्तम्—'पद्मपत्रमिवाम्भसा' इति ॥७२४॥

## न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्म्मकृदिति न्यायः ॥ ७२५ ॥

अयं-श्रीमद्भगवद्गीतातृतीयाध्यायपञ्चमश्लोकपूर्वार्द्ध-रूपः स०द०सं०पातञ्जले न्यायत्वेन व्यवहृतः। अस्यार्थस्त्वे-वम्-अत्र लोके जातु कदाचिदपि कश्चिद्यो वा को वापि प्राणी क्षणं क्षणार्द्धमप्यकर्म्मकृत्किमपिकर्म्माऽकुर्वन्न तिष्ठ-ति। किन्तु सुषुप्तिं विना जाग्रत्स्वप्नयोः सर्व्वदा कायेन वा मनसा वा वाचा वा चक्षुरादिभिर्वा यत्किञ्चित्कर्म्म कुर्व्व-न्नेव तिष्ठति, न क्वचिदपि तूष्णीमित्यर्थः। इदं सर्व्वप्रत्य-क्षमिति। हिः प्रसिद्धिद्योतनार्थ इति ॥ ७२५ ॥

## घटीयन्त्रस्थितघटभ्रमणन्यायः ॥ ७२६ ॥

अयं न्यायः-स०द०सं० पातञ्जलदर्शनेऽभिहितः। तथा हि-श्वासप्रश्वासयोर्गतिविच्छेदः प्राणायाम इति। स च वायुः सूर्य्योदयमारभ्य सार्द्धघटिकाद्वयं घटीयन्त्रस्थितघट-भ्रमणन्यायेनैकैकस्यां नाड्यां भवति। एवं सत्यहर्निशं श्वासप्रश्वासयोः षट्छताधिकैकविंशतिसहस्राणि जायन्त इत्यन्यत्र विस्तरः ॥ ७२६ ॥

## आरघट्टघटीभ्रान्तिन्यायः ॥ ७२७ ॥

अयं न्यायः-पूर्व्वन्यायस्य स्वरूपान्तरात्मकः। अर्था-दिकं पूर्ववज्ज्ञेयम्। उक्तं चाभियुक्तैः-"सार्द्धं घटीद्वयं नाडीरेकैकार्कोदयाद्वहेत्। आरघट्टघटीभ्रान्तिन्यायो नाड्योः पुनःपुनः॥" इति स०द०सं० पातञ्जलेऽस्ति ॥ ७२७ ॥

## न हीश्वरव्याहृतयः कदाचित्पुष्णन्ति लोके विपरीतमर्थमिति न्यायः ॥ ७२८ ॥

अयं कालिदासकविना कमारसम्भवे व्यवहृतः स० ३ श्लो० ६३ ॥ ७२८ ॥

## वत्सक्षीरन्यायः ॥ ७२९ ॥

यथा वत्सविवृद्ध्यर्थमचेतनं क्षीरं प्रवर्त्तते, तथाऽचेतनापि प्रकृतिः पुरुषमोक्षणाय प्रवर्त्तत इति सांख्याः । उक्तं च—"वत्सविवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्य। पुरुषविमोक्षनिमित्तं तथा प्रवृत्तिः प्रधानस्य ॥" इति ॥ ७२९ ॥

## निर्विमर्शा हि भीरव इति न्यायः ॥ ७३० ॥

अस्यार्थः—भीरवो भयशीलाः पुमांसो निर्विमशा निर्विचारा भवन्तीति परिणामं न विचार्य्य कार्य्यं कुर्वंतीति भावः । अत्राऽऽख्यायिकाऽस्ति कथासरित्सागरे लावणकलम्बके—आसीत्पुरा कामन्दिका नाम नगरी गङ्गातटे । तत्र मठनिवासिमौनव्रतधारी परिव्राट् कश्चिद्भिक्षार्थं कस्यचिद्वणिजो गृहे गतः । तत्र दृष्ट्वाऽद्भुतां सरूपां वणिक्कन्या कामातुरो भूत्वा हाहा कष्टमित्युवाचोच्चैस्ततः स्वमठं गतः ततस्स वणिक्तस्य शठसंन्यासिनः समीपं गत्वा रहसि पप्रच्छ—स्वामिन्कुतो भवता मौनं त्यक्तमिति। तञ्च परिव्राडेवमब्रवीद्दुर्लक्षणेयं ते कन्या, यदाऽस्याः परिणयो भविष्यति तदा ससुतदारस्य ते क्षयो भविष्यतीति निश्चितमिति तां वीक्ष्य मे जातं दुःखम्, यतस्त्वं मे भक्तोऽसीत्यतो मया मौनं त्यक्त्वा हाहा कष्टमित्युक्तम्। त्वमिदानीमिमां कन्यां नक्तः सुपरिन्यस्तदीपायां मंजूषायां निवेश्य गंगायां प्रक्षिपेति ।

स तथाऽस्त्विति प्रतिज्ञाय तथैव सर्वं चक्रे। अत एवोक्तं निर्विमर्शा हि भीरव इति ॥ ७३० ॥

अभीष्टस्त्रीवियोगार्त्या सविवेकोऽपि बाध्यत इति न्यायः ॥ ७३१ ॥

यथा—वासवदत्तादिविरहपीडया वत्सराजादयो दृष्टान्तभूताः। स्पष्टाभिप्रायोऽयमिति ॥ ७३१ ॥

कर्त्तव्यं हि सतां वच इति न्यायः ॥ ७३२ ॥

स्पष्टार्थः ॥ ७३२ ॥

प्रभूणां हि विभूत्यंधा धावत्यविषये मतिरिति न्यायः ॥ ७३३ ॥

अयमहल्येन्द्रप्रस्तावे दृष्टान्तभूत इति ॥ ७३३ ॥

अशीलं कस्य नाम स्यान्न खलीकारकारणमिति न्यायः ॥ ७३४ ॥

अशीलं दुष्टस्वभावः। नाम—प्रसिद्धे। कस्य खलीकारकारणमपमानहेतुर्न भवति, अपि तु सर्वस्यैव भवतीति भावः। 'खलीकारोऽपकारे स्यात्' इति कोशः ॥ ७३४ ॥

कुकर्म सर्वस्य फलत्यात्मनि सर्वदेति न्यायः ॥ ७३५ ॥

स्पष्टार्थः ॥ ७३५ ॥

यो यद्वपति बीजं हि लभते सोऽपि तत्फलमिति न्यायः ॥ ७३६ ॥

स्पष्टः ॥ ७३६ ॥

## मालतीपुष्पमश्मना हन्तुमीहत इति न्यायः ॥ ७३७ ॥

मालतीति पुष्पविशेषस्य नाम । तामश्मना पाषाणेन हन्तुमीहते यतत इति भावः । अयोग्यसम्मेलनेऽस्य प्रचार इति ॥ ७३७ ॥

## कदर्य्याणां परे प्राणाः प्रायेणाऽर्थसञ्चया इति न्यायः ॥ ७३८ ॥

कदर्य्यलक्षणम्—"आत्मानं धर्म्मकृत्यञ्च पुत्रदाराश्च पीडयन् । यो लोभात्सञ्चिनोत्यर्थान्स कदर्य्य इति स्मृतः॥" इति । स्पष्टार्थः ॥ ७३८ ॥

## विषयाऽऽकृष्यमाणा हि तिष्ठन्ति सुपथे कथमिति न्यायः ॥ ७३९ ॥

स्पष्टार्थः ॥ ७३९ ॥

## भद्रमभद्रं वा कृतमात्मनि प्रकल्पत इति न्यायः ॥ ७४० ॥

स्पष्टः ॥ ७४० ॥

## स्वभावो मूर्ध्नि वर्त्तत इति न्यायः ॥७४१॥

स्पष्टः । अभीष्टेत्यादिन्यायद्वादशकं कथासरित्सागरे स्पष्टमिति ॥ ७४१ ॥

## मूढं मूढभाषयैव बोधयेदिति न्यायः ॥७४२॥

स्पष्टार्थोयं महाभारतसभापर्वशिशुपालोपाख्यानेऽष्टात्रिं-

शा ३८ ध्यायसप्तम ७ श्लोकटीकायाम् । तत्र—मूढं मूढभाषयैव बोधयेदिति न्यायेन शिशुपालमतमनुसत्यैव कृष्णस्याधिक्यमाह द्वाभ्याम्—क्षत्रिय इति । "क्षत्रियः क्षत्रियं जित्वा रणे रणकृतां वरः । यो मुञ्चति वशे कृत्वा गुरुर्भवति तस्य सः ॥" इति ॥ ७४२ ॥

## जले तरंगबुद्बुदन्यायः ॥ ७४३ ॥

अयमप्येवम् ४० अ १४ श्लोकटीकायाम् । तत्र हि—कुतः कृष्णोऽन्येषां तेजांस्यादत्ते, न तु तानि पृथक्तिष्ठन्तीत्यत आह—"चतुर्विधानां भूतानां त्रिषु लोकेषु माधवः । प्रभवश्चैव सर्वेषां निधनं च युधिष्ठिर॥" इति । टी०-चेतनाचेतनप्रपञ्चस्य जले तरंगबुद्बुदन्यायेन तत्रैवोत्पत्तिप्रलययोःश्रवणादेष योनिस्सर्वस्य प्रभवाप्ययौ हि भूतानामिति तदन्यत्वात्सर्वस्येति भाव इत्युक्तमिति । अस्य न्यायस्य पूर्वोक्तजलतरंगन्यायापेक्षया किञ्चिद्वैलक्षण्यमस्तीति बोध्यम् ७४३

## आनर्थक्यप्रतिहतानां विपरीतं बलाबलमिति न्यायः ॥ ७४४ ॥

अयमप्येवम् ४१ अ० १ श्लो०टी० । तत्रेत्थम्—ननु बिभीषिकाभिर्बह्वीभिरित्यादिग्रन्थो भगवन्निन्दापरत्वान्न भूतार्थवादः, किन्तु ध्यानमात्रं ध्येयसारूप्यप्रापकम् । तच्च द्वेषेणापि कर्त्तव्यमित्यतिशयोक्तिमात्रं ध्यानविधेस्तावकम् । अन्यथा भगवन्निन्दाकृतां वेनादीनां भगवन्निन्दया वेनो द्विजैस्तमसि पातित इत्यादिदोषस्मरणमनुपपन्नं स्यात्

बृहदारण्यकपञ्चमे च–ब्रह्मविदं याज्ञवल्क्यं द्विषतः शाकल्यस्य सद्यो मृत्युरुक्तोऽन्यथां च संस्कारालाभेन दुर्गतिश्च सूचिता । साक्षाद्ब्रह्मद्विषस्तु ततोऽप्यधिकं दुःखं वक्तव्यं स्यात् । अत्र च द्विषतोऽपि शिशुपालस्याऽपराधशतं क्षान्त्वा तस्मै भगवता सायुज्यं दत्तमित्युच्यते । तस्मान्निन्दाग्रन्थः प्रकरणाऽसंगतेर्भगवत्यसमवेतत्वाच्चाभूतार्थवाद एव । तथा हि–त्रिविधोऽर्थवाद इत्यादिग्रन्थेन त्रिविधार्थवादलक्षणोदाहरणाद्युक्त्वेति चेन्न, तद्वत्कृत्स्नस्यापि भारतस्य तथात्वापत्तेः, अनन्यगतिप्रकरणबाधापत्तेश्च । आनर्थक्यप्रतिहतानां विपरीतं बलाबलमिति न्यायेनाकाशादिश्रुतिवन्निंदाश्रुतिरपि गौण्या वृत्त्या ब्रह्मपरतया नेयेति युक्तमुत्पश्याम इत्याद्युक्तमिति ॥ ७४४ ॥

## सैन्धवोदकन्यायः ॥ ७४५ ॥

सैन्धवलक्षणम्–यथा सैन्धवखिल्य उदके प्रास्त उदकमेवानुविलीयते, एवं प्रकृतेऽपि । न्यायोऽयं म० भा० व० प० अ० ३१३, श्लो० ८६ टी० । तत्र हि–"युधिष्ठिर उवाच । "सन्तो दिग्जालमाकाशं गौरन्नं प्रार्थनाविषम् । श्राद्धस्य ब्राह्मणः कालः कथं वा यक्ष मन्यसे ॥" इति पद्यं बहुशो विवृत्य–ननु व्यावर्त्तक उपाधिभेदे जाग्रति सति कथमनयोरभेदस्स्यादत आह--गौरन्नमिति । गच्छतीति गौरिन्द्रियम्, तद्ग्राह्यं शब्दाद्यर्थजातं वा । तदन्नमदनीयं प्रविलापनीयं सैन्धवोदकन्यायेन यथा सैन्धवखिल्य उदके प्रास्त उदकमेवानुविलीयते । अत्र हि "एते सर्व एकं भवति"

इत्यादिश्रुतिभ्य उपाध्योर्मिथ्यात्वादेव रज्जूरगवत्प्रविलय-स्सुखसाध्य इत्यर्थ इत्युक्तम् ॥ ७४५ ॥

## गुणोपसंहारन्यायः ॥ ७४६ ॥

उपसंहारो नाम सामान्यप्राप्तस्य विशेषे नियमनम् । यथाहुः-"सामान्यविधिरस्पष्टः संह्रियेत विशेषतः" इति । अयं म०भा०उ०प०अ० ४२ श्लो० १ टी० । तत्रेत्थम्-सनत्सुजातीये भाष्यकारादिभिर्व्याख्यातान्सम्प्रतितनपुस्तकेषु च स्थितान्पाठाञ्छ्लोकाँश्च, गुणोपसंहारन्यायेनैकीकृत्य व्याख्यायत इत्युक्त इति । छान्दोग्ये समानप्रकरणे-"गुणोपसंहारन्यायेनोपास्यब्रह्मण उदाहृतमन्त्रवर्णादिसिद्धिविग्रहसिद्धिवत्कारेण" इत्यादिनोक्तम् ॥ ७४६ ॥

## शुकनलिकान्यायः ॥ ७४७ ॥

अयम्-म०भा०उ०प० ९६ अ० "काकुदीकं शुकं नाकमक्षिसन्तर्ज्जनं तथा । सन्तानं नर्त्तकं घोरमास्यमोदकमष्टमम्॥" इति ४२ श्लोकटीकायामभिहितः । तथाहि-काकुदीकमित्यादयोऽष्टावस्त्रजातयः । येनाऽस्त्रेणाभिभूता रथगजादीनां ककुद्येव शेरते, तत्काकुदीकं प्रस्वापकं नाम । येन शुकनलिकान्यायेनाभयेऽपि भयदर्शिनो हयरथादिपादेषु गाढं श्लिष्यन्ति तच्छुकं मोहनं नामेत्यादि ॥ ७४७ ॥

## शृङ्गग्राहिकान्यायः ॥ ७४८ ॥

शृङ्गस्य ग्रहणं यस्यां क्रियायां सा शृङ्गग्राहिका । "सञ्ज्ञायाम्" ३ । ३ । १९ । इति सूत्रेण ण्वुल् । यत्रैकांग-

लक्षणेनैवांगी लक्ष्यते, तत्रायं प्रवर्त्तते। यथा–गोव्रजे का मदीया गौरिति गोपः पृष्टः, शृंगं गृहीत्वा गां प्रदर्शयति, इयन्ते गौरिति। यथा च महाभा० उ०प० ४५ अ०९ श्लो० टी०दमविरोधिन एव प्रातिकूल्यादयो मददोषत्वेन सूचिता अपि शृंगग्राहिकया प्रकर्षेण विधिमुखेन न प्रोक्ता इत्यर्थ इत्युक्तम् ॥ ७४८ ॥

## विक्रीते करिणि किमंकुशे विवाद इति न्यायः ॥ ७४९ ॥

अयं श्लोकाभ्यां निबद्धः। यथा–"सौमित्रिर्वदति विभीषणाय लङ्कां देहि त्वं भुवनपते विनैव कोशम्। सौमित्रिम्प्रति निजगाद रामचन्द्रो विक्रीते करिणि किमंकुशे विवादः॥" इति। "नारब्धं कुचपरिरम्भणेषु वाम्यं वैमत्यं विरचाति चुम्बने कदापि। किं नीवीगतमबले रुणत्सि पाणिं विक्रीते करिणि किमंकुशे विवादः॥" इति ॥ ७४९ ॥

## वैद्ये मित्रे निरन्तरा कथेति न्यायः॥ ७५० ॥

स्पष्टः ॥ ७५० ॥

## मक्षिकास्थाने मक्षिकापात इति न्यायः॥७५१॥

अयं यादृशो तादृशकरणविषये प्रवर्त्तते। स्पष्टः ॥७५१॥

## प्रथमग्रासे मक्षिकापात इति न्यायः ॥७५२॥

अयम्–कर्म्मप्रारंभ एव विघ्नसम्भवेऽवतरतीति७५२॥

## क्षते मक्षिकापात इति न्यायः ॥ ७५३ ॥

अयं पिशनकृते कर्म्मणि छिद्रान्वेषणेऽपि प्रवर्त्तते।

स्पष्टः । वैद्ये इत्यादिचत्वारो न्याया लौकिकगाथा-रूपाः ॥ ७५३ ॥

## न ह्येकमेव सविशेषं निर्विशेषं च भवतीति न्यायः ॥ ७५४ ॥

अयं न्यायोऽद्वैतकौस्तुभेऽभिहितः। तत्र हि—"सत्यकामः सत्यसंकल्पः अस्थूलमनण्वह्रस्वम्" इत्याद्युभयविधश्रुतिसम्भवादुभयलिंगं ब्रह्मेति प्राप्ते, अभिधीयते । नोभयलिंगं ब्रह्म, एकस्य वस्तुनो द्वैरूप्यायोगात् । न ह्येकमेव सविशेषं निर्विशेषं च भवतीति युक्त्येत्युक्तमिति । विस्तरस्तु ततोऽवसेयः । विस्तरभयान्नेह प्रपञ्चितमिति ॥ ७५४॥

## अचिन्त्याः खलु ये भावा न तांस्तर्केण साधयेदिति न्यायः[१] ॥ ७५५ ॥

अस्यार्थः—ये भावा जगज्जन्मोपादाननिमित्तपरिमाणधर्म्माऽधर्म्मादयः पदार्थाश्चिन्तयितुमयोग्यास्तान्न तर्केण साधयेदिति । न हि ते तर्केण साधयितुं शक्यन्ते, तर्कान्तरेण तेषां बाधसम्भवात्—

## तर्काऽप्रतिष्ठानाच्चेति न्यायाच्च ॥ ७५६ ॥

अत एवा[२]स्य न्यायस्योत्तरार्द्धमन्यत्र पठन्ति—"नाऽप्रतिष्ठिततर्केण गम्भीरार्थस्य निश्चयः" इति । यथा हि—पुराणेषु पञ्चाशत्कोटियोजनभूगोलपरिमाणमित्यादि यदु-

---

१ प्रकृते हेतुभूतोऽप्ययं संख्येयकोटिप्रविष्टः । २ अचिन्त्या इत्यादेः ।

क्तम्, तत्प्रकृतन्यायेन समाधेयमिति सम्भवाऽसम्भवमी-
मांसायां बोध्यमिति म० भा० भी० प० अ० ५ श्लो० १२
टीकेति ॥ ७५५ ॥ ७५६ ॥

## पात्राऽपात्रविचारस्तु धेनुपन्नगयोरिवेति न्यायः ॥ ७५७ ॥

यथा—"तृणात्सञ्जायते क्षीरं क्षीरात्सञ्जायते विषम्"
इति । गावस्तृणं खादन्ति क्षीरं ददति । सर्प्पाश्च क्षीरं
पिबन्ति विषं ददत्येवं ज्ञात्वा पात्राऽपात्रविचारः कर्त्तव्य
इति भावः ॥ ७५७ ॥

## न हि कल्याणकृत्कश्चिद्दुर्गतिं तात गच्छतीति न्यायः ॥ ७५८ ॥

अयम्—भगवद्गीताषष्ठाध्यायचत्वारिंश ४० च्छ्लोकोत्तरार्द्ध
रूपः । अस्यार्थस्तु—न हि कल्याणकृच्छुभकृत्कश्चित्पुरुषो-
दुर्गतिं गच्छति, किन्तु सद्गतिमेव गच्छाति । तथा
च श्रुतिः—"तद्य इह रमणीयचरणाअभ्यासोहयत्ते रमणीया
योनिमापद्येरन्ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वै-
श्ययोनिं वा" इति । "अतिकल्याणरूपत्वान्नित्यं
कल्याणसंश्रयात् । स्मर्त्तॄणां वरदत्वाच्च ब्रह्म तन्मंगलं
परम् ॥" इति । 'मंगलानां च मंगलम्' इति । 'पवित्रं
मंगलं परम्' इति । परब्रह्मणो मंगलस्वरूपत्वस्मरणा-
त्कल्याणं मंगलस्वरूपं ब्रह्म करोति स्वात्मना साक्षाद्वि-
जानातीति कल्याणकृद्ब्रह्मवित्कश्चिद्ब्राह्मणो वा क्षत्रियो वाऽ-

न्यो वा योगभ्रंशं प्राप्य दुर्ग्गतिं निरयं न गच्छति। जडभरतादौ प्रसिद्धमिति प्रसिद्धिद्योतनार्थो हिशब्द-इति ॥ ७५८ ॥

## भूयस्त्वात्तद्वाद इति न्यायः ॥ ७५९ ॥

यत्रेतरवस्तुसत्त्वेऽपि यस्य वस्तुनो बाहुल्यं तेनैव लोक-प्रवाद इत्यर्थेऽयं प्रवर्त्तते। स्पष्टः ॥ ७५९ ॥

## न हि सार्वभौमानन्दमनुभवन्राजा ग्रामा-धिपतिसुखं तुच्छमपेक्षत इति न्यायः ७६० ॥

अयमधिकसुखसत्त्वेऽल्पसुखत्यागविवक्षायामवतरतीति-तथा ह्युक्तमेवं मुमुक्षुरखण्डैकरसपरमानन्दमनुभवन्नान्य। त्तुच्छसुखमपेक्षत इति तत्त्वाऽनुसन्धानटीकायामिति ७६०

## चक्रनाभिन्यायः ॥ ७६१ ॥

अयम्—म० भा०शां०प०मो० प० याज्ञवल्क्यजनकसंवादे अ० ११८ श्लो० १ टीकायाम्। यथा—" अव्यक्तस्थं परं यत्तत्पृष्टस्तेऽहं नराधिप। परं गुह्यमिमं प्रश्नं शृणुष्वावहितो नृप॥" अव्यक्तस्थमिति। अत्राऽव्यक्तमव्याकृतमायाशवलं हार्दाकाश इति पर्य्यायास्त्रिगुणात्मकस्य कारणस्य ब्रह्मणो वाचकाः। चक्रे नाभिरिव श्रितेति प्रयोगदर्शनात्तत्र विशिष्टे निष्कृष्टं चक्रनाभिन्यायेन श्रितं वस्तु, अव्यक्तस्थं किमव्यक्तं परं ब्रह्म तस्माच्च परतस्तु किमिति पृष्टस्ते त्वयाऽहमिति ॥ ७६१ ॥

## शल्यकवानाखुन्यायः ॥ ७६२ ॥

अयम्–म० भा०शां० प० अ० ८८ श्लो० ६ टीकायाम्। "यथा शल्यकवानाखुः पदं धूनयते सदा । अतीक्ष्णेनाभ्युपायेन तथा राष्ट्रं समापिबेत्॥" इति । शल्यकवाँस्तीक्ष्णतुण्ड आखुविशेषः । स हि निद्रितस्य मनुष्यस्य पादतलस्थं मांसमतीक्ष्णेनैवोपायेन भक्षयति । शयानस्त्वीषद्वेदनया पदं किं चिद्धूनयते कम्पयते, न तु तीव्रवेदनया प्रबुध्यन्नाखुं निवारयति । तद्वद्राष्ट्रं समापिबेदित्युक्तम्। शलतीति शल्यम् । "शलगतौ" "वा पुंसि शल्यं शंकुर्ना", इत्यमरः । द्वे बाणाग्रस्य नामनी । शल्य एव शल्यकः । तद्वान् । "उन्दुरुर्मूषकोप्याखुः" इत्यमर इति ॥ ७६२ ॥

## जलमौक्तिकन्यायः ॥ ७६३ ॥

अयम्–देशकालपात्रश्रद्धाविशेषादल्पमपि महत्तमत्वं जलमौक्तिकन्यायेन प्राप्नोतीति दर्शनादिति म० भा० अनु० प० १२ अ० ९ श्लो० टीकायामुक्त इति ॥ ७६३ ॥

## श्मशानवैराग्यन्यायः ॥ ७६४ ॥

अयमपि–म० भा० अश्व० प० अ० १३ श्लो० १३ टीकायामुक्तः । तत्रेत्थम्–द्वितीये 'यो माम्'–इति श्लोके प्रहरणे मनसि श्मशानवैराग्यन्यायेन जितो मया काम इति निश्चित्य प्रयतते संन्यासादिकं करोति, तस्य मनस्येव पुनरहं प्रादुर्भवामि । यदाहुरभियुक्ताः–"प्रमादिनो बहिश्चित्ताः पिशुनाः कलहोत्सुकाः । संन्यासिनोऽपि दृश्यन्ते

देवसन्दूषिताशयाः ॥" इति । अन्यत्रापि–"श्मशानान्ते पुराणान्ते मैथनान्ते च या मतिः । सा मतिस्सर्वदा चे्त्स्या नरो नारायणो भवेत् ॥" इति ॥ ७६४ ॥

## संशयात्मा विनश्यतीति न्यायः ॥ ७६५ ॥

स्पष्टः ॥ ७६५ ॥

## यच्च स्तूयते तद्विधीयत इति न्यायः ॥७६६॥

अनेनाध्ययनवदर्थज्ञानस्यापि विधिरभ्युपगन्तव्य इत्युक्तं म० भा० उपोद्घाते ॥ ७६६ ॥

## ऊर्णनाभिन्यायः ॥ ७६७ ॥

ऊर्णनाभिस्तन्तुसर्ज्जने प्रसिद्धः कीटविशेषः । 'मकरी' इति देशभाषायां प्रसिद्धः । ऊर्णनाभ इति पाठोऽपि । "लूता स्त्री तन्तुवायोर्णनाभमर्कटकाः समाः ॥" इत्यमरः । ऊर्णेव तन्तुर्नाभौ यस्य स ऊर्णनाभः, ऊर्णनाभिर्वा "ऊर्णा मेषादिलोम्नि स्यात्" इत्यमरः । "अच् प्रत्यन्ववपूर्वात्सामलोम्नः" ५ । ४ । ७५ इति सूत्रे अजिति योगविभागमूलकत्वेनाच्प्रत्ययविकल्पः । "ङ्यापोः संज्ञाछन्दसोर्बहुलम्" ६ । ३ । ६३ इत्यूर्णाशब्दस्य ह्रस्वः । यथोर्णनाभिः स्वत ऊर्णां सजति, संहरति च, एवं जगदीश्वरोऽपि सृजति, संहरति च । "यथोर्णनाभिः सृजते गृह्यते च स यथोर्णनाभिस्तन्तुनोच्चरेत्, यथाऽग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्ति, एवमेवास्मादात्मनो हि सर्व्वे प्राणाः सर्व्वे लोकास्सर्वे देवास्सर्वाणि भूतानि व्युच्चरन्ति" इत्यादिश्रुतेः । अयं

१ चेत्स्यादिति पाठः साधीयान्प्रतिभाति ।

न्याय एकस्यैव ब्रह्मणोऽभिन्नोपादानत्वे कर्तृत्वे च दृष्टान्तरूप इति बृहदारण्ये शारीरकसूत्र १।२।२१। भाष्ये, अद्वैतकौस्तुभादिषु च स्पष्टः ॥ ७६७ ॥

## पृथिव्योषधिन्यायः ॥ ७६८ ॥

यथा पृथिव्यामोषधयस्संभवन्तीति, तथाऽप्रकृतेपि ७६८

## पुरुषकेशलोमन्यायः ॥ ७६९ ॥

यथा पुरुषात्केशलोमानि सम्भवन्ति, तथाऽक्षरात्सम्भवतीह विश्वमिति। शारीरकभाष्येऽभिहितं न्यायद्वयमिदमिति ॥ ७६९ ॥

## न हि स्वल्पो दोषोऽमितगुणाभिभावक इति न्यायः ॥ ७७० ॥

स्पष्टार्थोऽयमिति ॥ ७७० ॥

## शाम्येत्प्रत्यपकारेण नोपकारेण दुर्ज्जन इति न्यायः ॥ ७७१ ॥

स्पष्टार्थोऽयमिति ॥ ७७१ ॥

## प्रायेण सामग्र्यविधौ गुणानां पराङ्मुखी विश्वसृजः प्रवृत्तिरिति न्यायः ॥ ७७२ ॥

स्पष्टः। एते त्रयो न्यायाः कविकालिदासोक्तिरूपाः७७२

## अर्द्धकुक्कुटीन्यायः ॥ ७७३ ॥

यथा-कुक्कुट्या एको भागः पाकायाऽपरोभागः प्रसवाय कल्प्यतामिति चिन्तया तथा कर्त्तुं कामयते सौनकः, वस्तुतस्तथा न सम्भवति, एवंविधविषयेऽस्य प्रवृत्तिरिति७७३॥

## पूतिकूष्माण्डन्यायः ॥ ७७४ ॥

अयं स० द० सं० जैमिनीये। पूतिशब्दोऽत्र दुर्गन्धिवाचकः, यथा—पूतिगन्धिरित्यत्र। शेषं स्पष्टम् ॥ ७७४ ॥

## वज्रलेपन्यायः ॥ ७७५ ॥

अयम्—वस्तुनः सुदृढसुस्थिरत्वविवक्षायां प्रवर्त्तते। इमावपि तत्रैवेति ॥ ७७५ ॥

## अलमुन्मत्तवचसि काव्यदूषणोद्भावनेनेति न्यायः ॥ ७७६ ॥

यत्र विक्षेपबहुलं धावनमेव पुरुषार्थं मन्यमाना बालैरप्युपहसनीयास्तत्र स्पष्टाभिप्रायोयमिति ॥ ७७६ ॥

## भूतं भव्याय कल्पत इति न्यायः ॥७७७॥

स्पष्टार्थः ॥ ७७७ ॥

## किमज्ञानस्य दुष्कर इति न्यायः ॥७७८॥

स्पष्टार्थोऽयमिति ॥ ७७८ ॥

## गुर्वपि विरहदुःखमाशाबन्धस्साहयतीति न्यायः ॥ ७७९ ॥

अयमभिज्ञानशाकुन्तले चतुर्थाङ्के उक्तः। तथाहि—"एसा वि पिएण विणा गमेइ रअणिं विसाअदीहअरम्। गरु अपि विरहदुक्खं आसाबन्धो सहावेदि ॥" इति प्राकृतगाथा। अस्याः संस्कृतं यथा—"एषापि प्रियेण विना गमयतिरजनीं विषाददीर्घतराम्। गुर्वपि विरहदुःखमाशाबन्धः साहयति ॥" इति ॥ ७७९ ॥

## न खलु धीमतां कश्चिदविषयो नामेति न्यायः ॥ ७८० ॥

अयमपि तत्रैवोक्तः। स्पष्टः ॥ ७८० ॥

## आमोदषट्पदन्यायः ॥ ७८१ ॥

अयञ्च पद्येनोपनिबन्धोऽनर्घराघवनाटके। तथाहि-
"आकारैणैव चतुरास्तर्कयन्ति परेङ्गितम्। गर्भस्थं केतकी-पुष्पमामोदेनैव षट्पदाः॥" इति ॥ ७८१ ॥

## उपसर्गन्यायः ॥ ७८२ ॥

यत्रैकवस्तुन उपाधिभेदेन नानात्वविवक्षा,तत्राऽयं प्रवर्त्तते उपसर्ज्जनमुपसृज्यते वा। "सृज विसर्गे"। घञ् प्रत्ययः—उपसर्गः। "उपसर्गाः क्रियायोगे" १।४।५९ इति पाणिनिसूत्रेण प्रादीनामुपसर्गसंज्ञा क्रियते। प्रादयश्च—प्र,परा,अप, सम्, अनु, अव, निस्, निर्, दुस्, दूर्, वि,आङ्, नि, अधि, अपि, अति, सु, उत्, अभि, प्रति, परि, उप एते द्वाविंशतिसंख्याका उपसर्गपदवाच्याः। यथैक एवोपसर्गो नानाक्रियायोगरूपोपाधिभेदेन नानार्थतां भजति। तद्यथा—प्र १ इति "प्रयोगे वियोगे भृशार्थे च तृप्तौ तथा शुद्धिशक्त्यग्रपूजासु शान्तौ। वदन्त्यादिकर्म्मण्युदीर्णे प्र सन्तस्तथा सम्भवैश्वर्य्यदृष्टाभिलाषे॥ १॥ प्रसिद्धे प्रयाणे तथा प्रीणनेपि" इत्यष्टादशस्वर्थेषु वर्त्तते। तथाहि क्रमेण—प्रयुनक्ति, प्रयुङ्क्ते,प्रयुज्यते, प्रयोगे १। वियोगे यथा-प्रोषति, प्रोषितः, प्रेषति, प्रेषितः २। भृशार्थे यथा-प्रवदन्ति दायादाः,

प्रवादः ३ । तृतौ यथा–प्रभुक्तमन्नम् ४ । शुद्धौ यथा–प्रसन्नमुदकम् ५ । शक्तौ यथा–प्रशक्तो विद्यायाम् ६ । अग्रे यथा–प्रवालो वृक्षस्य ७ । अग्रपूजायां यथा–प्राञ्जलिः स्थितः ८ । सुशान्तौ यथा–प्रशान्तो वह्निः ९ । आदिकर्म्मणि यथा–प्रारब्धम् १०। उदीर्णे यथा–प्रबलो राजा ११। सम्भवे यथा–हिमवतो गङ्गा प्रभवति १२ । ऐश्वर्य्ये यथा–प्रभुर्देवदत्तः १३ । दृष्टे यथा–प्रलोकयति १४ । अभिलाषे यथा–प्रार्थयते कन्याम् १५ । प्रसिद्धः १६ । प्रयातः १७ । प्रतुष्यति १८ ॥ १ ॥ "परा वधे गतौ घर्षे ह्याभिमुख्यभृशार्थयोः । अप्रधाने विमोक्षे स्याद्विक्रमप्रातिलोम्ययोः ॥" ॥ २ ॥ परा इत्युपसर्गो नव ९ स्वर्थेषु । वधे–पराहतः १ । गतौ–पलायते २ । घर्षे–परामृष्टः ३ । आभिमुख्ये–परावृत्तः ४ । भृशार्थे–पराजितः ५ । अप्रधाने–पराधीनः ६ । विमोक्षे–पराकृतः ७ । विक्रमे–पराक्रान्तः ८ । प्रातिलोम्ये पराङ्मुखः ९ ॥२॥ "वियोगे वर्ज्जने चौर्य्ये हर्षे निर्द्देशवारणे । विपर्य्ययविकृत्योश्च ह्यप इत्ययमुच्यते॥" ॥३॥ अप इत्युपसर्गोऽष्टस्वर्थेषु । वियोगे–अपयान्ति १ । वर्ज्जने–अपसाकेताद्वृष्टो देवः २। चौर्य्ये–अपहरति धनम् ३। हर्षे–अपहसन्ति ४। निर्द्देशे अपदिशति ५ । वारणे–अपसरति पापात् ६ । विपर्य्यये–अपशब्दः ७ । विकृतौ–अपकृतमिति ८ ॥ ३ ॥ "सिद्धौ समक्षे प्रभवैक्ययोगसमन्ततोभावविभूषणेषु । श्लेषाभिमुख्ये च वियोगसत्ये वदन्ति सं स्वीकरणे च कोपे॥" ॥४॥ समित्युपसर्गस्त्रयोदशस्वर्थेषु । सिद्धौ–सं-

सिद्धिः १ । समक्षे–संकथा वर्त्तते २ । प्रभवे–सम्भवत्यग्निः काष्ठे ३ । ऐक्ये–संवदन्ति मुख्याः ४ । योगे–सङ्गच्छते ५ । समन्ततोभावे–संकीर्णः ६ । विभूषणे–संस्क्रियते कन्या ७ । श्लेषे–संधत्ते कार्य्यम् ८ । आभिमुख्ये–सम्मुखम् ९ । वियोगे–संविभक्तः १० । सत्ये–सम्मतः ११ । स्वीकरणे–संगृह्णाति १२ । कोपे–संक्रुद्धः १३ ॥ ४ ॥ "पश्चाद्भावे लक्षणे चाभिमुख्ये सामीप्याधिष्ठानसादृश्यहीने । स्वाध्यायेऽपि प्रोक्त एवानुबन्धे पूर्वाचार्य्यैरन्वयं वै विसर्गे ॥" ॥५॥ अनु इत्युपसर्गो दशस्वर्थेषु वर्त्तत इति । पश्चाद्भावे–अनुबन्धः, अनुयायी १ । लक्षणे–जपमनु प्रावर्षत्, वृक्षमनु विद्योतते विद्युत् २ । आभिमुख्ये–अनु मातरं धावति बालः ३ । सामीप्ये–अनुगिरम्–गिरेः समीपमित्यर्थः । सामीप्येऽव्ययीभावः । "गिरेश्च सेनकस्य" ५ । ४ । ११२ । इति समासान्तष्टच् ४ । अधिष्ठाने–अनुशोणं पाटलिपुत्रः ५ । सादृश्ये–अनुकृतिः ६ । हीने–अनु हरिं सुराः, हरेर्हीना इत्यर्थः । "हीने" १ । ४ । ८६ । इति कर्म्मप्रवचनीयसंज्ञा । "कर्म्मप्रवचनीययुक्ते द्वितीया" २ । ३ । ८ । इति द्वितीया ७ । स्वाध्याये–अनुवाक्यमधीते ८ । अनुबन्धे–अनुशयः । "दीर्घद्वेषानुतापयोः" इत्यमरः । "दोषोत्पादेऽनुबन्धस्स्यात्" इति च ९ । विसर्गे–अनुक्रान्तो गच्छति १० ॥ ५ ॥ "व्याप्तिशुद्धिवियोगेषु विज्ञाने चावलम्बने । बुधैः परिभवे प्रोक्त ईषदर्थेऽप्यवः स्फुटम् ॥" ॥ ६ ॥ अव इत्युपसर्गः सप्तस्वर्थेषु वर्त्तते । व्याप्तौ यथा–अवकीर्णः १ । शुद्धौ–अवदातं

मुखम् २। वियोगे–अवमुक्ता कान्ता ३। विज्ञाने–अवगतोऽर्थः ४। अवलम्बने–दण्डमवष्टभ्यास्ते ५। परिभवे–अवहसति ६। ईषदर्थे–अवलम्बनम् ७॥ ६॥ "पापात्ययभृशार्थेषु वियोगादेशयोश्च निर्। लाभातिक्रमयोः प्रोक्तः पण्डितैरवधारणे"॥७॥ निरित्युपसर्गोऽष्टस्वर्थेषु वर्त्तते। एवं निस् सकारातोऽपि ज्ञेयः। द्वावपि समानार्थौ। पापे–निर्मर्य्यादा १। अत्यये–निर्जलं सरः २। भृशार्थे–निर्णीतम् ३। वियोगे–निःशल्यम्, निर्य्याणम्, निर्य्यातः ४। आदेशे–निर्दिष्टः ५। लाभे–निर्देशः ६। अतिक्रमे–निष्क्रान्तः ७। अवधारणे–निश्चितम् ८॥ ७॥ "वैवर्ण्यकुत्सनालाभाऽसम्पत्तिषु दुरुच्यते। ईषदर्थे कृशे प्रोक्तः पूर्वाचार्य्यैः कवीश्वरैः॥" ॥ ८ ॥ एवं दुस् सकारान्तोऽपि। दुर्दुस् इत्युपसर्गौ षट्स्वर्थेषु वर्त्तते। वैवर्ण्ये–दुर्वर्णः १। कुत्सने–दुष्पुरुषः २। अलाभे–दुष्प्रापम् ३। असम्पत्तौ–दुर्गतः ४। ईषदर्थे–दुर्गृहीतः ५। कृशे–दुःस्थः ६। किञ्च, निस्,दुस् इति द्वावुपसर्गौ सान्तौ "निसस्तपतावनासेवने" ८। ३। १२। इति पाणिनिसूत्रे निस इति निर्देशात्, निष्कृतं, दुष्कृतमित्युदाहृत्य–इदुदुपधस्य सकारस्य यो विसर्जनीय इति भाष्योक्तेश्च "निरः कुषः" ७। २। ४६। इति "सुदुरोरधिकरणे"। [वा०] इति च निर्देशाद्रांतावपि बोध्याविति निरयते, दुरयत इत्यत्र निस्दुसो रुत्वस्याऽसिद्धत्वात् "उपसर्गस्यायतौ" ८। २। १९ इति सूत्रेण न लत्वम्। निर्दुरोस्तु निलयते, दुलयत इति रूपद्वयं भवतीति बोध्यम्॥

॥ ८ ॥ "नानार्थे भयकुत्सने च कलहे दूरार्थपैशुन्ययोरैश्वर्य्याऽतिशयप्रदर्शनभृशार्थोत्कर्षशौर्य्येषु च । अप्राधान्यवियोगमोहचटुलस्थानेषदर्थे स्फुटं संशुद्धौ कथितं तथैव विमुखे चार्थे विराद्यैर्बुधैः ॥ " ॥ ९ ॥ वि–इत्युपसर्ग एकोनविंशत्यर्थेषु वर्त्तते । नानार्थे–विचित्रा पाणिनेः सूत्राणां गतिः १ । भये–विषण्णः २ । कुत्सने–विरूपः ३ । कलहे-विवादः, विभाज्यं धनम् ४ । दूरार्थे-विप्रकृतमध्वानम् ५ । पैशुन्ये विकरोति ६ । ऐश्वर्य्ये–विभुर्देवदत्तः ७ । अतिशये--विकीर्णः ८ । प्रदर्शने--विलोकनीया कन्या ९ । भृशार्थे विशुद्धा नद्यः १० । उत्कर्षे–विस्मितो जनः ११ । शौर्य्ये–विक्रान्तः १२ । अप्राधान्ये–विनष्टः १३ । वियोगे–विमुक्तः १४ । मोहे–विमनस्कः १५ । चटुलस्थाने 'चटुलश्चञ्चले कान्ते' इति शब्दार्थचिन्तामणिः । विभ्रान्तः १६ । ईषदर्थे-विगलितः १७ । संशुद्धौ–विमलं जलम् १८ । विमुखे–विमुखम् १९॥९॥ "स्पर्द्धेच्छाप्तिषु बन्धने च निलये वाक्ये समीपे ग्रहे स्वन्तर्भावनिवृत्तिविस्मयभयादानोर्द्धकर्म्माशिषि । कृच्छ्रे शाठ्यनिमन्त्रणाभिविधिषु श्लेषाभिमुख्येपि चाङ् निर्देशाऽवधिविक्रियासु शकने स्थानादिकर्म्मण्यपि ॥" ॥१०॥ आङित्युपसर्गः सप्तविंशत्यर्थेषु । स्पर्द्धायाम्–मल्लो मल्लमाह्वयते १ । इच्छायाम्–आकांक्षते २ । आप्तौ–आसादितमनेन ३ । बन्धने--आमुञ्चति कवचम् ४ । निलये–आवसथः ५ । वाक्ये–आज्ञापयाति सः ६ । समीपे–आसन्नः ७ । ग्रहे आलम्बन्ते ८ । अन्तर्भावे–आपीतमुदकं सिकताभिः ९ । निवृत्तौ–आवृत्तः,

आरमति१०। विस्मये—आनन्दितः११। भये--आकम्पितः१२। आदाने--आदत्ते धनम् १३। उर्द्धकर्म्मणि--कदम्बमारोहति श्रीकृष्णचन्द्रः१४। आशिषि—आशास्ते १५। कृच्छ्रे—आपदं गतः १६। शाठ्ये—आचरति कपटेन १७। निमन्त्रणे आमन्त्रितः १८। अभिविधौ—आकुमारं यशो रामचन्द्रस्य, आजन्मशुद्धानामित्यादि १९। श्लेषे—आलिङ्गति २०। आभिमुख्ये—आगच्छति रामः २१। निर्द्देशे—आदिशति २२। अवधौ—आसमुद्रक्षितीशानामिति, आसकलाद्ब्रह्म २३। विक्रियायाम्—आश्वासयति २४। शकने--आक्रमते गगनं चन्द्रमाः २५। स्थाने—आस्पदम् २६। आदिकर्म्मणि-आरभते विद्यामध्येतुमिति २७। किञ्च—अयमाङुपसर्गो ङिदङिद्भेदेन द्विधा। तथा चोक्तं महाभाष्ये—"ईषदर्थे क्रिया-योगे मर्य्यादाभिविधौ च यः। एतमातं ङितं विद्याद्वाक्य-स्मरणयोरङित्॥" इति। ङित्सन्धिं प्राप्नोति, अङित्सन्धिं न प्राप्नोति। यथा-ईषदर्थे—ईषदुष्णम्--ओष्णमिति। क्रिया-योगे—आ ईक्षसे-एक्षस इति। वाक्ये—आ एवं नु मन्यसे। स्मरणे—एवं किल तदिति ॥ १० ॥ "निवेशे भृशार्थाश्रये दुष्टकर्म्मण्यधोभावविन्यासकौशल्यमोक्षे। समीपे स्मृतौ बन्धने राशिद्दष्टे बुधैर्मध्यभावे विरामे निरेषु ॥" ॥११॥ नि--इत्युपसर्गश्चतुर्दशस्वर्थेषु। निवेशे—'निविशते यदि शकशिखा पदे' इत्यादि १। भृशार्थे—निगृहीतः२। आश्रये—निलयः३। दुष्टकर्म्मणि—निकृष्टो देवदत्तः, जात्याचारादिभिर्निन्दित इत्यर्थः ४। अधोभावे निपतितः ५। विन्यासे—निवेशनं

गृहस्य ६। कौशल्ये—निपुणः ७। मोक्षे—निसृष्टः ८। समीपे-निविष्टः ९। बन्धने—नियमितः १०। राशौ—निकरः, निकारो वा धान्यस्य ११। दृष्टे—निशामयति रूपम् १२। मध्यभावे—निपीतमुदकं सिकताभिः १३। विरामे—निवृत्तः पापात् १४ इति ॥ ११ ॥ "आधिक्यस्मरणैश्वर्य्यवशीकृतिषु वर्त्तते। अधिष्ठानेप्यधिः प्रोक्तो धीरैरध्ययनेऽपि सः ॥" ॥ १२ ॥ अधीत्युपसर्ग्गः षट्स्वर्थेषु वर्त्तते। आधिक्ये—अधिराज्ञः १। स्मरणे—मन्त्रमधिस्मरति २। ऐश्वर्ये—अधिपतिः ३। वशीकृतौ—अधिकरोति रथी ४। अधिष्ठाने—अधिगुण-५। अध्ययने—व्याकरणमधीते ६ ॥ १२ ॥ "सम्भावन-निवृत्त्याशीरपेक्षासु समच्चये। प्रश्नभूषणगर्हासु ह्यपिः प्रोक्तो मनीषिभिः॥" ॥१३॥ पदार्थाऽन्ववसर्गयोरपि "अपिः पदार्थसम्भावनाऽन्ववसर्गगर्हासमुच्चयेषु" १।४।९६। इति पाणिन्युक्तेरिति। एवं हि—अपीत्युपसर्ग्गो दशस्वर्थेषु वर्त्तते। सम्भावनं शक्त्युत्कर्षमाविष्कर्त्तुमत्युक्तिः। यथा—अपि स्तुयाद्विष्णुमित्यत्राऽवाङ्मनसगोचरं विष्णुमपीत्यनेन शक्त्युत्कर्षाविष्करणार्थ्या। अत्युक्तिरसम्भाव्यार्थसम्भावनम्। सम्भावनापदस्येदृशार्थत्वे व्याख्यानमेव शरणमिति द्रष्टव्यम्। अशक्याया अपि विष्णुस्तुतेः शक्यत्वसम्भावनेऽन्यस्तुतेर्निश्चयेन कर्त्तुं शक्यत्वादर्थायात्तः शक्त्युत्कर्ष इति १। निवृत्तौ—अपि मांसं जह्यात् २। आशिषि—अपि वर्षशतं जीव्यात् ३। अपेक्षायाम्—अयमपि विद्वान् ४। समच्चये—अपि सिञ्च, अपि स्तुहि। अत्रापिद्वयेन

मिलितेन समुच्चयः ५। प्रश्ने—अपि गच्छति ६। भूषणे—अपि नह्यति हारम् ७। गर्हायाम्—धिग्देवदत्तमपि स्तुयाद्वृषलमिति । क्रियागतगर्ह्यत्वमपिद्योत्यम्, तदेव धिगित्यादिनाऽनूद्यत इति ८। पदार्थे—पदस्याऽप्रयुज्यमानपदान्तरस्यार्थः पदार्थः । यथा—सर्पिषोऽपि स्यादित्यादौ बिन्दुरित्यादिरप्रयुज्यमानपदस्यार्थोऽपिना द्योत्यत इति बोध्यम् ९ । अन्ववसर्गे—अन्ववसर्गः—कामचाराऽनुज्ञा । यथा—अपि स्तुहि—यथेच्छं स्तुहि वा यथेष्टं कर्विति यावदिति १० ॥ १३ ॥ "भृशार्थेऽतिशये च स्याद्वृद्ध्यतिक्रान्तयोरपि । अत्यतिक्रमणे प्रोक्त उपसर्गविचक्षणैः॥" ॥१४॥ "अतिरातिक्रमणे च" १।४।९५ इति सूत्रस्थचेन पूर्वसूत्रस्थं पूजायामिति पदमनुकृष्यते। तेन पूजार्थेऽप्यतिर्वर्त्तते । एवञ्च षट्स्वर्थेष्वतिरस्ति। भृशार्थे—अतिततप्ता आपः १। अतिशये—अतिमानुषमस्य ज्ञानम् २ । वृद्धौ—अतिमेयं गमनम् ३। अतिक्रान्ते—अतिनु जलम् ४। अतिक्रमणे—अतिहस्तयति, अतिक्रामति वा ५। पूजायाम्—अतिदेवान् कृष्णः, देवेभ्योऽधिको देवपूज्यो वा कृष्ण इत्यर्थः ६ ॥ १४ ॥ "पूजायां च समृद्धौ च भृशार्थाऽऽभीलयोरपि। उपसर्गविशेषज्ञैस्सुः प्रोक्तोऽनुमतावपि॥" ॥१५॥ सु—इत्युपसर्गः पञ्चस्वर्थेषु वर्त्तते। पूजायाम्—सुसिक्तम्, सुस्तुतम् १ । समृद्धौ—सभद्रम् २ । भृशार्थे—सुवहा आपः ३ । आभीले कृच्छ्रे—सुपुष्करं सव्रतं वा ४। अनुमतौ—सुकृतम् ५ ॥ १५॥ "प्राबल्यलाभमोक्षोर्द्ध्वकर्म्मप्राकाश्यशक्तिषु।

वियोगाभावबन्धे स्यादुदस्वास्थ्यप्रधानयोः ॥" ॥१६॥ उदित्युपसर्ग्ग एकादशस्वर्थेषु वर्त्तते । प्राबल्ये-उद्बलः सर्पः १। लाभे-उत्पन्नं द्रव्यम् २ । मोक्षे--उद्दामः ३ । ऊर्द्ध्वकर्म्मणि-आसनादुत्तिष्ठति ४ । प्राकाश्ये-उच्चरति ५। शक्तौ-उद्ग्राहः ६ । वियोगे-उत्पथेन गच्छति ७ । अभावे-उत्पथः ८ । बन्धे-उद्बद्धा गौः ९ । अस्वास्थ्ये-उत्सुकः १० । प्रधाने-उत्कृष्टः ११ ॥ १६ ॥ "पूजोक्तीच्छाऽदने नृत्ये सादृश्याम्नाययोरभिः।रोगाभिमुख्यसामीप्ये स्याद्भृशार्थप्रयोगयोः॥" ॥ १७ ॥ अभि-इत्युपसर्ग्गो द्वादशस्वर्थेषु वर्त्तते । पूजायाम्-अभिवादयति १। उक्तौ-अभिधत्ते-२। इच्छायाम्--अभिलषति ३ । अदने-अभ्यवहरति ४। नृत्ये-अभिनयः ५। सादृश्ये--अभिजातः ६। आम्नाये--अभ्यस्यति ७। रोगे-आभिस्पन्दः ८। अभिमुख्ये अभिमुखः स्थितः ९। सारूप्ये--अभिरूपः १०। भृशार्थे-अभिरतः ११ । प्रयोगे-अभिजानाति १२ ॥ १७ ॥ "सादृश्यादानरुगहिंसातद्योगे व्याप्तिवारणे । निवृत्तिप्रतिबिम्बाभिमुख्ये च व्यत्यये प्रतिः॥ " ॥१८॥ प्रतीत्युपसर्ग्ग एकादशस्वर्थेषु वर्त्तते । सादृश्ये-प्रतिकृतिर्देवदत्तस्य । तृणकाष्ठादिनिर्मितं प्रतिमाऽपरपर्य्यायवस्तु प्रतिकृतिरिति १। आदाने-प्रतिगृह्णाति २ । रुजि-प्रतिश्यायः 'प्रतिश्यायस्तुपीनसः' इत्यमरः ३ । हिंसायाम्-प्रतिहितः ४ । तद्योगे-प्रतिपन्नमेतत् ५ । व्याप्तौ-प्रतिकीर्ण्णः पांशुभिः ६ । वारणे-प्रतिनिवृत्तः ७ । निवृत्तौ-प्रतिक्रान्ताः ८ । प्रतिबिम्बे-प्रतिहस्ती ९।

आभिमुख्ये-प्रति सूर्यं गच्छति १० । व्यत्यये-तैलाद्घृतं प्रतिददातीति ११ । "लक्षणेत्थम्भूताख्यानभागवीप्सासु प्रतिपर्य्यनवः" १ । ४ । ९ । इति सूत्रोक्तार्थेष्वपि । लक्षणे-वृक्षं प्रति विद्योतते विद्युत् । वृक्षमिति । वृक्षप्रकाशेन विद्युद्विद्योतनदेशज्ञानाद्वृक्षो लक्षणम् १, इत्थम्भूताख्याने-इत्थंभूतः कंचित्प्रकारम्प्राप्तः, स आख्यायतेऽनेनेति-इत्थंम्भूताख्यानम्-प्रकारविशेषनिरूपकम् । तत्र यथा-विष्णुम्प्रति भक्त इति २, भागे-लक्ष्मीर्हरिम्प्रति-हरेर्भाग इत्यर्थः ३, वीप्सायाम्-वृक्षंवृक्षं प्रति सिञ्चतीति ४ ॥१८॥ "परि दोषोक्तिविभूषण उपरमपूजासमन्ततोभावे । व्याप्त्यालिङ्गनवर्ज्जननिवसनशुचि रोगवीप्सासु॥" ॥१९॥ परि-इत्युपसर्ग्गो द्वादशस्वर्थेषु वर्त्तते । दोषोक्तौ-परिहसति देवदत्तः १ । विभूषणे-परिष्करोति कन्याम् २ । उपरमे-परिपूर्णः कुम्भः३। पूजायाम्-परिचरति गुरुम् ४। समन्ततो भावे-परिभ्रमति ५ । व्याप्तौ-परिगतो हस्तिना ग्रामः ६। आलिङ्गने-परिष्वजति प्रियाम् ७ । वर्ज्जने-परिगर्त्तेभ्यो वृष्टो देवः, परिहरेः संसारः ८ । निवसने--परिधानम् ९ । शुचि-परिदेवनम् १० । रोगे-परिगतो विस्फोटकः ११ । वीप्सायाम्--वृक्षं वृक्षं परिसिञ्चति १२ इति । प्रतिवल्लक्षणेत्थम्भूताख्यानभागेष्वपि ज्ञेयमिति ॥ १९ ॥ "दाक्षिण्यवीप्सामृतदानपूजातद्योगसामर्थ्यसमीप उक्तः । व्याप्तौ तथाचार्य्यकृतौ च दोषे ह्युपेत्ययं रम्भणनिश्चये च ॥" ॥ २० ॥ उप इत्युपसर्ग्गस्त्रयोदशस्वर्थेषु

वर्त्तते । दाक्षिण्ये--उपचारः १ । वीप्सायाम्—देवं दे-वमुपयाचते २। मृते—उपरतो देवदत्तः ३ । दाने—उ-सरत्यर्थं ब्राह्मणाय ४। पूजायाम्—उपासितो वह्निः ५ । तद्योगे—उपपन्नं ध्यानमाह ६ । सामर्थ्ये—उपकरोति देव-दत्तः ७। समीपे—उपकुम्भम् ८। व्याप्तौ—उपकीर्णः पां-शुभिः ९। आचार्य्यकृतौ—उपदिशति शिष्येभ्यः १०। दोषे—उपघातः ११ । आरम्भणे—उपक्रमते भोक्तुम् १२। निश्च-ये—उपपन्नमेतत् १३। "उपोधिके च" १।४। ८७ इति सूत्रेणाधिकार्थे हीनार्थे चोप वर्त्तते। यथा—उप परार्द्धे हरे-र्ग्गुणाः। परार्द्धादधिका इत्यर्थः। हीने—उप हरिं सुरा इति ॥ २० ॥ किञ्च—उपसर्ग्गाणां द्योतकत्वमेव, न वाचकत्वम्। उक्तं हि—"द्योतकाः प्रादयो येन निपाताश्चादयस्तथा । उपास्येते हरिहरौ लकारो दृश्यते यथा ॥ निपाताश्चादयो ज्ञेया उपसर्ग्गास्तु प्रादयः। द्योतकत्वात्क्रियायोगे लोका-दवगता इमे॥" इति ॥ स त्रिधा—"धात्वर्थं बाधते कश्चित्क-श्चित्तमनुवर्त्तते। तमेव विशिनष्टयन्य उपसर्ग्गगतिस्त्रिधा॥" इति ॥ क्रमश उदाहरणानि यथा—आदत्ते, प्रसूते, प्रणम-तीति। उपसर्गाणां नास्ति स्वकीयः कश्चिदर्थः,केवलं प्रदीप इव घटं धात्वर्थमेव व्यञ्जयन्तीति शाकटायनमतम्। गा-र्ग्यमते तु—सन्त्युपसर्गाः सार्थकाः। प्रदीपस्तु व्यञ्जयन्नपि घटादीन्स्वमपि प्रकाशयति, तथात्रोपपन्न उपसर्गस्य क्रिया-विशेषोऽर्थः, क्रियासामान्यमात्रमाख्यातस्येति ॥ ७८२ ॥

**यश्चार्थादर्थो न स चोदनार्थ इति न्यायः ॥ ७८३ ॥**

अस्यार्थः—यः श्रुतार्थनान्तरीयकतया लभ्यते, न स वेदार्थ इत्यर्थः । नान्तरीयकतयेत्यस्य सम्बन्धिरूपकतयेत्यर्थः । शबरस्वाम्युक्तिरूपोऽयमिति ॥ ७८३ ॥

**यत्परः शब्द इति न्यायः ॥ ७८४ ॥**

यः अर्थः परः-तात्पर्य्यविषयो यस्य स यत्परः । स्पष्टमन्यत् ॥ ७८४ ॥

**मायिका गुणा वास्तवं निर्ग्गुणत्वं न विघ्नन्तीति न्यायः ॥ ७८५ ॥**

यथा—सत्यकामादिगुणा अपाणिपाद इतिप्रभृतिनिर्ग्गुणत्वमीश्वरस्य न निवारयन्तीति भावः ॥ ७८५ ॥

**विधेयं स्तूयते वस्त्विति न्यायः ॥ ७८६ ॥**

अयं न्यायः—तत्तद्विग्रहावच्छिन्नेशध्यानादिस्तुतये तदन्यविग्रहाऽवच्छिन्नेशापकर्षवर्णनविषयेऽवतरतीति ॥७८६॥

**वराटकान्वेषणे प्रवृत्तश्चिन्तामणिं लब्धवानिति न्यायः ॥ ७८७ ॥**

यथा—काश्यां स्वर्ग्गादिकमुद्दिश्य यागाद्यनुष्ठाताप्यकस्मान्मरणे प्राप्ते मोक्षमेव लभते, ह्येतादृशविषयेऽस्य प्रवृत्तिरिति ॥ ७८७ ॥

## सर्ववेदान्तप्रत्यय इति न्यायः ॥ ७८८ ॥

यथा-सर्वेभ्यो वेदान्तेभ्य एकमेव परं ब्रह्म प्रतीयते । एतदभिप्रायकप्रसङ्गेऽयं प्रवर्त्तत इति ॥ ७८८ ॥

## तरक्षडाकिनीन्यायः ॥ ७८९ ॥

तरम् गतिम्, मार्ग्गं वा क्षिणोति 'क्षिणु-हिंसायाम्' "अन्येभ्योऽपि"-३ । २ । १०१ । इति डः । तरक्षः । भाषायां 'तरख' इति व्याघ्रविशेषे डाकिनीवाहने प्रसिद्धः । तरक्षे डाकिनी-तरक्षडाकिनी । डाकिनी तु-श्रीमहाकालीगणविशेषः । यथा तरक्षस्था डाकिनी भयङ्कररूपिणी नानाविधभयंकरकार्य्याणि करोतीति प्रसिद्धम्, तथा प्रकृतेऽपि बोध्यमिति ॥ ७८९ ॥

## ज्ञानादेर्न्निष्कर्षवदुत्कर्षोऽप्यङ्गीकार्य्यो बाधकाऽभावादिति न्यायः ॥ ७९० ॥

यथा ज्ञानापकर्षावसानभूमित्वं स्थावराणाम्, तथा तदुत्कर्षावसानभूमित्वमीशस्येत्यङ्गीकार्य्यम् । तच्चोत्कृष्टत्वं ज्ञानस्य सर्वविषयत्वमेवेति भाव इत्यन्यत्र विस्तरः ॥ ७९० ॥

## सिद्धमवयुत्यानुवाद इति न्यायः ॥७९१॥

समुदायादेकं पृथक्कृत्याऽनुवादोऽवयुत्याऽनुवादः । स्पष्टार्थोऽयमन्यत्र विस्तरः ॥ ७९१ ॥

## विना मलयमन्यत्र चन्दनं न प्ररोहतीति न्यायः ॥ ७९२ ॥

अयं महान्तं गुणज्ञश्रेष्ठं जनं संश्रित्य बुध उन्नतिं प्राप्नोति नान्यत्रेति विवक्षायामवतरतीति ॥ ७९२ ॥

## प्राकाश्यं स्वगुणोदयेन गुणिनो गच्छन्ति किं जन्मनेति न्यायः ॥ ७९३ ॥

यत्र निकृष्टजातिजोऽपि गुणी स्वगुणोदयेन ख्यातिं यायात्त्रायं प्रचरतीति ॥ ७९३ ॥

## महान्महत्स्वेव करोति विक्रममिति न्यायः ॥ ७९४ ॥

अयम् महाञ्जनो महत्सु जनेष्वेव पराक्रमं करोति, न दुर्बलेष्विति भावविवक्षायामवतरतीति ॥ ७९४ ॥

## स्तुत्ये बले तु बलवान्परिकोपमेतीति न्यायः ॥ ७९५ ॥

अयमपि पूर्वन्यायविषये प्रवर्त्तते ॥ ७२५ ॥

## उत्पतितोऽपि हि चणकः शक्तः किं भ्राष्ट्रकं भङ्क्तुमिति न्यायः ॥ ७९६ ॥

अस्यार्थः—उत्पतितोऽपि भर्जनसमये भृष्टः सन्नुत्पतितोऽपीत्यर्थः । चणकः 'छोला' इति प्रसिद्धो धान्यविशेषः । भ्राष्ट्रकं भर्जनकारिणं भङ्क्तुं नाशयितुं किं शक्तः समर्थः किम्, अपि तु नेत्यर्थः । यो हि जनोऽपकर्त्तुमसमर्थस्सन्कुप्यति, स निर्लज्ज एवेत्यर्थविवक्षायामयं प्रचरतीति ॥ ७९६ ॥

## उपजीवन्ति शक्त्या हि जलजा जलदानिवेति न्यायः ॥ ७९७ ॥

अस्यार्थस्त्वेवम्—हि यतो जलजा जलजीविनः व्रीहिप्रभृतय इत्यर्थः। जलदानिव मेघानिव। सर्वे इत्यध्याहार्यम्। शक्तान् उपजीवनक्षमाञ्जनानुपजीवन्ति—उपजीव्य तिष्ठन्तीत्यर्थविवक्षायामयं प्रवर्त्तते ॥ ७९७ ॥

## रात्रौ दीपशिखाकान्तिर्न्न भानावुदिते सतीति न्यायः ॥७९८ ॥

यथा सूर्य्योदये दीपशिखा न शोभते, तथा गुणवत्तरसन्निधाने गुणवान्नाद्रियत इत्यर्थविवक्षायामस्य प्रचार इति ॥ ७९८ ॥

## पित्तं यदि शर्क्करया शाम्यति कोऽर्थः पटोलेनेति न्यायः ॥ ७९९ ॥

स्वल्पप्रयत्नेन कार्य्यसिद्धौ बहुप्रयत्नान्तरं व्यर्थमिति' विषयेऽस्य प्रवृत्तिरिति। पटोल औषधविशेषः। 'पलवल' 'परवर' इति च भाषायां प्रसिद्धः। 'पटोलस्तिक्तकः पटुः' इत्यमरः। अत्र पटोलशब्देन पटोलपत्रं गृह्यते, तस्य शीतगुणत्वात्। उक्तञ्च—"पटोलपत्रं पित्तघ्नं मूलं तस्य विरेचकम्। फलं तस्य त्रिदोषघ्नं नाडी तस्य कफाऽपहा ॥" इति ॥ ७९९ ॥

## कर्म्मणि व्यज्यते प्रज्ञा स्वस्थे को वा न पण्डित इति न्यायः ॥ ८०० ॥

कार्य्यकरणे बुद्धिः प्रकाश्यते। स्वस्थे प्रकृतिस्थे जने को वा जनः पण्डितो न-सर्व एव पाण्डित्यं दर्शयतीति भावविषयेऽस्य प्रचार इति ॥ ८०० ॥

## आखन्नपिटन्यायः ॥८०१॥

यथा-मूषकोऽन्नपिटं भक्षणीयद्रव्याधारविशेषं पातयितुमेव शक्नोति, तदुद्धर्त्तुं सम्यक्सम्पादयितुं यावन्न शक्नुत इत्यर्थविषयेऽस्य प्रवृत्तिरिति ॥ ८०१ ॥

## सूचीमुखन्यायः ॥ ८०२ ॥

अस्य गाथा यथा-कस्मिँश्चित्पर्वते वानरा हेमन्तर्त्तौ शीतेन वेपमानकलेवरा वह्निकणसदृशगुञ्जाफलान्यवचित्य वह्निवाञ्छया फूत्कुर्वन्तः। समन्तात्तस्थुः। अथ सूचीमुखनामा पक्षी तेषां तं वृथाऽऽयासमवलोक्याह-भो मूर्खा नैते वह्निकणा गुञ्जाफलानीमानि, नैतस्माच्छीतरक्षा भविष्यति, तदन्विष्यतां कश्चिन्निर्वातो वनप्रदेशो गुहा वा। अथ तेषामेको वृद्धवानरस्तमुवाच-किन्तवाऽनेन व्यापारेण तद्गम्यताम्। स भूयोऽपि वानरान्पुनरेवोवाच। अथ तावदेकेन कुपितकपिना पक्षयोर्गृहीत्वा शिलायामास्फालित उपरतश्च ॥ ८०२ ॥

## सूचीमुखीन्यायः ॥ ८०३ ॥

अस्य गाथा यथा-कस्मिँश्चिद्वने शमीवृक्षशाखायामरण्यचटकदम्पती वसतः स्म। तत्र कदाचिद्धेमन्ते मेघे वर्षत्येकः शाखामृगः शीतवातवेपमानः शमीमूल उप-

विष्टः। अथ तं तादृशमवलोक्य चटका प्राह—भो भद्र हस्तपादसमोपेतपुरुषाकृतिस्त्वं मूढ शीतेन कथं पीड्यसे, "गृहं कथं न कुरुषे। एतच्छ्रुत्वा तां वानरः सकोपमाह—'सूचीमुखी दुराचारा रण्डा पण्डितवादिनी। नाशङ्कते प्रजल्पन्ती तत्किमेनां न हन्म्यहम्॥" एवं प्रलप्य तां शमीमारुह्य तस्याः कुलायः शतधा खण्डशः कृत इति। इदं न्यायद्वयं मूर्खोपदेशकरणविषये प्रवर्त्तते। अत्र सूचीव मुखं यस्याः सेत्यर्थः॥ ८०३॥

## नाश्मनि स्यात्क्षुराक्रियेति न्यायः॥८०४॥

अयमपि पूर्वन्यायद्वयविषये सञ्चरतीति॥ ८०४॥

## निर्धनमनोरथन्यायः॥ ८०५॥

अयं पद्येनोपनिबद्धः। यथा—"उन्नम्योन्नम्य तत्रैव निर्धनानां मनोरथाः। हृदयेष्वेव लीयन्ते विधवास्त्रीस्तनाविव॥" इति॥ ८०५॥

## समागमास्सापगमा इति न्यायः॥ ८०६॥

सर्वमुत्पादि भंगुरमिति विषयेऽस्य प्रचार इति॥ ८०६॥

## पद्मपत्रस्थिततोयन्यायः॥ ८०७॥

अयं पूर्ववदस्थिरताविषये, महत्संसर्गादुत्तमफलं भवतीति विषये च प्रवर्त्तते। उक्तञ्च—"पद्मपत्रस्थितं तोयं धत्ते मुक्ताफलश्रियम्। महाजनस्य सम्पर्कः कस्य नोन्नतिकारकः॥" इति॥ ८०७॥

## स्वजातिर्दुरतिक्रमेति न्यायः ॥ ८०८ ॥

अत्र गाथाऽस्ति। यथा—गंगातटे कस्यचिन्मुनेरञ्जलौ श्येनमुखात्परिभ्रष्टा मूषिका पतिता, मुनिश्च तां दृष्ट्वा दयार्द्रहृदयो निजतपोयोगबलेन मानवीं कन्यां कृत्वाऽनपत्यायै स्वजायायै दत्तवान्। सा तया पालिता युवती वरार्हा जाता। ततस्तत्परिणयाय वरयितुं सूर्य्यपर्ज्जन्यमारुतगिरीनावाह्य मुनिः स्वकन्यामुवाच—पुत्रि एष्वन्यतमं वरय। सा तानर्कादीनतिदहनात्मक—कृष्णवर्णजडात्मका—ऽतिचपलात्मक—कठिनस्तब्धात्मकान्निरूप्यानुररीचकार। ततः स मुनिर्मूषकमावाह्य कन्यां प्राह—पुत्रि एनं वरय। ततः सा मूषकं दृष्ट्वा प्रसन्ना सती मुनिमुवाच—भगवन्मां पूर्ववन्मूषिकां कृत्वा मूषकाय देहि। मुनिना तथैव कृतम्। उक्तञ्च—"सूर्य्यं भर्त्तारमुत्सृज्य पर्ज्जन्यं मारुतं गिरिम्। स्वजातिं मूषिका प्राप्ता स्वजातिर्दुरतिक्रमा ॥" इति ॥ ८०८ ॥

## व्याघ्रचोरधनुर्न्यायः ॥ ८०९ ॥

अयम् नम्रीभूय स्वकार्य्यसाधनकर्म्मणि प्रवर्त्तते। यथा व्याघ्रचोरधनूंषि नम्रीभूय स्वकार्य्यं साधयन्ति, तथा नीचजनस्य प्रकृतिर्भवतीति ॥ ८०९ ॥

## यादृशी भावना यस्य सिद्धिर्भवति तादृशीति न्यायः ॥ ८१० ॥

स्पष्टार्थोऽयमिति ॥ ८१० ॥

## श्वशुष्कास्थिन्यायः ॥ ८११ ॥

लौकिकगाथारूपोऽयम् । यथा श्वा कुक्कुरः शुष्कं नीरसमस्थि मुखे धृत्वा चर्वति । स्वमुखोद्भवरक्तस्रावं विना किञ्चिदपि तृप्तिकारकं फलं न भवति तस्य । न जहाति स तदस्थि, तथा मूर्खोऽपि निष्फलं वस्तु गृहीत्वा फलाभावेऽपि न त्यजतीति विषयेऽस्य न्यायस्य सञ्चार इति ॥८११॥

## यत्प्रायः श्रूयत इति न्यायः ॥ ८१२ ॥

स्पष्टार्थोऽयमिति ॥ ८१२ ॥

## यत्प्राये यच्च यादृक्च तत्तादृगवगम्यत इति न्यायः ॥ ८१३ ॥

अयमपि तथा स्पष्टः ॥ ८१३ ॥

## कोटिशोदृश्यमानोपबृंहणन्यायः ॥८१४॥

एतन्न्यायानुरोधादीश्वरस्याजरत्वादेर्विग्रहगुणत्वसिद्धिः। स्वधीकल्पितैर्न्यायैर्व्यवस्थापनादुपबृंहणानुरोधाद्व्यवस्थापनं ज्यायः। "बिभेत्यल्पश्रुताद्वेदो मामयं प्रहरिष्यति। इतिहासपुराणाभ्यां वेदार्थमुपबृंहयेत् ॥ वेदार्थो यः स्वयं ज्ञातस्तत्संदेहो भवेदपि। ऋषिभिर्निश्चिते तस्मिन्का शङ्का स्यान्महात्मनाम् ॥" । तथा च-"तस्योपरि शिवं ध्यायेत्साम्बं सर्वमनोहरम्। सर्वलक्षणसम्पन्नं गाढयौवनशोभनम्"इत्याद्युपबृंहणानुरोधाद्विग्रहगुणत्वेनैवान्वयो युक्त इत्यलं पल्लवितेनेत्यन्यत्र विस्तरः ॥ ८१४ ॥

## पञ्चकोशावतरणन्यायः ॥ ८१५ ॥

अयं श्रुतिमात्रसिद्धत्वान्न लौकिकः । अत एवेह न प्रपञ्चित इति । सोपानारोहणन्याये ४५ विस्तृतः ॥ ८१५ ॥

## कुमारीकङ्कणन्यायः ॥ ८१६ ॥

अयं श्लोकेन विवृतः । तथाहि—"बहूनाङ्कलहो नित्यं द्वाभ्यां संघर्षणं तथा । एकाकी विचरिष्यामि कुमारीकंकणं यथा ॥" इति ॥ ८१६ ॥

## शकुनिसूत्रन्यायः ॥ ८१७ ॥

## नदीसमुद्रन्यायः ॥ ८१८ ॥

## शुद्धोदलवणन्यायः ॥ ८१९ ॥

## चोरापहार्य्यन्यायः ॥ ८२० ॥

## पुंविषयन्यायः ॥ ८२१ ॥

## नानावृक्षरसन्यायः ॥ ८२२ ॥

उक्तश्च महोपनिषदि—"यथा पक्षी च सूत्रं च नानावृक्षरसा यथा । यथा नद्यः समुद्राश्च शुद्धोदलवणे यथा ॥ चोरापहार्य्यौ च यथा यथा पुंविषयावपि । तथा जीवेश्वरौ भिन्नौ सर्वदैव विलक्षणौ ॥" इत्यादि पूर्णप्रज्ञदर्शने प्रपंचितं माधवार्य्यैः । शकुन्यादिन्यायास्समानविषयाः स्पष्टार्था इति ॥ ८१७–८२२ ॥

## मुख्याऽसम्भवे गौणग्रहणं युक्तमिति न्यायः ॥ ८२३ ॥

अयम्मुहूर्त्तचिन्तामणिटीकायां धृतः । तत्रच—'सा दृष्टेन्दुः सिनीवाली' इति वाक्यमीमांसायाम्—ननु च दृष्टश्चन्द्रो यस्यामित्यन्यपदार्थे सप्तमी सामीप्यपरेति व्याख्यायत इति चेन्न,तस्याः सामीप्यसप्तम्या गौणाधारपरत्वान्मुख्याऽसम्भवे गौणग्रहणं युक्तमित्युक्तमिति ॥ ८२३ ॥

## एकवृन्तगतफलद्वयन्यायः ॥ ८२४ ॥

स्पष्टः । 'वृन्तं प्रसवबन्धनम्' इत्यमरः । अयं साहित्यदर्पणस्य दशमपरिच्छेदे श्लेषालंकारप्रकरण उक्तः । तथाहि—'अभङ्गस्तु—अर्थश्लेष इव यत्र स्वराभेदादभिन्नप्रयत्नोच्चार्य्यतया शब्दाभेदादर्थयोरेकवृन्तगतफलद्वयन्यायेन श्लेषः' इति ॥ ८२४ ॥

## यो यन्निरूपितसांसिद्धिकप्रकाराक्रान्तस्स तन्निरूपिततज्जातीयविशेषणाधानविशेषसन्तानक इति न्यायः ॥ ८२५ ॥

अयं मर्य्यादापरिपाटीग्रन्थे विस्तरशो निरूपित इति विरम्यते ॥ ८२५ ॥

## अभक्ष्यप्रतिषेधेन वा भक्ष्यनियम इति न्यायः ॥ ८२६ ॥

तद्यथा—"अभक्ष्यो ग्रामकुक्कुटः, अभक्ष्यो ग्रामसूकर इत्युक्ते गम्यत एतदारण्यो भक्ष्यः" इति पस्पशायाम् ॥ ८२६ ॥

## द्रव्यवच्चोपचार इति न्यायः ॥ ८२७ ॥

द्रव्यवच्चोपचाराः प्राप्नुवन्ति । उपचारा—व्यवहाराः । यथैकेन घटेनोदकाहरणादिक्रियां युगपदनेको न करोत्येवं प्रकृतेऽपि बोध्यमिति प्रत्याहाराह्निक इति ॥ ८२७ ॥

## अभ्यन्तराश्च समुदायेऽवयवा इति न्यायः ॥ ८२८ ॥

यथा वृक्षः प्रचलन्सहावयवैः प्रचलति, तथा प्रकृतेऽपि बोध्यम् । प्रत्याहाराह्निके म० भा० इति ॥ ८२८ ॥

## अनुपदिष्टं सत्कथं शक्यं विज्ञातुमसच्च कथं शक्यं प्रतिपत्तुमिति न्यायः ॥२२९॥

स्पष्टार्थोयं प्रत्याहाराह्निके ॥ ८२९ ॥

## मार्द्दवे बहवो दोषा इति न्यायः ॥ ८३० ॥

अयञ्च माघकविना विवृतः प्रकारान्तरेण । तथाहि— "तुल्येऽपराधे स्वर्भानुर्भानुमन्तं चिरेण यत् । हिमांशुमाशु ग्रसते तन्म्रदिम्नः स्फुटं फलम् ॥" इति स्पष्टः ॥८३०॥

## भेदका गुणा इति न्यायः ॥ ८३१ ॥

एवं हि दृश्यते लोके—एकोऽयमात्मोदकं नाम तस्य गुण-भेदादन्यत्वं भवति—अन्यदिदं शीतमन्यदिदमुष्णमिति, एवं प्रकृतेऽपि ॥ ८३१ ॥

## अभेदका गुणा इति न्यायः ॥ ८३२ ॥

तद्यथा—देवदत्तो मुण्ड्यपि जट्यपि शिख्यपि स्वामा-

ख्यां न जहाति, तथा बालो युवा वृद्धो वत्सो दम्यो बलीवर्द इति, एवं प्रकृतेऽपीति "वृद्धिरादैच्" सूत्रभाष्ये ॥८३२॥

## यो यस्य प्रसङ्गे लभतेऽसौ तत्कृतानि कार्य्याणीति न्यायः ॥ ८३३ ॥

तद्यथा—उपाध्यायस्य शिष्यो याज्यकुलानि गत्वाऽग्रासनादीनि लभते, एवं प्रकृतान्तरेऽपि बोध्यम्। अयं "स्थानिवदादेशोऽनल्विधौ" १ । १ । ५६ । इति सूत्रभाष्ये स्पष्टः ॥ ८३३ ॥

## कान्तारन्यायः ॥ ८३४ ॥

तद्यथा—कश्चित्कान्तारे समुपस्थिते सार्थमुपादत्ते, स यदा निष्क्रान्तकान्तारो भवति, तदा सार्थं जहातीति "त्यदादीनि च" १ । १ ।७४। सूत्रभाष्ये प्रोक्तोऽयम् ॥८३४॥

## तुल्यबलप्रेषणन्यायः ॥ ८३५ ॥

तद्यथा—लोके द्वयोस्तुल्यबलयोरेकः प्रेष्यो भवति, स तयोः पर्य्यायेण कार्य्यं करोति । यदा तमुभौ युगपत्प्रेषयतो नानादिक्षु च कार्य्ये भवतस्तत्र यद्यसावविरोधार्थी भवत्युभयोर्न करोति। किं पुनः कारणमुभयोर्न करोति, यौगपद्यासम्भवादित्यादिकम् "अन्तादिवच्च" ६ । १ । ८५ । इति सूत्रभाष्ये स्पष्टम् ॥ ८३५ ॥

## कामचारश्च वतिनिर्द्देशे वाक्यशेषं समर्थयितुमिति न्यायः ॥ ८३६ ॥

तद्यथा—उशीनरवन्मद्रेषु यवाः सन्ति, न सन्तीति ।

मातृवदस्याः कलाः सन्ति, न सन्तीति संक्षेप इति "स्त्रियाः पुंवद्भाषित-" ६ । ३ । १ सूत्रभाष्ये स्पष्टम् ॥ ८३६ ॥

## अर्थवशाद्विभक्तिविपरिणाम इति न्यायः ८३७

तद्यथा—उच्चानि देवदत्तस्य गृहाण्यामन्त्रयस्वैनम् । देवदत्तमिति गम्यते । देवदत्तस्य गावोऽश्वा हिरण्यमाढ्यो वैधवेयः । देवदत्त इति गम्यते । पुरस्तात्षष्ठीनिर्दिष्टं सदर्थाद्द्वितीयानिर्दिष्टं प्रथमानिर्दिष्टञ्च भवतीत्येवं प्रकृतेऽपि ॥ "ठस्येकः" ७ । ३ । ५० । इति सूत्रभाष्ये स्पष्टम् ॥ ८३७ ॥

## सामृतैः पाणिभिर्घ्नन्ति गुरवो न विषोक्षितैः । लालनाश्रयिणो दोषास्ताडनाश्रयिणो गुणाः ॥ इति न्यायः ॥ ८३८ ॥

अयं—"वाक्यादेरामन्त्रितस्याऽसूयासम्मतिकोपकुत्सनभर्त्सनेषु" ८ । १ । ८ । इति सूत्रमहाभाष्ये प्रोक्तः । तथाहि—"असूया कुत्सनमित्येकोऽर्थः । कोपो भर्त्सनमित्येकोऽर्थः । असूयाकुत्सनयोः कोपभर्त्सनयोश्चैकार्थत्वात्पृथक्त्वनिर्देशोऽनर्थकः । न ह्यनसूयन्कुत्सयति, न चाप्यकुपितो भर्त्सयते । ननु च भोः अकुपिता अपि दृश्यंते दारकान्भर्त्सयमानाः । अन्ततस्ते तां शरीराकृतिं कुर्वन्ति या कुपितस्य भवति । एवं तर्ह्याह—सामृतैः—"इत्यादि ॥ ८३८ ॥

## विषस्य विषमौषधमिति न्यायः ॥ ८३९ ॥

अयं लौकिकगाथारूपः स्पष्टः ॥ ८३९ ॥

## जित्वरीवदुपाचरेदिति न्यायः ॥ ८४० ॥

अयं "विदूराञ् ञ्यः" ४ । ३ । ८४ । इति सूत्रमहाभाष्ये व्यवहृतः । तथाहि—'लसुनिया' इति ख्याते कृष्णपीतवर्णविशिष्टे मणौ वैदूर्यमित्युच्यते। विदराख्यान्नगरात्प्रभवति वैदूर्यमिति।प्रकृतसूत्रेण ञ्यप्रत्यये वृद्ध्यादिके च कृते वैदूर्य्यशब्दो निष्पन्नो भवति । तत्रत्यभाष्याऽभिप्रायस्त्वेवम्-अयुक्तोऽयं निर्देशो न ह्यसौ मणिर्विदुरात्प्रभवति,किन्तर्हि-वालवायाख्यपर्वतविशेषात्प्रभवति । तत्पर्वतसमीपे विदूरनगरे संस्क्रियते। एवं तर्हि-"वालवायो विदूरश्च प्रकृत्यन्तरमेव वा। न वै तत्रेति चेद् ब्रूयाज्जित्वरीवदुपाचरेत्॥" यथा वणिजो वाराणसीं जित्वरीत्युपाचरन्ति,एवं वैयाकरणा वालवायं विदूरइत्युपाचरंतीत्युक्तम् । अयमभिप्रायः—वालवायशब्दो विदूरशब्दमापद्यते, ञ्यश्चास्मात्प्रत्ययो वक्तव्यः । वा विदूरशब्दो नगरविशेषस्येव पर्वतविशेषस्यापि वाचकः, स एव च प्रकृतित्वेनाश्रीयत इत्यर्थः । पर्वते विदूरशब्दो न प्रसिद्ध इति चेत्—जित्वरीवद्व्यवहरेत् । प्रतिनियतपुरुषापेक्षाऽपि प्रसिद्धिर्भवति—वणिजश्च मङ्गलार्थं वाराणसीं जित्वरीति व्यवहरन्तीति, तथा प्रकृतेऽपि बोध्यम् ॥ ८४० ॥

## अचेतनेष्वपि चेतनवदुपचारो दृश्यत इति न्यायः ॥ ८४१ ॥

देशान्तरप्राप्तिलक्षणकार्य्यदर्शनादचेतनेष्वपि क्रियाव्यवहारः—अयमस्य कोणोऽभिनिःसृतः । अयमभिप्रविष्ट

इति ।"अभिनिष्क्रामति द्वारम्"४ ३ । ८ ६ । इति सूत्रमहाभाष्योक्तोऽयं न्यायः ॥ ८४१ ॥

## गुणिनि गुणज्ञो रमत इति न्यायः ॥८४२॥

स्पष्टार्थोऽयमिति ॥ ८४२ ॥

## कुण्डधारोपास्तिन्यायः ॥ ८४३ ॥

यथा कुण्डधारो हि कश्चिद्यक्षो धनार्थं स्वविषयकोपासनां कृतवतः कस्यचित्प्रत्यक्षीभूय धनादिरूपपुरुषार्थमल्पं मन्वानस्तेन सह देवसम्मतिं प्राप्य,देवताः प्रार्थ्य, तत्प्रसादेन ज्ञानानुष्ठानभाजं कृत्वा तं मोक्षभागिनमकरोदिति भारते प्रसिद्धिः । तथा शिवशक्त्यादिमन्त्रग्रहीतुरपि तत्तद्देवताः स्वप्रसादेन मोक्षोपायानुष्ठानादिविरोधिरजस्तमोनिवर्हणसत्त्वाभिवृद्धिद्वारा चिराय मोक्षं सम्पादयन्तीति रामानुजीया इति ॥ ८४३ ॥

## घटदर्शनायोन्मीलितचक्षुरिति न्यायः ८४४॥

अयं न्यायः—न च सन्ध्यावंदनत्यागजन्यप्रत्यवायपरीहारनिमित्तकप्रायश्चित्तेन कथं ब्राह्मण्यमुत्पाद्यमिति वाच्यम्, घटदर्शनायोन्मीलितचक्षुरिति न्यायेनोत्पादनीयत्वादित्युक्तोजान्तखण्डननिबन्धने ॥ ८४४ ॥

## देवताऽधिकरणन्यायः ॥ ८४५ ॥

यत्तु—केचिन्मन्यन्ते विग्रहबोधकश्रुत्यादेरुपासनापरत्वादारोपितविग्रहेणाप्युपासनासिद्धेर्नेशस्योक्तविग्रहसि-

द्धिरिति–तन्न, उपासनापरेभ्योऽप्यविरोधे देवताधिकरण-न्यायात्प्रतीयमानार्थसिद्धेरनिवार्य्यत्वादित्युक्तं संग्रहे८४५॥

## षाष्ठतिर्य्यगधिकरणन्यायः ॥ ८४६ ॥

अयमपि तत्रैवोक्तः, विस्तरभिया नेह प्रपञ्च्यत इति ॥ ८४६ ॥

## श्येनाधिकरणन्यायः ॥ ८४७ ॥

अयमपि तथा ॥ ८४७ ॥

## गुणे त्वन्याय्यकल्पनेति न्यायः ॥ ८४८ ॥

यथा–लक्षणातो वाक्यभेदस्य जघन्यत्वाल्लक्षणा हि पददोषो वाक्यभेदस्तु वाक्यदोषः पदवाक्यदोषयोर्मध्ये पद एव दोषकल्पनाया उचितत्वाद्गुणे त्वन्याय्यकल्पनेति न्यायादित्युक्तं न्यायप्रकाशे ॥ ८४८ ॥

## असञ्जातविरोधित्वन्यायः ॥ ८४९ ॥

अयमपि तथा तत्रैवेति ॥ ८४९ ॥

## षष्ठाद्यन्यायः ॥ ८५० ॥

## भावार्थाऽधिकरणन्यायः ॥ ८५१ ॥

इमौ द्वौ न्यायप्रकाश उदाहृतौ । तथाहि–"यजेत स्वर्ग-कामः" इत्यत्राऽऽख्यातांशेनार्थी भावनाऽभिधीयते–भावये-दिति । सा चांशत्रयमपेक्षते–१ किम्भावयेत्, २ केन भाव-येत्,३कथम्भावयेदिति । तत्र भाव्याकांक्षायां षष्ठाद्यन्यायेन स्वर्गो भाव्यतयाऽन्वेति स्वर्गं भावयेदिति । करणाकां-

क्षायां समानपदोपात्तो यागो भावार्थाधिकरणन्यायेन करणतयाऽन्वेति यागेन स्वर्गं भावयेदित्यादि ॥ ८५० ॥ ८५१ ॥

## भूतम्भव्यायदिदृश्यत इति न्यायः ८५२॥

अयं मीमांसान्यायप्रकाशे धृतः । तथाहि—किं द्रव्यगुणयोः फलभावनाकरणमुत—धात्वर्थस्येति भावार्थाधिकरणे संदिह्य द्रव्यगुणयोरेव भावनाकरणत्वं भूतम्भव्याय दिदृश्यत इति न्यायादित्याशङ्क्य धात्वर्थस्यैव भावनाकरणत्वमित्युक्तं तत्रेति ॥ ८५२ ॥

## तत्प्रख्यन्यायः ॥ ८५३ ॥

अयमपि तत्र । तथाहि—"अग्निहोत्रं जुहोति" इत्यस्योत्पत्तिविधित्वं,"दध्ना जुहोति" इत्यादीनां च गुणविधित्वमुक्तमिति चेत्सत्यम्—अग्निहोत्रं जुहोतीत्यत्र यद्यपि रूपं नोपलभ्यतेऽग्निहोत्रशब्दस्य तत्प्रख्यन्यायेन नामधेयत्वादित्युक्तमिति ॥ ८५३ ॥

## आकृत्यधिकरणन्यायः ॥ ८५४ ॥

अयमपि तत्रैव। तथाहि—एवं चाऽऽख्यातवाच्या भावना कर्त्तारं विनाऽनुपपन्ना तमाक्षिपति । आक्षेपादेव कर्त्तुः प्रतिपत्तिसम्भवे किमिति तद्वाचकत्वमाख्यातस्य कल्पनीयम् । न च विनिगमनाविरहः, कृतिमान्हि कर्त्ता, एवं कृतेरेव भावनापरम्परया आकृत्यधिकरणन्यायेनाख्यातवाच्यत्वसम्भवेन तद्वतः कर्त्तुर्वाच्यत्वं कल्पनीयं गौरवप्रसङ्गादित्युक्तमिति । अन्यत्रापि । तत्र-

किञ्च—आख्यातवाच्यः कर्त्तेति वादिनोऽपि मते देवदत्तः पचतीति सामानाधिकरण्यं न मुख्यम्, तन्मते—आख्यातेन तृतीयावन्निकृष्टशक्तिमात्ररूपकर्तृकारिकाभिधानाच्छक्तिमद्द्रव्यस्याऽऽकृत्यधिकरणन्यायेनाऽनभिधानादित्याद्युक्तमिति ॥ ८५४ ॥

## यदन्तरेण यन्न सम्भवति तस्य तदर्थत्वं तदपेक्षमिति न्यायः ॥ ८५५ ॥

यथा—न हि ज्ञानमन्तरेण कर्म्मानुष्ठानं सम्भवतीति प्रोक्तं तत्रैवेति ॥ ८५५ ॥

## प्रकरणाद्वाक्यं बलीय इति न्यायः ॥८५६॥

प्रकरणलक्षणं यथा—"शास्त्रैकदेशसम्बद्धं शास्त्रकार्य्यान्तरे स्थितम् । आहुः प्रकरणं नाम ग्रन्थभेदं विपश्चितः ॥" मीमांसकमते—विनियोगविधेः सहकारभूतेषु षट्सु प्रमाणेषु चतुर्थप्रमाणमुभयाऽऽकांक्षाप्रकरणमिति । अत एव "इन्द्राग्नी इदं हविरजुषेतामवीह धेतां महोज्यायोक्रातम्" इत्यत्रेन्द्राग्नीपदस्य लिङ्गाद्दर्शाङ्गत्वे सिद्धे इदं हविरित्यादेरपि तदेकवाक्यत्वाद्दर्शाङ्गत्वं न, तत्प्रकरणाद्दर्शपूर्णमासाङ्गत्वप्रकरणाद्वाक्यस्य बलीयस्त्वादिति प्रोक्तमिति ॥ ८५६ ॥

## विश्वजिन्न्यायः ॥ ८५७ ॥

यथा-विश्वजिदधिकरणे हि "विश्वजिता यजेत" इत्यत्र फलस्याश्रवणात्फलमन्तरेण च विधिश्रुतेरनुपपत्तेरवश्यं फले कल्पयितव्ये सर्वाभिलषितत्वेन स्वर्ग्गः फलमित्यु-

क्तम्। एवं च यत्रार्थवादवाक्ये विधिवाक्ये फलं न श्रूयते तत्र स्वर्गः फलं कल्प्यत इति प्रकृतन्यायविषयः। एवं प्रकृतान्तरेऽप्यूह्यमिति ॥ ८५७ ॥

रात्रिसत्रन्यायः ॥ ८५८ ॥

यत्र विधिवाक्ये फलं न श्रूयते, तत्रार्थवादवाक्योक्तं फलमतिदिश्यत इत्यर्थवादातिदेशः, अयमेव रात्रिसत्रन्यायस्य विषयः। अत एव रात्रिसत्राधिकरणे हि—"प्रतितिष्ठन्ति ह वा परा ता रात्रीरुपयन्ति" इत्यत्र विध्युद्देशे फलाश्रवणात्फलमन्तरेण च विधिश्रुतेरनुपपत्तेरवश्यं फले कल्पयितव्येऽर्थवादादिकं प्रतिष्ठाख्यं फलमित्युक्तमिति दिग् ॥ ८५८ ॥

होलिकाऽधिकरणन्यायः ॥ ८५९ ॥

वाङ्नियमन्यायः ॥ ८६० ॥

दर्वीहोमन्यायः ॥ ८६१ ॥

वाक्याऽर्थप्रतिपत्तिन्यायः ॥ ८६२ ॥

अङ्गगुणनिषेधे तादर्थ्यादिति न्यायः॥८६३॥

अनारभ्याऽधीतानां च प्रकृतौ वा द्विरुक्तत्वादिति न्यायः ॥ ८६४ ॥

यागानां दैक्षस्य चेतरेष्विति न्यायः ॥८६५॥

पशुसोमाऽधिकरणन्यायः ॥ ८६६ ॥

निषादस्थपतिन्यायः ॥ ८६७ ॥

## प्रतिप्रधानं गुण आवर्त्तनीय इति न्यायः८६८

## गुणविरोधन्यायः ॥ ८६९ ॥

अत्र पूर्वमीमांसान्यायानां न्यायमालाशास्त्रदीपिकामीमांसान्यायप्रकाशभाट्टदीपिकाप्रभृतिमीमांसानिबन्धेषु बहुशः स्पष्टं विवृतत्वाद्दिङ्मात्रमिह प्रदर्श्याऽस्य ग्रन्थस्य विस्तरभयात्काँश्चिद्व्याख्याय काँश्चिदव्याख्याय चोपरम्यत इति ॥ ८५९–८६९ ॥

## दुःखमेव सर्वं विवेकिन इति न्यायः ॥ ८७० ॥

दुःखे स्रक्चंदनवनादौ सुखत्वारोप इत्याद्युक्तं पातञ्जलदर्शने माधवाचार्य्येणेति ॥ ८७० ॥

## मधुकरराजमधुमक्षिकान्यायः ॥ ८७१ ॥

यथा मधुकरराजं मधुमक्षिका अनुवर्त्तन्ते, तथेन्द्रियाणि चित्तमिति योगशास्त्रे विस्तरः ॥ ८७१ ॥

## चतुर्व्यूहन्यायः ॥ ८७२ ॥

चत्वारो व्यूहाः,विभागा इति यावत्,यत्र । यथा-पाञ्चरात्रमते–वासुदेवसंकर्षणप्रद्युम्नाऽनिरुद्धाख्यमूर्त्तयश्चतुर्व्यूहशब्देनोच्यन्ते । बहृचोपनिषदि च–शरीरपुरुषच्छन्दः पुरुषवेदपुरुषमहापुरुषाश्चतुर्व्यूहशब्देनोक्ताः । साङ्ख्यपातञ्जलदर्शनयोश्च–हेयम्, हानम्, हेयहेतुः, हानोपायश्चेति चत्वारो व्यूहाः प्रतिपाद्या भवन्ति । तत्र–त्रिविधं दुःखं हेयम्, तदत्यन्तनिवृत्तिर्हानम्, प्रकृतिपुरुषसंयोगद्वारा चाविवेको हेयहेतुः, विवेकख्यातिस्तु हानोपाय इति ।

चिकित्साशास्त्रे तु-रोगः, आरोग्यम्, निदानम्, भैषज्य-मिति चत्वारो व्यूहत्वेन प्रोक्ता इति । तथाऽन्यत्रापि शास्त्रे यथासम्भवं चतुर्व्यूहमूहनीयमित्येवमस्य न्यायस्यावतार इति ॥ ८७२ ॥

## सक्तुन्यायः ॥ ८७३ ॥

सक्तुन्यायेन कर्म्मकारकप्राधान्ये परित्यक्ते स्वतन्त्राद्दृष्टमेवात्रापि स्यादित्यत आह-"यथाश्रुतोपपत्तेर्न सक्तुन्यायः" इति सूत्रम् । अस्यार्थः-सक्तुषु गत्यभावाच्छ्रुतं परित्यज्याऽश्रुतं कल्प्यतां नाम, नेह तद्युक्तं प्र[illegible]शिंत[illegible]वादित्यर्थ इति मीमांसादर्शनम् ॥ ८७३ ॥

## न हि सोपानत्के पादे पुनरप्युपानहं प्रतिमुञ्चतीति न्यायः ॥ ८७४ ॥

स्पष्टार्थोऽयमिति ॥ ८७४ ॥

## अभाण्डलाभ इति न्यायः ॥ ८७५ ॥

यथा केनचिदापणिकेन स्वापेक्षितसाधनभूतभाण्डद्रव्यस्याऽभावेऽतज्जन्याप्राप्तिरेषितव्या, एवं यत्राऽभीष्टसिद्धौ साधनभूतस्यार्थस्याऽभावेऽप्यभीष्टसिद्धिरिष्यते, तत्रायं न्यायोऽवतरतीति । यथा च-स्वप्नेऽपि शुभकर्म्मणोऽभावे परमेश्वरदर्शनमिच्छस्यहो तेऽभाण्डलाभाऽभीप्सेति । केचित्तु-यत्र साधनस्याऽभावेऽपि साध्यस्य संसिद्धिस्तत्रायं प्रवर्त्तेत इत्यभयत्र समीचीनमिति ॥ ८७५ ॥

## अर्द्धवैशसन्यायः ॥ ८७६ ॥

अयं न्यायः पूर्वोक्तार्द्धकुक्कुटीन्यायसमानविषये प्रवर्त्तते । अयं शारीरकसूत्रभाष्ये व्यवहृतः । तथाहि—"न चार्द्धवैशसं सम्भवति" इत्युक्तम् । वैशसं हिंसा प्रोच्यते । यथोक्तम्—"वरं हुतवहज्वालापुञ्जस्यान्तर्व्यवस्थितिः । न शौरिचिन्ताविमुखजनसंवासवैशसम् ॥" इति कात्यायनः । शौरिचिन्ताविमुखेषु तन्निन्दापरेषु जनेषु यः संवासस्स एव वैशसं हिंसा, तन्न वरमित्यर्थ इति ॥ ८७६ ॥

## अंगुलीदीपिकया ध्वान्तध्वंसविधिन्यायः ॥ ८७७ ॥

यथा—अंगुल्या वर्त्तिता दीपिका—अंगुलीदीपिका । अनया ध्वान्तस्यान्धकारस्य ध्वंसविधिः क्रियमाणो नो सफलतां प्राप्नोति । यत्र महत्कर्म्मनिष्पत्तये स्वल्पमर्थात्तत्राऽसमर्थप्रायं कारणं प्रयुज्यते, तत्रायं सञ्चरतीति ॥ ८७७ ॥

## अंगुल्यग्रे करिणां शतमिति न्यायः ॥ ८७८ ॥

यत्राऽश्रद्धेयतोपन्यासो विवक्ष्यते, तत्रायमवतरतीति ८७८

## पिपीलिकाभिर्मन्थानगिरिविलेपनन्यायः ॥ ८७९ ॥

अयमपि पूर्वन्यायविषये प्रवर्त्तते । यथाऽऽहुः—"अद्धत्स्व मन्थानगिरिं पर्य्यलिम्पन्पिपीलिकाः" इति ॥ ८७९ ॥

## अन्यगेहस्थिताद्धूमान्न गेहान्तरमग्निमदिति न्यायः ॥ ८८० ॥

यत्र साधनीयोऽर्थस्सन्देहविषयीभूतो भवति स पक्षः । यथा—पर्वतो वह्निमान् इत्यग्नौ साध्ये पर्वतः । तत्र चेद्धेतुर्न वर्त्तेतेति, किन्त्वन्यत्रैवासौ स्यात्तेन च यदि साध्योऽर्थः साधयितुमिष्येत, तदाऽन्यगेहस्थिताद्धूमान्न गेहान्तरमग्निमदित्येष न्यायः प्रोक्तः । यथा—विद्वत्तमो देवदत्तो भूयिष्ठं ह्यध्ययनं विष्णुदत्तस्येति । अत्र विद्वत्तमत्वसाधनमध्ययनभूयिष्ठत्वं देवदत्तपक्षभिन्ने विष्णुदत्त एव वर्त्तत इति । अपक्षवृत्तित्वं च—पक्षभिन्नमात्रवृत्तित्वम्, न तु पक्षवृत्तित्वाभाव इति बोध्यमिति ॥ ८८० ॥

## माल्यं कस्य विचित्रपुष्परचितं प्रीत्यै न सञ्जायत इति न्यायः ॥ ८८१ ॥

सर्वसुन्दरपदार्थे सर्वजनाभिरुचित्वविवक्षायामवतरत्ययम् ॥ ८८१ ॥

## भस्मीभूतस्य देहस्य पुनरागमनं कुत इति न्यायः ॥ ८८२ ॥

अयं न्यायः पुनरावृत्तिगमनाभावविवक्षायां प्रवर्त्तते ८८२

## वक्रिणि बहवो गुणा इति न्यायः ॥ ८८३ ॥

अत्र वक्रिणि—अनृजावित्यर्थः । यथा वक्रेन्दुः शिवेन शिरसा धार्य्यते, लोकैश्च नमस्यत इति सर्वत्र ज्ञेयमिति ८८३

## घटाऽल्पदर्पणन्यायः ॥ ८८४ ॥

यथा घटानां—कुम्भानामिभशिरसां वाऽद्रिशृंगाणां वा विशालताऽल्पेपि दर्प्पणे विलोक्यते, तथा प्रकृतेपि । यत्र

लब्धाधारे विशालाधेयमापनविवक्षा, तत्रायमवतरतीति शंकरजये ॥ ८८४ ॥

## घटानां निर्म्मातुस्त्रिभुवनविधातुश्च कलह इति न्यायः ॥ ८८५ ॥

अस्य न्यायस्याल्पशक्तिमतो बहुशक्तिमता सह विग्रह-विवक्षायामवतार इति ॥ ८८५ ॥

## दर्प्पणमुखाऽवलोकनन्यायः ॥ ८८६ ॥

अयं यादृशं मुखं दर्प्पणे पश्यति, तादृशमेव दृश्यत इति विषये प्रवर्त्तते ॥ ८८६ ॥

## क्षीराब्धिवासिक्षीरकामन्यायः ॥ ८८७ ॥

अयं यत्राऽऽप्तकामोऽपि स्वीयजनतुष्टिचिकीर्षया किञ्चि-द्याचेत्तद्विषये प्रचरति । यथा—क्षीरार्णवनिवासिश्रीकृष्णो गोष्ठे गोपीः क्षीरं याचते स्मेति शंकरजये ॥ ८८७ ॥

## खरीविषाणन्यायः ॥ ८८८ ॥

असद्वस्तुसम्भावनविवक्षायामयं प्रचरतीति स्पष्टः ८८८॥

## शीतकिरणकराऽवलम्बनन्यायः ॥ ८८९ ॥

अयं स्वशक्तिबहिर्भूतवस्तुग्रहणार्थसाहसकरणेऽवतरतीति स्पष्टः शङ्करजये ॥ ८८९ ॥

## गोमयवृश्चिकन्यायः ॥ ८९० ॥

## देहकेशन्यायः ॥ ८९१ ॥

इमौ न्यायावत्यन्तसादृश्यन्तूपादानोपादेययोर्नापेक्षित-मिति विषयविवक्षायां प्रवर्त्तेते इति शंकरविजये॥८९०॥८९१

## सुवर्णन्यायः ॥ ८९२ ॥

यथा सुवर्णं निघर्षणच्छेदनतापनादिकर्म्मभिरुत्कृष्टता प्राप्नोति, तथा पठितशास्त्रमपि घोषणपरिप्रश्नविचारणादिभिरुत्कृष्टतां लभते, एवं प्रकृतान्तरेऽपि ॥ ८९२ ॥

## निषेध्यबोधाद्धिनिषेध्यबाध इति न्यायः॥८९३॥

निषेध्यज्ञानान्निषेध्यस्य बाधो भवति, नाऽन्यथेत्यर्थविषयेऽस्य प्रचार इति शंकरविजये ॥ ८९३ ॥

## कुञ्जरस्नानन्यायः ॥ ८९४ ॥

अयं स्वच्छकर्म्म कृत्वा तदनु तत्कृतकर्म्मविघातककर्म्मकरणविषये प्रवर्त्तते। यथा—हस्ती स्नानं कृत्वा जलाशयाद्बहिर्विनिर्गम्य स्वशुण्डादण्डेन धूलिं निजशीर्षपृष्ठोपरि क्षिपति—मलिनीकरोतीति यावदित्येवं प्रकृतेऽपि बोध्यम् ॥ ८९४ ॥

## पुष्पवन्तोपकारन्यायः ॥ ८९५ ॥

"एकयोक्त्या पुष्पवन्तौ दिवाकरनिशाकरौ" इत्यमरः। पुष्पवन्तशब्दो मतुबन्तोऽकारान्तोऽपि। 'पुष्प—विकसने'। भावे घञ्। पुष्पः—प्रकाशस्तद्वन्तावित्यर्थः। एकयोक्त्येति वचनात्पुष्पवन्त इति, पुष्पवानिति वा। सूर्य्यश्चन्द्रो वा न वक्तव्यः। यथा रोदसी इत्येकयोक्त्या द्यावापृथिव्यावुच्येते इति। अकारान्तपक्षे 'अव—रक्षणे' "जॄविशिभ्याञ्झच्" १२६। इत्यौणादिकसूत्रेण बाहुलकाज्झच्प्रत्यये "झोऽन्तः" ७।१।३।इत्यन्तादेशे अवन्त इति सिद्धम्। पुष्पस्य प्रकाशस्यावन्तौ रक्षकावाधाराविति यावत्। शक-

न्ध्वादित्वात्साधुः । 'रविशशिनौ पुष्पवन्ताख्यौ' इति 'धरणीधरशिखरस्थितपुष्पवन्ताभ्याम्' इत्यादिनाममालादिप्रयोगदर्शनादिति । अत एव प्रकृतन्यायेऽपि पुष्पवन्ताभ्यां कृत उपकारः पुष्पवन्तोपकारः । मध्यमपदलोपिसमास इति । यथा पुष्पवन्ताभ्यां स्वस्वसकाशादन्येभ्यो मङ्गलादिग्रहेभ्यो द्वौद्वौ राशी दत्त्वा स्वपार्श्वे चैकैको राशिः स्थापितः, एवमुदाराशयाः परोपकारतया बहुभ्यो बहु दत्त्वा किञ्चिदवशिष्टेनापि संतुल्य सर्वोपरि विराजन्ते । पुष्पवन्तयो राशिवितरणप्रकारस्तु प्रसङ्गगत्या लिख्यते । तदित्थम्–सूर्य्येन्दुभ्यां शीघ्रगामित्वादादौ विदा याचितम् । तस्मै सूर्य्येण कन्याऽराशिश्चन्द्रेण मिथुनराशिर्दत्तः । ततस्तन्न्यूनगतिशुक्राय तुला सूर्य्येण, वृषश्चन्द्रेण दत्तः । तत एवं भौमायाऽलिः सूर्य्येण, मेषश्चन्द्रेण दत्तः । तत एवं बृहस्पतये धनुः ९ सूर्य्यो मीनं तु चन्द्रो दत्तवान् । तत एवं शनैश्चराय सूर्य्यो मकरं कुम्भन्तु चन्द्रोऽदादिति ॥ ८९५॥




## धनुर्गुणन्यायः ॥ ८९६ ॥

अयं न्यायो यथा–कुटिलेऽपि धनुषि शूरा गुणं ज्यामारोपयन्ति, तद्वन्महान्तस्तु स्वभावतोऽतिकुटिलेऽपि जने गुणमारोपयन्तीति विषयेऽवतरति। उक्तञ्च सायणाचार्य्यैः–"आजन्मतोऽतिकुटिलेऽपि जने महान्तस्त्वारोपयन्ति हि गुणं धनुषीव शूराः" इति ॥ ८९६ ॥

## महामत्स्यतीरन्यायः ॥ ८९७ ॥

श्रौतोऽयं न्यायः यथा महामत्स्यस्तीरात्तीरं सञ्चरँस्तीराद्भिन्न एव, न त्वभिन्नो नापि तेन तीरेण लिप्यते, एवमाध्यात्मिकसम्बन्धेन देह्यात्मा जाग्रदादौ सञ्चरँस्तस्माद्भिन्न एव, नापि जाग्रदादिरूपधर्म्मवान्वा । तथा च श्रुतिः—"महामत्स्य उभे कूले सञ्चराति, पूर्वं चाऽपरं चैवमेवाऽयं पुरुष एतान्सञ्चरति, स्वप्नान्तं बुद्धान्तञ्चेति ॥ ८९७ ॥

## प्रपामेलन्यायः ॥ ८९८ ॥

यथा प्रपा पानीयशाला तस्यां नानादिग्भ्यो बहवो जीवा मिलन्ति, द्वितीये क्षणे भिन्नमार्गाः प्रयान्ति, एवं संसारिणो जीवा मिलन्ति वियुञ्जन्तीति ॥ ८९८ ॥

## नैवाश्रितेषु गुणदोषविचारणा स्यादिति न्यायः ॥ ८९९ ॥

अयं पद्येनोपनिबद्धः । तथाहि-"दोषाकरोऽपि कुटिलोऽपि कलङ्कितोऽपि मित्रावसानसमये विहितोदयोपि । चन्द्रस्तथापि हरवल्लभतामुपैति नैवाश्रितेषु गुणदोषविचारणा स्यात् ॥" इति ॥ ८९९ ॥

## क्रियासिद्धिस्सत्त्वे भवति महतां नोपकरण इति न्यायः ॥ ९००

अयमपि पद्येन विवृतः । तथाहि—"घटो जन्मस्थानं मृगपरिजनो भूर्जवसनं वने वासः कन्दादिकमशनमेवं-

विधगुणः । अगस्त्यः पाथोधिं यदकृत कराम्भोजकुहरे क्रियासिद्धिस्सत्त्वे भवति महतां नोपकरणे ॥” इति ॥९००॥

## यस्य दण्डस्तस्य [1]महिषीति न्यायः ॥ ९०१॥

लौकिकगाथारूपोऽयम् ॥ ९०१ ॥

## जीवितोऽपि न जीवेत्स यदि लोकेन दूष्यत इति न्यायः ॥ ९०२ ॥

अयमपि लौकिकगाथारूपः ॥ ९०२ ॥

## मा जीवन्यः पराऽवज्ञादुःखदग्धोऽपि जीवतीति न्यायः ॥ ९०३ ॥

पूर्वसमानविषयः । उक्तञ्च माघकविना—“मा जीवन्यः पराऽवज्ञादुःखदग्धोऽपि जीवति । तस्याऽजननिरेवास्तु जननीक्लेशकारिणः ॥” इति ॥ ९०३ ॥

## भेकोऽपि पादप्रसाराय चेष्टत इति न्यायः९०४

## कुब्जोऽपि चित्रं शयितुं समीहत इति न्यायः ॥ ९०५ ॥

असमर्थस्य समर्थार्हकर्म्मकरणसमीहनेऽवतरतो द्वाविमाविति ॥ ९०४ ॥ ९०५ ॥

## दर्प्पणप्रतिबिम्बन्यायः ॥ ९०६ ॥

अयं न्यायः सुरेश्वराचार्य्येण विवृतः । तथाहि—“अन्तरस्मिन्निमे लोका अन्तर्विश्वमिदं जगत् । बहिर्वन्मायया भाति दर्प्पणे प्रतिबिम्बवत् ॥” इति । अस्यार्थः—इमे

---

1 महीति वा पाठः ।

प्रसिद्धाः प्रत्यक्षादिप्रमाणसिद्धाः लोका विश्वशब्दनिर्दिष्टा अस्मिन्परमात्मन्यन्तर्मध्ये वर्त्तन्ते, न ततो बहिः स्वतन्त्रतयेत्यर्थः । उक्तमेवार्थं प्रकटयति–अन्तर्विश्वमिदं जगदिति। विश्वं सर्वमेवेदं जगदन्तर्नाऽत्र सङ्कोचकारणमित्यर्थः । "ब्रह्मैव भूतानां ज्येष्ठं तेन कोऽर्हति स्पर्द्धितुम् । ब्रह्मन्देवास्त्रयस्त्रिंशद्ब्रह्मन्निन्दुप्रजापती ॥ ब्रह्मन्हि विश्वाभूतानि नावीवान्तस्समाहितः ॥" इति श्रुतिवाक्यशेषः । इदं विश्वं दर्प्पणे प्रतिबिम्बितमिव दर्प्पणान्तर्गतमिवान्तःस्थमेव विश्वं मायया बहिर्वदिति–आभातीति योजना ॥ १०६ ॥

## स्वप्ने नृप इति न्यायः ॥ १०७ ॥

अयं "यथा स्वप्ने नृपो भूत्वा भुक्त्वा भोगान्यथेप्सितान् । चतुरङ्गबलोपेतश्शत्रूञ्जित्वा रणाङ्गणे ॥ परात्पराजितो भूत्वा वनम्प्राप्य तपश्चरन् । मुहूर्त्तमात्रमात्मानं मन्यते कल्पजीवितम् ॥ तथैव जाग्रत्कालेऽपि मनोराज्यं करोत्यसौ । कालनद्योघवेगेन क्षीणमायुर्न पश्यति ॥" इति तत्रैव विवृतः ॥ १०७ ॥

## यत्कार्य्यं जायते यस्मात्तस्मिँस्तत्प्रतितिष्ठतीति न्यायः ॥ १०८ ॥

यथा–"मृत्तिकायां घटस्तन्तौ पटः स्वर्णेऽङ्गुलीयकम् । इति वैशेषिकाः प्राहुस्तथा नैयायिका अपि ॥" इति ॥१०८॥

## सलिलभास्करन्यायः ॥ १०९ ॥

"यथा सलिलमाविश्य बहुधा भाति भास्करः । तथा शरीराण्याविश्य बहुधा स्फुरतीश्वरः ॥" इति ॥ १०९ ॥

## कीलप्रतिकीलन्यायः ॥ ९१० ॥

अयं यथा–"अन्तःकरणसम्बन्धान्निखिलानीन्द्रियाण्यपि । रथांगनेमिवलये कीलिता इव कीलकाः ॥" इति । अस्यार्थः–स्वभावतो बहिर्मुखप्रवृत्तानामिन्द्रियाणां प्रवृत्त्यंकुशाभावे विषयनियमाभावादन्तःकरणवृत्तेस्तन्नियामकता वक्तव्या । तथा च–रथाङ्गस्य रथचक्रस्य नेमिसंज्ञे वलये कीलिता अर्पिताः कीलका अरा इव स्वस्वविषयेषु निखिलान्यपीन्द्रियाण्यन्तःकरणेन नाभिस्थानीयेन नियामकेन सम्बन्धादर्पितानि भवन्तीत्यर्थः ॥ ९१० ॥

## धूल्यन्धकारधूमाभ्रविमुक्तगगनमिति न्यायः ॥ ९११ ॥

अयं वस्तुनोऽतिशुद्धत्वविवक्षायामवतरति । यथा चोक्तम्–"निर्विकल्पं परं ब्रह्म निर्धूताऽखिलकल्पनम् । धूल्यन्धकारधूमाभ्रविमुक्तगगनोपमम् ॥" इति ॥ ९११ ॥

## अन्धाऽनन्धन्यायः ॥ ९१२ ॥

यत्राऽन्धस्सन्ननन्धो भवति, तत्रास्य प्रवृत्तिः । यथा–यदा 'अहं ब्रह्मास्मि' इति वाक्योत्थया धियाऽऽत्मानं योगी पश्यति, तदाऽन्धोऽप्यनन्धो भवति । तथा च श्रुतिः–"तं वा एतं सेतुं तीर्त्वाऽन्धस्सन्ननन्धो भवति" इति । सेतुम्–मर्य्यादाविधारकं परमेश्वरं तीर्त्वा–प्राप्येति श्रुतिपदयोरर्थ इति भीष्मपर्वणि नीलकण्ठः ॥ ९१२ ॥

## अचलं गुणवृत्तमिति न्यायः ॥ ११३ ॥

अयं नीलकण्ठीयभगवद्गीताटीकायाम् अ० ४, श्लो० १८ उक्तः। तथाहि—'कर्म्मणीति। कर्म्मणि—कर्म्माकर्म्मविकर्म्मात्मके देहेन्द्रियादिव्यापारेऽविद्यया प्रत्यगात्मन्यारोपिते सति तत्राऽकर्म्म—कर्म्माभावं नौस्थेन तीरतरौ चलन आरोपिते सति तत्त्वबुद्धया तत्र चलनाभावमिव यः पश्येत्तथाऽचलं गुणवृत्तमिति न्यायेन त्रिगुणात्मकेषु' इत्याद्युक्तम्। विस्तरस्तु तत्रैवेति ॥ ११३ ॥

## कैदारिकन्यायः ॥ ११४ ॥

यथा कैदारिकः केदारेषु कुल्याजलं सञ्चारयन्नेकस्य द्वारं पिधायाऽपरस्योद्घाटयति, तद्वद्वैराग्येण विषयस्रोतः खिलीक्रियतेऽभ्यासेन कल्याणस्रोत उद्घाट्यत इति नीलकण्ठः अ० ६ श्लो० ३५ ॥ ११४ ॥

## ओतप्रोतन्यायः ॥ ११५ ॥

अयम् "मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव" इति अ० ७, श्लो० ७ टीकायां विस्तृत इति ॥ ११५ ॥

## नदीसमुद्रन्यायः ॥ ११६ ॥

अयम् भ० गी० अ० ८, श्लो० ८ टीकायां नीलकण्ठेनोदाहृतः। तथाहि—अहमेव भगवान्सर्वात्मा वासुदेव इति सततमाचार्य्योपदेशमनुध्यायँस्तमेव नदीसमुद्रन्यायेन याति हे पार्थ तथा च श्रुतिः—"यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय। तथा विद्वान्पुण्यपापे

विधूय परात्परं पुरुषमुपैति दिव्यम् ॥ ” इत्युक्तम् । विषयान्तरप्रतिपादनादन्यस्मिन्न्याये नास्ति पुनरुक्तदोषावकाश इति ॥ ९१६ ॥

## आरोहाऽवरोहणन्यायः ॥ ९१७ ॥

अयं योगशास्त्रे व्यवहृतः । तथाहि—मूलाधारादिब्रह्मरन्ध्रान्तस्थानेष्वारोहाऽवरोहन्यायेन सञ्चारितपवनोऽन्तकाले भ्रुवोर्मध्य आज्ञाचक्रे प्राणमावेश्येत्याद्युक्तम् । इह विस्तरभियोपरम्यत इत्यन्यत्र विस्तरः ॥ ९१७ ॥

## दृष्टिसृष्टिन्यायः ॥ ९१८ ॥

अयमपि नीलकण्ठ्यां व्यवहृतः । तथाहि—अयं भावः-प्रजापतेः स्वापकाले तत्कल्पितः स्थावरजङ्गमप्रपञ्चः सर्वोऽपि तदीयेऽज्ञानेऽव्याकृताख्ये लीयते रात्र्यागमे । तथा दिवसागमे पुनस्तत एव यथापूर्वमाविर्भवति । एवं दृष्टिसृष्टिन्यायेनास्मत्कल्पितोऽप्ययं वियदादिप्रपञ्चोऽस्मत्सुषुप्तौ लीयतेऽस्मत्प्रबोधे यथापूर्वम्प्रादुर्भवतीति ॥ ९१८ ॥

## अयस्कान्तन्यायः ॥ ९१९ ॥

अयमुदासीनत्वे कर्मप्रवर्त्तकत्वविवक्षायामवतरति । यथा कूटस्थाऽध्यक्षाऽयस्कान्तकल्पप्रवर्त्तकः सँश्वराऽचरं जगदुत्पादयति, तथा प्रकृतेऽपि बोध्यमिति ॥ ९१९ ॥

## ऊहाऽपोहन्यायः ॥ ९२० ॥

अन्यथाश्रुतस्य शब्दस्याऽन्यथालिङ्गवचनादिभेदेन विपरिणमनमूहः । उक्तं च महाभाष्ये—“ऊहः खल्वपि—न

सर्वैर्लिङ्गैर्न च सर्वाभिर्विभक्तिभिर्वेदे मन्त्रा निगदितास्ते चावश्यं यज्ञगतेन पुरुषेण यथायथं विपरिणमयितव्याः” इति। अत्र कैयटो यथा—तत्राऽग्नेर्मन्त्रोऽस्ति—“अग्नये त्वा जुष्टं निर्वपामि” तत्र “सौर्य्यं चरुं निर्वपेद्ब्रह्मवर्चसकामः” इति सौर्य्ये चरौ मन्त्र ऊह्यते—“सूर्य्याय त्वा जुष्टं निर्वपामि” इति। “अपूर्वोत्प्रेक्षणमूहः” इति जैमिनिः। ‘अध्याहारस्तर्क ऊहः’ इत्यमरः। तर्कनिराकरणमपोहः, अपगत ऊह इत्यर्थः। इमौ द्वौ मिलित्वा यत्र स्तः, तत्राऽयं न्यायः प्रवर्त्तते। यथा—ऊहापोहकुशलोऽयं जनः। ऊहापोहकौशलहीनश्चायमिति ॥ ९२० ॥

## संवादिभ्रमन्यायः ॥ ९२१ ॥

यथा कश्चिन्मणिप्रभां मणिबुद्ध्या पश्यन्भ्रान्त एव, तथापि तद्ग्रहणकाले मणिं लभतेऽतः स संवादिभ्रमः, एवं त्वंपदार्थन्तत्पदार्थमणिप्रभाभूतं तत्पदार्थबुद्ध्या भावयन्व्यवहारतो भ्रान्त एव, तथापि तत्साक्षात्कारकाले तदनन्यस्य तत्पदार्थस्य साक्षात्कारोऽपि संवादिभ्रमन्यायेन जायत इति नीलकण्ठः। संवादिनी सदृशीत्यर्थः। तस्या भ्रमः संवादिभ्रम इत्यर्थः। ‘षड्जसंवादिनी’ इति रघुरिति ॥ ९२१ ॥

## कुमूलधान्यन्यायः ॥ ९२२ ॥

अयमपि नीलकण्ठेन व्यवहृतः। तथाहि—“विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्” इति गीताप्रतीकमादाय कुसूलेन धान्यमिव मयेदं जगद्विष्टब्धमित्युक्तमिति ९२२॥

## न हि मरुमरीचिसरसी क्रमशः शुष्यतीति न्यायः ॥ ९२३ ॥

अयम्भ्रान्तिविषयविवक्षायामवतरतीति स्पष्टः ॥९२३॥

## नद्यम्बुवेगन्यायः ॥ ९२४ ॥

अयं श्रीमद्भगवद्गीतायां विवृतः तथाहि "यथा नदीनां बहवोऽम्बुवेगाः समुद्रमेवाभिमुखा द्रवन्ति । तथा तवाऽमी नरलोकवीरा विशन्ति वक्त्राण्यभिविज्वलन्ति ॥" इति ॥ ९२४ ॥

## जलचन्द्रन्यायः ॥ ९२५ ॥

यथा—जलपात्रेषु चंद्रप्रातिबिम्बानि चन्द्राद्दूरस्थानि भिन्नानि च नानाविधानि दृश्यन्ते। वस्तुतस्तु नैवमेवंविषयव्यवस्थायामयं प्रवर्त्तते। तथाच श्रुतिः—"एक एव तु भूतात्मा भूतेभूते व्यवस्थितः। एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ॥" इति ॥ ९२५ ॥

## पतनान्तास्समुच्छ्रया इति न्यायः ॥९२६॥

यथा—ये पदमूर्द्ध्व गच्छन्ति तेषां पातोऽप्यवश्यं भावीति विषये प्रकृतन्यायसञ्चार इति संक्षेपः ॥ ९२६ ॥

## वह्निविस्फुलिङ्गन्यायः ॥ ९२७ ॥

यथा वह्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवैतस्मादात्मनः सर्व एत आत्मानो व्युच्चरन्तीति विषयेऽस्य प्रचारः ॥ ९२७॥

## प्रमदान्यायः ॥ ९२८ ॥

यथा—एकस्यां प्रमदायां भर्त्तुः सुखं जायते, तामविन्द-

तश्चैत्रस्य दुःखं जायते, तस्यामेव सपत्न्या द्वेष इति प्रमदयै-कयैव सर्वे भावा भवन्तीति विषयेऽस्य प्रवृत्तिरिति ॥ १२८ ॥

## सर्वारम्भा हि दोषेण धूमेनाग्निरिवावृता इति न्यायः ॥ १२९ ॥

स्पष्टार्थोऽयं भगवद्गीतावाक्यात्मकः ॥ १२९ ॥

## शीतलाप्रस्तरन्यायः ॥ १३० ॥

यथा—शीतलाप्रस्तरः पूज्यते तोल्यतेऽपि जनैरेवंविध-विषयविवक्षायां प्रवर्त्ततेऽयमिति ॥ १३० ॥

## गिरिमुत्पाट्य मूषिकोद्धृतेति न्यायः ॥१३१॥

यत्र कृतेऽपि बह्वायाससाध्ये कर्मणि, तुच्छफलोपलब्धि-स्तत्राऽयं प्रवर्त्तत इति । तथा चोक्तं पञ्चतन्त्रे "खनन्नाखु-बिलं सिंहः पाषाणशकलाऽऽकुलम् । प्राप्नोति नखभङ्गं वा फलं वा मूषको भवेत् ॥" ॥ १३१ ॥

## न हि प्रत्यक्षविरुद्धं शास्त्रसहस्रेणाऽपि बो-धयितुं शक्यमिति न्यायः ॥ १३२ ॥

यथा—न जलादेर्नवनीतजनकत्वादिकं बोध्यतइति१३२

## यदन्नः पुरुषो लोके तदन्नास्तस्य देवता इति न्यायः ॥ १३३ ॥

यथा—विश्वामित्रर्षिरश्वयाजनीं श्वपचगृहादाहृत्येन्द्रा-दिदेवोद्देशेन त्यक्त्वा भोक्ष्यामीति मनसि कृत्वा यदा यथा-देवतं तद्भागाँस्त्यक्तुं प्रवृत्तस्तदा तुष्टैरिन्द्रादिभिर्वृष्टिः सृष्टा, सस्यं च तत्क्षणमेव प्रभूतमभूदित्याख्यायिका पुरा-णेषु स्मर्य्यत इत्यन्यत्र विस्तरः ॥ १३३ ॥

## अज्झल्न्यायः ॥ ९३४ ॥

अचः स्वराः । हलो व्यञ्जनानि । अयं श्लोकेन विवृतः । तथाहि—"एकाकिनोऽपि राजन्ते सारसत्त्वास्स्वरा इव । व्यञ्जनानीव निस्सत्त्वाः परेषामनुगामिनः ॥" इति ॥ ९३४ ॥

## सलिलादग्निरुत्थित इति न्यायः ॥ ९३५ ॥

अयमपि पद्येनोपनिबद्धः । तथाहि—"विद्या हि विनयाऽवाप्त्यै सा चेदविनयावहा । किं कुर्म्मः कुत्र वा यामः सलिलादग्निरुत्थितः ॥" इति ॥ ९३५ ॥

## स्वस्थे चित्ते वृत्तयः संस्फुरन्तीति न्यायः ॥ ९३६ ॥

अयमप्येवम्—"चिन्ताऽऽक्रान्तं धातुबद्धं शरीरं नष्टे चित्ते धातवो यांति नाशम् । तस्माच्चित्तं सर्वतो रक्षणीयं स्वस्थे चित्ते वृत्तयस्संस्फुरन्ति ॥" इति ॥ ९३६ ॥

## पञ्जरस्थसिंहन्यायः ॥ ९३७ ॥

अयमप्येवम् । यथा—"स्नेहतन्तुमयैः पाशैर्बद्धः सन्तानरज्जुभिः । पञ्जरस्थो यथा सिंहः समर्थोऽपि वशीकृतः ॥" इति ॥ ९३७ ॥

## लपोरशंखन्यायः ॥ ९३८ ॥

अयं श्लोकबद्धः । यथा—"शंखिनी काञ्चनं दद्यादहं शंखो लपोरकः । वदामि बहुवाक्यानि न ददामि कपर्दिकाम् ॥" इति । लपतीति—लपोरकः । 'लप—व्यक्तायां वाचि' । "किशोरादयश्च ६८" इत्यौणादिक ओरन् प्रत्ययः, ततः स्वार्थे कः ॥ ९३८ ॥

**न साहसमनारुह्य नरो भद्राणि पश्यतीति न्यायः ॥ १३९ ॥**

स्पष्टार्थोऽयमिति ॥ १३९ ॥

**मर्कटमदिरापानादिन्यायः ॥ १४० ॥**

स्पष्टोऽयम् ॥ १४० ॥

**आपद्यपि सतीवृत्तं किं मुञ्चन्ति कुलस्त्रिय इति न्यायः ॥ १४१ ॥**

अयम्–पतिव्रतासतीत्वरक्षणविषये प्रवर्त्तत इति॥१४१॥

**पञ्चभिर्मिलितैः किं यज्जगतीह न साध्यत इति न्यायः ॥ १४२ ॥**

अयम्–पञ्चभिरेकमतिजनैः सर्वमेव साध्यत इति विवक्षायामवतरतीति ॥ १४२ ॥

**ऐकमत्ये द्वयोरेव किमसाध्यं भवेदिति न्यायः॥१४३॥**

अयञ्चैकमतिविशिष्टौ द्वावपि सर्वं स्वाऽभीष्टं साधयत इति विषये प्रचरतीति ॥ १४३ ॥

**ईर्ष्या हि विवेकपरिपंथिनीति न्यायः॥१४४॥**

"परोत्कर्षाऽक्षमेर्ष्या स्याद्दौर्जन्यान्मन्युतोऽपि च"। सा विवेकस्य इदं हेयमिदमुपादेयमिति विवेचनायाः परिपन्थिनी शत्रुरूपेत्यर्थः। स्पष्टमन्यदिति ॥ १४४ ॥

**प्रतिभातश्च पश्यन्ति सर्वं प्रज्ञावतां धिय इति न्यायः ॥१४५॥**

"प्रज्ञा नवनवोन्मेषशालिनी प्रतिभा मता" । सर्वतोमुखी बुद्धिरिति यावदिति स्पष्टार्थोऽयम् ॥ ९४५ ॥

## शीलं हि विदुषां धनमिति न्यायः ॥ ९४६ ॥

स्पष्टार्थोऽयम् ॥ ९४६ ॥

## अतर्क्या कुट्टनीकूटरचना विधेरपीति न्यायः ॥ ९४७ ॥

परनारीं पुंसा योजयित्री 'कुट्टनी' इति प्रसिद्धा । 'कुट्टनी सम्भली समे' इत्यमरः । तस्याः कूटरचना, कपटरचनेत्यर्थः । "मायानिश्चलयन्त्रेषु कैतवाऽनृतराशिषु । अयोघने शैलशृङ्गे सीराङ्गे कूटमस्त्रियाम्॥" इत्यमरः । अन्यत्स्पष्टम् ॥ ९४७ ॥

## कः प्राज्ञो वाञ्छति स्नेहं वेश्यासु सिकतासु चेति न्यायः ॥९४८॥

स्पष्टः ॥ ९४८ ॥

## प्रायेण भार्य्यादौःशील्यं स्नेहान्धो नेक्षते जन इति न्यायः ॥ ९४९ ॥

स्पष्टः ॥ ९४९ ॥

## विशुद्धसत्त्वा विरलाः पुनः स्त्रिय इति न्यायः ॥ ९५० ॥

स्पष्टः ॥ ९५० ॥

## नववैधव्यमसह्यवेदनमिति न्यायः ॥९५१ ॥

असह्या दुस्सहा वेदना यस्मिँस्तत्तथोक्तम् । विधवाया मृतभ-

र्तृकाया भावो वैधव्यम्। नवं च तद्वैधव्यं चेति नववैधव्यम्। नवग्रहणं दुःसहत्वद्योतनार्थम्। अन्यत्स्पष्टमिति ॥ ९५१ ॥

## न खलु प्रेम चलं सुहृज्जने इति न्यायः॥ ९५२ ॥

स्पष्टः ॥ ९५२ ॥

## शशिना सह याति कौमुदी सह मेघेन तडित्प्रलीयते। प्रमदा पतिवर्त्मगा इति प्रतिपन्नं हि विचेतनैरपि ॥ इति न्यायः ९५३

स्पष्टः ॥ ९५३ ॥

## पदं सहेत भ्रमरस्य पेलवं शिरीषपुष्पं न पुनः पतत्रिण इति न्यायः ॥ ९५४ ॥

पेलवं मृदुलं शिरीषपुष्पं भ्रमरस्य भृङ्गस्य पदं पदस्थितिं सहेत पतत्रिणः पुनः पक्षिणस्तु पदं न सहेत इति कुमारसम्भवे स० ५, श्लो० ४। अतिसौकुमार्य्यविवक्षायामयमवतरतीति ॥ ९५४ ॥

## न धर्म्मवृद्धेषु वयः समीक्ष्यत इति न्यायः ९५५॥

तथोक्तं मनुना—"न तेन वृद्धो भवति येनास्य पलितं शिरः। यो वै युवाऽप्यधीयानस्तं देवाः स्थविरं विदुः ॥" इति। तन्मूलकोऽयं न्यायः ॥ ९५५ ॥

## वृक्षवृत्तिन्यायः ॥ ९५६ ॥

अयम्—विनोद्यमं स्वतः सिद्धवस्तुप्राप्तिजीवनविवक्षायां प्रवर्त्तते। यथा—वृक्षो मेघोदकेन चन्द्रकिरणैश्च जीवतीति प्रसिद्धम्। तथाऽऽह कालिदासः-'वृक्षवृत्तिव्यतिरिक्तसाधनः' इत्येतेन ॥ ९५६ ॥

बकवृत्तिन्यायः ॥ ९५७ ॥

अजगरवृत्तिन्यायः ॥ ९५८ ॥

इमौ द्वावपि न्यायौ व्याख्यातविषयौ ज्ञेयौ स्पष्टाऽभिप्रायाविति ॥ ९५७ ॥ ९५८ ॥

अरण्यचन्द्रिकान्यायः ॥ ९५९ ॥

रमणाऽभावे यत्र रमणीशृङ्गाररचना, तत्राऽस्य संचारः । अत एव 'स्त्रीणां प्रियालोकफलो हि वेषः' इत्युक्तिः सङ्गच्छत इति ॥ ९५९ ॥

न हि प्रियं प्रवक्तुमिच्छन्ति मृषा हितैषिण इति न्यायः ॥ ९६० ॥

भारविश्लोकरूपोऽयम् ॥ ९६० ॥

हितं मनोहारि च दुर्ल्लभं वच इति न्यायः ९६१

इति भारविः स्पष्टः ॥ ९६१ ॥

अनार्य्यसङ्गमाद्वरं विराधोऽपि समं महात्मभिरिति न्यायः ॥ ९६२ ॥

इति भारविः स्पष्टः ॥ ९६२ ॥

ननु वक्तृविशेषनिस्पृहा गुणगृह्या वचने विपश्चित इति न्यायः ॥ ९६३ ॥

इति भारविः ॥ ९६३ ॥

बालादपि सुभाषितं ग्राह्यमिति न्यायः ९६४॥

इति भारविः स्पष्टः ॥ ९६४ ॥

प्रणमन्त्यनपायमुत्थितं प्रतिपच्चन्द्रमिव प्रजा नृपामिति न्यायः ॥ ९६५ ॥

इति भारविः ॥ ९६५ ॥

श्रियं हि सततोत्साही दुर्बलोऽपि समश्नुत इति न्यायः ॥ ९६६ ॥

इति भारविः ॥ ९६६ ॥

लघयन्खलु तेजसा जगन्न महानिच्छति भूतिमन्यत इति न्यायः ॥ ९६७ ॥

इति भारविः ॥ ९६७ ॥

ज्वलितं न हिरण्यरेतसं चयमास्कन्दति भस्मनां जन इति न्यायः ॥ ९६८ ॥

इति भारविः ॥ ९६८ ॥

अभिभूतिभयादसूनतः सुखमुज्झन्ति न धाम मानिन इति न्यायः ॥ ९६९ ॥

इति भारविः ॥ ९६९ ॥

पदातिन्यायः ॥ ९७० ॥

यथा—बुद्धिबलापरपर्य्यायचतुरंगाख्य (शतरंज) क्रीडने पदातिर्ऋजुमार्गेण चलन्हननावसरे वक्रमार्गमुररीकरोति। अयं भावः—बुद्धिबलाख्य (शतरंज) क्रीडने कल्पितौ राजमन्त्रिणौ सह चतुरङ्गबलेनाऽन्योन्यं युध्यतः। तत्र तेषां गति भेदोऽस्ति। पदातेस्तु ऋजुपथेन गमनम्, वक्रमार्गेण चाग्रस्थशत्रुहन्तृत्वमिति तद्विदो वदन्तीति, एवं दुर्जनाऽऽ

चारो ज्ञेयः। तथा चोक्तम्-"ऋजुना पथा चलन्नपि हनने वक्रां गतिं कलयन् । बुद्धिबलाख्यं क्रीडन्पदातिरिव दुर्ज्जनो ज्ञेयः ॥" इति ॥ १७० ॥

## श्वपिशुनन्यायः ॥ १७१ ॥

यथा श्वा तथा पिशुनः, यथा पिशुनस्तथा श्वेति विषयविवक्षायामयमवतराति । अयं पद्येनापि विवृतः । तथाहि-"अस्थिरतया प्रकृत्या वालध्यासक्ततया च वक्रतया । ज्ञाति विरोधेन पुनः सदृशस्सदृशः शुनः पिशुनः ॥" इति ॥१७१॥

## दुर्ज्जनगर्द्दभन्यायः ॥ १७२ ॥

यथा दुर्ज्जनस्तथा गर्द्दभः, यथा गर्दभस्तथा दुर्ज्जन इत्यर्थविवक्षायामस्य प्रवृत्तिः। अयमपि श्लोकेन निबद्धः।तथाहि "मलिनीकुर्वन्नर्ज्जुनवर्त्म मदी भवति राधेयः।यदि ताडनादि लभते तथापि तच्छील एव खलः॥" अस्यार्थः—खलस्तथापि तच्छील एव।कथम्।तदाह-अर्ज्जुनवर्त्म श्वेतमार्गम्।'धवलोऽर्जुनः' इत्यमरः । मलिनीकुर्वन्—किञ्च राः—धनं यदि धेयः-निधातुं योग्यः—सञ्चितो भवति, तदा मदी भवति, मदवान्भवति । पुनर्यदि ताडनादि लभते—देहलीदीपकन्यायेन मदीत्यस्योभयत्र सम्बन्धः। गर्दभपक्षे खलःरलयोरभेदात्खरस्तथापि तच्छील एव किङ्कुर्वन्—अर्जुनवर्त्म उज्ज्वलमार्गं लोठनाद्धूल्युत्थापनेन मलिनीकुर्वन् । पुनर्या राधे वैशाख मासे मदी मत्तो भवति—पुनर्यदि ताडनादि लभते, तथापि दुष्टं शीलं न त्यजति । अथाऽर्जुनस्य मध्यमपाण्डवस्य वर्त्म

मार्गं मलिनीकुर्वन्राधेयः कर्णः मदी भवतीत्यर्थोऽपि ध्वनित इति ॥ १७२ ॥

**स्वत एव सतां परार्थता ग्रहणानां हि यथा यथार्थतेति न्यायः ॥ १७३ ॥**

अयं श्रीहर्षोक्तिरूपः। अस्यार्थः—हि यतो यस्मात् सतां साधूना परार्थता परोपकारित्वं स्वत एव स्वभावत एव भवतीति शेषः। यथा—ग्रहणानां ज्ञानानां स्वतः परार्थता प्रामाण्यम्। ज्ञानानां स्वतः प्रामाण्यं न तु परत इति मीमासकाः। यद्वा गृह्यन्ते ज्ञायन्तेऽर्था एभिरिति ग्रहणानि इन्द्रियाणि, तेषां यथार्थता-अर्थाननतिक्रम्य वर्तिता, स्व-स्वार्थग्राहकतेत्यर्थः। यथा श्रवणादीन्द्रियाणि सान्निकृष्टं शब्दाद्यर्थमन्यमनपेक्ष्यैव प्रत्यक्षयन्ति, तथा साधवः परस्य प्रेरणमनपेक्ष्यैवोपकुर्वन्तीति भावः ॥ १७३ ॥

**यद्दृष्टं दृश्यते स्वप्नेऽननुभूतं कदापि नेति न्यायः ॥ १७४ ॥**

स्पष्टोऽयं नैषधटीकायां विवृत इति ॥ १७४ ॥

**सद्भावार्द्रः फलति न चिरेणोपकारो मह-त्स्विति न्यायः ॥ १७५ ॥**

अस्यार्थः—महत्सु गुणगरिष्ठेषु विषये योऽसावुपकारः स चिरेण दूरेण न फलाति, किन्तु तत्कालमेव फलति। कथम्भू-त उपकारः—सद्भावार्द्रः सम्यक्स्नेहरससहित इत्यन्वय इति कालिदासः ॥ १७५ ॥

## मन्दायन्ते न खलु सुहृदामभ्युपेतार्थकृत्या इति न्यायः॥ ९७६॥

अस्यार्थः–सुहृदां मित्राणां ये अभ्युपेतार्थकृत्याः-अङ्गीकृतपरकार्य्यकरणदृढप्रतिज्ञाः सत्पुरुषास्ते न मन्दायन्ते नाऽऽलस्यं कुर्वन्तीत्यन्वय इति कालिदासः॥ ९७६॥

## गोपगृहिणीन्यायः॥ ९७७॥

अयं पद्येनोपनिबद्धः। तथा हि–"हत्वा नृपं पतिमवाप्य भुजङ्गदष्टं देशान्तरे विधिवशाद्गणिकाऽस्मि जाता। पुत्रं स्वकं समधिगम्य चितां प्रविष्टा शोचामि गोपगृहिणी कथमद्य तक्रम्"अस्याऽऽख्यायिकेत्थम्-काचिन्नृपपत्नी व्यभिचारिणी दुष्टा निजपतिं नृपं विषेण हत्वा स्वेष्टोपपतिम्प्रति गता तं तत्र दैवात्सर्प्पेण दष्टं मृतं प्राप्य निराशा सती देशान्तरे गत्वा वेश्या जाता। तत्र दैवाद्वाड्ंयवस्थाया पूर्वपतिनृपोत्पन्ननिजसुतं वेश्याधर्म्मेण संगता। तत्र वार्त्तालापनद्वारा तद्वयोर्मिथो मातापुत्रत्वप्रत्यभिज्ञा जाता। ततस्तत्पापप्रायश्चित्तार्थं मातापुत्रौ नदीतीरे चितां प्रविष्टौ। पुत्रस्त्वग्निना दग्धो मृतः। इयं दुष्टा तु चितासकाशादुत्प्लुत्य नद्यां पतिता। ततः केनचिद्गोपेन निष्कास्य निजगृहिणी कृता। तत्र सा कदाचित्तक्रविक्रयार्थं मन्थनीं शिरसि धृत्वा गता। तत्र रथ्यायां दैवात्तच्छिरसो मन्थनी पतिता भग्ना च। तक्रं च नष्टं दृष्ट्वा स्वपूर्ववृत्तांतं स्मृत्वा प्रोवाच–हत्वा नृपमित्यादि। अयं न्यायोऽनिष्टपरम्पराप्राप्तिविषये प्रवर्त्तत इति॥ ९७७॥

मञ्जूषाऽऽखुन्यायः ॥ १७८ ॥

अयं न्याय इष्टार्थसमुद्यमेऽनिष्टार्थप्राप्तिविषये सञ्चरति। यथा—कदाचित्कश्चिन्मूषको भक्ष्याऽऽशया सर्प्पमञ्जूषां दृष्ट्वा प्रविष्टस्तत्र तेन भक्षित इति ॥ १७८ ॥

यो वै चित्तेन दूरस्थः समीपस्थो हि दूरत इति न्यायः ॥ १७९ ॥

स्पष्टः ॥ १७९ ॥

यो यस्य मित्रं न हि तस्य दूरमिति न्यायः ॥ १८० ॥

स्पष्टः ॥ १८० ॥

न हि कृतमुपकारं साधवो विस्मरन्तीति न्यायः ॥ १८१ ॥

स्पष्टः ॥ १८१ ॥

शूरा हि प्रणतिप्रिया इति न्यायः ॥ १८२ ॥

स्पष्टः ॥ १८२ ॥

न्यग्रोधबीजन्यायः ॥ १८३ ॥

स्वल्पमपि सूक्ष्ममपि वस्तु सुपात्रधृतं यत्र बहुशो विस्तृतं भवेत्तत्राऽयं प्रवर्त्तते। यथा न्यग्रोधबीजं स्तोकमपि सुक्षेत्र उप्तं सद्बहुविस्तीर्णतां याति, तथा प्रकृतेऽपि ॥ १८३ ॥

उद्दीप्ते भवने च कूपखनने प्रत्युद्यमः कीदृश इति न्यायः ॥ १८४ ॥

स्पष्टः ॥ १८४ ॥

## कुसुमस्तबकन्यायः ॥ ९८५ ॥

यथा पुष्पस्तबकं द्विगतिकम्भवति—सर्वलोकमूर्द्ध-स्थितिर्वा वने विशीर्णता, तथा महात्मनामपीत्येवंवि-षयेऽस्य प्रवर्त्तनमिति ॥ ९८५ ॥

## सर्वे गुणाः काञ्चनमाश्रयन्तीति न्यायः ॥ ९८६ ॥

प्रसिद्धाऽभिप्रायकोऽयम् ॥ ९८६ ॥

## होतारमपि जुह्वानं स्पृष्टो दहति पावक इति न्यायः ॥ ९८७ ॥

अयम्—चण्डकोपाना कश्चिदपि प्रियो न भवतीति द्योतयतीति ॥ ९८७ ॥

## भिल्लीचन्दनन्यायः ॥ ९८८ ॥

अयं पद्येन विवृतः । तथाहि—" अतिपरिचयादवज्ञा सन्ततगमनादनादरो भवति । मलये भिल्लपुरन्ध्री चन्दन-तरुमिन्धनं कुरुते ॥ " इति ॥ ९८८ ॥

## चन्दनगुणन्यायः ॥ ९८९ ॥

अयं भर्त्तृहरिणा विवृतः तथाहि—"किन्तेन हेमगिरिणा रजताऽद्रिणा वा यत्राश्रिताश्च तरवस्तरवस्त एव । मन्यामहे मलयमेव यदाश्रयेण कंकोलनिम्बकुटजा अपि चन्दनाः स्युः ॥" इति ॥ ९८९ ॥

## कन्दुकन्यायः ॥ ९९० ॥

यथा कन्दुकः कराऽऽघातैः पातितोऽपि स्वभावत एवो-त्पतति, तथा साधुवृत्तयो भवन्तीति ॥ ९९० ॥

## हंसकाकन्यायः ॥ ९९१ ॥

अयं श्लोकोपनिबद्धः । तथाहि—"इभतुरगशतैः प्रयान्ति मूढा गुणवन्तो विबुधाश्चलन्ति पद्भ्याम् । गिरिशिखरगताऽपि काकपंक्तिः पुलिनगतैर्न समेति राजहंसैः ॥" इति ॥ ९९१ ॥

## विवेकभ्रष्टानां भवति विनिपातः शतमुख इति न्यायः ॥ ९९२ ॥

स्पष्टः ॥ ९९२ ॥

## क्षते प्रहारा निपतन्त्यभीक्ष्णमिति न्यायः ॥ ९९३ ॥

अयमापद्यापत्सत्त्वे प्रवर्त्तत इति ॥ ९९३ ॥

## तन्तुन्यायः ॥ ९९४ ॥

अयं समुदायस्य कार्य्यसाधकत्वविवक्षाया प्रवर्त्तते । यथा-तन्तवः सूत्राणि बहूनि मिलितानि कार्य्यं साधयन्ति, तथा महान्तोऽपि मिलिताः स्वकार्यं साधयन्तीति भावः ॥९९४॥

## यूपरशनान्यायः ॥ ९९५ ॥

प्रायश्शास्त्रीयोऽयं न्यायः । तथा च श्रुतिः-"यदेकस्मिन्यूपे द्वे रशने परिव्ययति तस्मादेको द्वे जाये विन्दते यन्नैका रशनां द्वयोर्य्यूपयोः परिव्ययति तस्मान्नैका द्वौ पती विन्दते" । इति तैत्तिरीयसंहिता ६-६ । ४ । ५ । ७ । श्रुत्यार्थस्त्वेवम्—यद्यस्मादेकस्मिन्यूपे यज्ञीयसंस्कृतपशुबन्धनकाष्ठे स च वेदे बैल्वः खादिरो वा यूपस्स्यादित्युच्यते ।

तस्य परिमाणादिर्यथा स्मृतौ—“चतुर्हस्तो भवेद्यूपो यज्ञवृक्ष-समुद्भवः । वर्तुलः शोभनः स्थूलः कर्त्तव्यो वृषमौलिकः ॥” इति । भविष्ये च—“बिल्वस्य बकुलस्यैव कलौ यूपः प्रशस्यते”इति सामवेदिनां वृषोत्सर्गतत्त्वमिति । युवन्ति बध्नन्त्यस्मिन् पशुमिति यूपस्तत्र द्वे रशने परिव्ययति, संव्रियत इत्यर्थो बाहुलकादिति । रशना रज्जुविशेषस्तस्मादेकः पुरुषो द्वे जाये विन्देत—द्वे जाये स्त्रियौ परिणयेदित्यर्थः । यद्यस्मादेकां रशनां द्वयोर्य्यूपयोर्न्न परिव्ययति—न संवृणुते, तस्मान्नैका स्त्री द्वौ पती विन्देतेत्यर्थः । एतेन विधवाविवाहं स्वीकुर्वन्तः परास्ता इति । यत्तु—एका स्त्री एकस्मिन्काले द्वौ पती न विन्देत, कालान्तरे तु विन्देतैवेति तात्पर्य्यमस्याः श्रुतेरिति—तन्न—यदेकस्मिन्निति श्रुतावेककालपदाऽभावादित्यन्यत्र विस्तरः ॥ ९९५ ॥

## प्रकृतिवदनुकरणम्भवतीति न्यायः ॥९९६॥

प्रकृतिरत्र परमाऽऽत्मेति गृह्यते । अनुकरणञ्च सदृशीकरणम् । यथा—परमाऽऽत्मसदृशा एव तदवतारा इति बोध्यमित्यन्यत्र विस्तरः ॥ ९९६ ॥

## अनुकरणं हि शिष्टस्य साधु भवतीति न्यायः ॥ ९९७ ॥

यथा—लोके य एवमसौ ददाति, य एवमसौ यजते, य एवमसावधीत इति । तस्याऽनुकुर्वन्दद्याच्च यजेत चाऽधीयीत च सोऽप्यभ्युदयेन युज्यत इति “ऋलृक्” सूत्रमहाभाष्ये सुविस्तर इति ॥ ९९७ ॥

## प्रत्यासत्तिन्यायः ॥ ९९८ ॥

यत्र शीघ्रोपस्थितिविवक्षा, तत्राऽस्यावतार इति ॥९९८॥

## बधिरान्मन्दकर्णः श्रेयानिति न्यायः ॥९९९॥

स्पष्टः ॥ ९९९ ॥

## परोपकाराय सतां विभूतिरिति न्यायः॥१०००॥

यत्र परोपकारविवक्षा, तत्राऽस्य प्रवृत्तिरिति । उक्तं च-"परीनिर्म्मथ्य वाग्जालमिदमेव सुनिश्चितम् । नोपकारात्परं पुण्यं नाऽपकारादघं परम् ॥" इति शम् ॥ १००० ॥

वैक्रमे शिवनेत्रषणिनिधिचन्द्रसम्मितहायने
श्रावणे धवले दले फणिपञ्चमीयुतगीष्पतौ ॥
सङ्ग्रहो भुवनेशदत्तयशोऽर्थको मुलतानके
ग्रन्थ एष समाप्तिमत्र गतः प्रसीदतु शङ्करः ॥ १ ॥

इति श्रीमद्विद्वद्वृन्दवन्दितपादारविन्दश्रीमन्महानुभाव-श्रीपण्डितविभवरामशिष्यमुलताननगरवास्तव्यसे-तुपाल्लोपनामकठाकुरदत्तशर्म्मविरचितभुवनेश-न्यायसाहस्रीग्रन्थस्योत्तरार्द्धं समाप्तम् ॥

समाप्तश्चायं ग्रन्थः ॥

